ॐ

# समर्पणम्

गुणिगणभूषण
परमविचक्षण
लब्धसुशिक्षणकीर्तेः ।
प्रणयपरीक्षण
सदयनिरीक्षण
मधुरमनोहरमूर्तेः ॥
मित्रकुलोद्भव
सज्जनवैभव
वैद्यविकस्थितबुद्धेः ।
रसनिगमादित
सुबहुपरीक्षित
मार्गकृतशविशुद्धेः ॥

श्रीमत्परमपूज्यायुर्वेदार्णवकर्णधारशिरोमणेः
श्रीगुरुवर्य कविराज नरेन्द्रनाथ मित्रमहोदयस्य

करकमलयुगले
समर्प्यते
इयं
रसतरङ्गिणी

तथा च—

यदेव सततं मया ह्यधिगत भवद्भ्यः पुरा
तदेव खलु साम्प्रतं वत समर्पयेयं कथम् ।
तथापि विनयानतो लघुनिबन्धरूपेण तत्
भवद्धृदयतुष्टये किमिव नार्पयेयं मुदा ॥

इति निवेदयति
घिल्डियालोपाह्वः सदानन्दशर्मा

# भूमिका

अयि आयुर्वेदार्णवकर्णधारधुरीणाः ! रसनिगमपारावारपारीणाः !! प्राणाचार्यशिरोमणयः !!! विदिततरमेवैतत्तत्रभवतां भवतां यत्सुरभारती-साहित्यस्य गौरवास्पदभूतासु रसमूलिकाशस्त्राभिधेयासु तिसृष्वपि चिकित्सासु रसचिकित्साया एव प्राधान्यम्। अत एव आमनन्त्येव वृद्धवैद्या —

"उत्तमो रसवैद्यस्तु मध्यमो मूलिकादिभिः।
अधमः शस्त्रदाहाभ्याम्"

अपि च रसचिकित्सकचूडामणिना श्रीगोपालकृष्णेन रसेन्द्रसारसग्रह-नामकस्वसंगृहीतग्रन्थोपक्रमेऽपि समर्थितमस्य प्राशस्त्यम्। तथाहि—

"अल्पमात्रोपयोगित्वादरुचेरप्रसङ्गतः।
क्षिप्रमारोग्यदायित्वादौषधेभ्योऽधिको रसः॥"

एतावतैवास्या रसचिकित्सायाः प्राशस्त्यमध्यवसीयते यदियमादिदेवेन महादेवेन शतसहस्रपद्यनिबद्धसंहितात्मकतया सर्वप्रथममाविष्कृतेति।

अपि च समुपेयसुखावहपदार्थप्रधानभूतस्य पुरुषार्थचतुष्टयस्योपजनकत्वेन कियदुपादेयत्वमस्येति सुधीभिरेव भिषग्भिरवधेयम्।

पुरुषार्थचतुष्टयोपजनकत्वं चास्य सुविदितमेव सर्वेषां वैद्यविद्याविदाम्। तथा हि-नि शुल्कौषधदानरोगिनिरीक्षणादिना आर्तत्राणरूपः, सन्निपाताद्यात्ययिकामयेषु प्राणप्रदत्वेन नवजीवनदानरूपश्च धर्मः, प्रचुरार्थराशिशालिनां धनपतिविरुदभाजां चिकित्सनेन अर्थोदयः, निरङ्कुरीतिसमुपार्जितधनेन कामश्च समुल्लसतीति निर्विवादम्।

आयुर्वेदाङ्गभूतस्य रसशास्त्रस्य मोक्षाभिधायकत्वं च रसार्णवादिप्राचीनार्ष-ग्रन्थेषु षड्दर्शनादिविलक्षणलक्षणतया प्राधान्येनैव प्रतिपादितम्। मन्यन्ते च प्राचीना रसायनाचार्याः प्रधानप्रयोजनं रसशास्त्रस्य मोक्षावाप्तिसाधनम्। तथाहि-

श्रीदेव्युवाच—

त्वत्प्रसादाच्छ्रुतं सर्वमशेषमवधारितम्।
यदि तेऽहमनुग्राह्या यद्यहं तव वल्लभा॥

श्रीभैरव उवाच—

साधु साधु महाभागे ! साधु पर्वतनन्दिनि !।
साधु पृष्टं त्वया देवि ! भक्तानां हितकाम्यया॥
अजरामरदेहस्य शिवतादात्म्यवेदनम्।
जीवन्मुक्तिर्महादेवि देवानामपि दुर्लभा॥
पिण्डपाते च यो मोक्षः स च मोक्षो निरर्थकः।
पिण्डे तु पतिते देवि ! गर्दभोऽपि विमुच्यते॥
षड्दर्शनेऽपि मुक्तिस्तु दर्शिता पिण्डपातने।
करामलकवत्सापि प्रत्यक्षं नोपलभ्यते॥
देवानामपि देवेशि ! दुर्लभं पिण्डधारणम्।
किं पुनर्मानुषाणां तु धरणीतलवासिनाम्॥
तेन पिण्डो महादेवि रक्षणीयः प्रयत्नतः।
................................ ...... ॥

यावन्न हरबीजं तु भक्षयेत्पारदं रसम् ।
तावत्तस्य कुतो मुक्तिः कुतः पिण्डस्य धारणम् ॥
(रसार्णव प्रथमः पटलः)

श्रीमद्भगवद्गोविन्दपादाश्चैवमामनन्ति—
इति धनशरीरभोगान् मत्वाऽनित्यान्सदैव यतनीयम् ।
मुक्तिस्तस्य ज्ञानात् तच्चाभ्यासात् स च स्थिरे देहे ॥
स्थिरदेहोऽभ्यासवशात् प्राप्य ज्ञानं गुणाष्टकोपेतम् ।
प्राप्नोति ब्रह्मपदं न पुनर्भववासदुःखानि ॥
नहि देहेन कथंचिद् व्याधिजरामरणदुःखविधुरेण ।
क्षणभङ्गुरेण सूक्ष्मं तद् ब्रह्मोपासितुं शक्यम् ॥
अस्मिन्नेव शरीरे येषां परमात्मनो न संवेदः ।
देहत्यागादूर्ध्वं तेषां तद् ब्रह्म दूरतरम् ॥
तस्माज्जीवन्मुक्तिं समीहमानेन योगिना प्रथमम् ।
दिव्या तनुर्विधेया हरगौरीसृष्टिसंयोगात् ॥
(रस० हृ० त० प्र० अ०)

अस्याश्च रसचिकित्सायास्तन्त्रकाराः—श्रीशङ्कर-नन्दीश्वर-भैरव-ब्रह्म-विष्णु-दत्तात्रेयप्रभृतयो देवाः, अगस्त्य-कपिल-भालुकि-व्याडि-मत्तमाण्डव्या-दयो महर्षयः, चन्द्रसेन-लङ्केश-विशारद-भास्कर-सुरसेन-रत्नकोश-स्वच्छन्द-भैरव-मन्थानभैरव-काकचण्डीश्वर-नरवाहन-कापालिक-रसेन्द्रतिलक-सुरानन्द-यशोधन-गोमुख-नरेन्द्र-मैथिल-स्कन्द-भगवद्गोविन्दपादप्रभृतयः प्राचीना रस-सिद्धा, नागार्जुन-भैरवनाथ-सोमनाथ-सिद्धनाथ-आदिनाथ-चर्पटीनाथ-गोरक्ष-नाथ-मत्स्येन्द्रनाथादयश्च प्रसिद्धा बहवो रससिद्धाः समजायन्त ।

रसतन्त्रेषु च—रसेन्द्रसंहिता—दत्तात्रेयसंहिता—अगस्त्यसंहिता-नासत्य-संहिता-गोरक्षसंहिता-रुद्रयामलतन्त्र-महारसायनतन्त्र-कामधेनुतन्त्र—दत्तात्रेय-तन्त्र-सिद्धलक्ष्मीश्वरतन्त्र—ऊस्पटतन्त्र—स्वच्छन्दभैरवतन्त्र—मन्थानभैरवतन्त्र-काकचण्डीश्वरतन्त्र—हरीश्वरतन्त्र—महादेवतन्त्र—नागार्जुनतन्त्र—बालतन्त्र—चन्द्रसेनसिद्धान्त-लङ्केशसिद्धान्त—कपिलसिद्धान्त—ब्रह्मसिद्धान्त—रसरत्नाकर-रसरत्नप्रदीप—रसपारिजातप्रभृतयोऽसङ्ख्या रसग्रन्थाः श्रूयन्ते नाममात्रेण सांप्रतम् ।

हन्त ! यस्या रसविद्याया इतः सहस्रवर्षपूर्वं भारतेऽपरिगणनीया आचार्या ग्रन्थाश्च लब्धप्रतिष्ठा लब्धप्रचाराश्च आसन् तस्या एव अङ्गुलिगणनीया ग्रन्था दृष्टिसरणिमुपयान्तीति महान् खेदः । रसतन्त्राचार्याश्च न दृश्यन्ते नाम-मात्रेण क्वापि । उपलब्धरसतन्त्राणामप्यतिदुर्बोध्यतया विरला एवोपलभ्यन्ते तदर्थज्ञा रसवैद्या । ये केचन रसायनाचार्यंमन्या रसवैद्याः क्वचिद् दृश्यन्ते ते रसतन्त्रार्थजातं स्वकीयं पैतृकं धनमिति मन्यमाना देशजात्यादिसाम्यभेदजनित-मात्सर्यमलकलुषितस्वान्ताः पठनकर्मणि व्ययीकृतानेकवर्षेभ्योऽनन्यभक्तेभ्यः शिष्येभ्योऽपि गोपयन्त्येव । कुतश्चित् समधिगतनिशाशकलोऽपि मूषिकश्चिकित्स-कत्वेनात्मानं सम्भावयतीति लोकश्रुतिं प्रत्यक्षीकारयन्ति ।

अपि च इदानीन्तना ये केचन वैद्याः प्राचीनाचार्यप्रणीतान्यपि पुस्तकानि कुतश्चित्स्वगृहाद्वा समधिगच्छन्ति तानि सूर्यदेवमपि नोपदर्शयन्ति किं पुनर्मुद्रणालयान्।

हन्त! यस्यायुर्वेदशास्त्रस्य विविधदेशागत ऋषिमहर्षिसिद्धाचार्यसम्मेलन माहात्म्येनैव पुरा प्रादुर्भावः समजनि, सम्मिलिता ऋषयः सिद्धा आचार्याश्च समस्तविश्वमङ्गलकाम्यया स्वानुभवपथमुपगतमायुर्वेदतत्त्वं निरवशेषं सदसि समभिधाय आयुर्वेदकल्पतरुं प्रत्यहमुत्तरोत्तरमतिवेलं परिपोषयामासुस्तस्यैव साम्प्रतिकी कीदृशी दुरवस्थेति परं परिभवस्थान भारतीयभिषजाम्।

इमामेव दशामवलोकयद्भिः श्रीमद्भिर्गुरुवर्यैः कविराज नरेन्द्रनाथमित्र महोदयैराज्ञापितोऽहं पद्यनिबद्धग्रन्थं स्वानुभूतरसशास्त्ररहस्यं भारतीयभिषजां करकमलेषु उपायनीकर्तुम्।

एतादृशदुष्करकर्मणि अशक्तस्यापि मादृशस्य मन्दमतेः गुर्वादेशस्य शिरोधार्यतया कृतोऽयं प्रयत्नश्चेद् भारतीयभिषजां किञ्चिदप्युपकारजातमुपजनयेत्तदात्मानं सफलपरिश्रमं मन्येयम्।

अस्मिंश्च ग्रन्थे पारदस्य स्वानुभूता अष्टावेव संस्काराः प्रतिपादिता न तु स्वानुभवपथबहिर्भूताः सर्वे (अष्टादश) संस्काराः। अस्यां च रसतरङ्गिण्यां क्वचित्पूर्वाचार्यपद्धतिरेवानुसृता क्वचिच्च नव्यरसायनतन्त्रोक्तसिद्धान्ता एवानुमता मया। तथाहि—

"गन्धाश्मगैरिकाशीसकाङ्क्षीतालशिलाञ्जनम्।
कङ्कुष्ठं चेत्युपरसाश्चाष्टौ पारदकर्मणि॥"

इत्यत्र पूर्वाचार्यैरुपरसत्वेन स्वीकृतानां गैरिककाशीसाञ्जनकङ्कुष्ठानां मध्ये गैरिकं लोहांशविशिष्टतया, काशीसं च रूपान्तरीभूतलोहांशसमन्वितत्वेन, उपधातुषु परिगणितं ग्रन्थेऽस्मिन्। अञ्जनञ्च सीसकादिधात्वंशमिश्रितत्वेन मिश्रकधातुषु परिसङ्ख्यातम्। कङ्कुष्ठश्च वनौषधिविशेषतया नेह प्रदर्शितम्।

"कम्पिल्लश्चपलो गौरीपाषाणो नवसादरः।
कपर्दो वह्निजारश्च गिरिसिन्दूरहिङ्गुलौ॥
मृद्दारशृङ्गमित्यष्टौ साधारणरसाः स्मृताः।
रससिद्धिकराः प्रोक्ता नागार्जुनपुरःसरैः॥"

इत्यत्र नागार्जुनादिभिः सिद्धैः साधारणरसत्वेन समाम्नातानां कम्पिल्लनवसारकपर्दवह्निजारगिरिसिन्दूरमृद्दारशृङ्गानां मध्ये कम्पिल्लो वनौषधिविशेषतया साधारणरसेषु न परिगणितः (परित्यक्त एव, निघण्टुग्रन्थैरेव तत्प्रतिपादनीयत्वात्)। नवसारश्च क्षारविशेषात्मकतया इह क्षारविशेषेषु निर्दिष्टः। कपर्दश्च मृतजलजन्तुकीकसविशेषतया जान्तवपदार्थेषु पृथक् परिगणितः। वह्निजारस्तु जन्तुविशेषजतयापि प्रायशो रसौषधेष्वप्रयुक्तत्वात् नेह प्रदर्शितः। गिरिसिन्दूरमृद्दारशृङ्गे च सीसकधात्वात्मकतया उपधातुषु परिगणिते।

"ताप्यं च विमला तुत्थं कांस्यं पित्तलकं तथा।
सिन्दूरं शैलनिर्यासः स्मृता ह्युपधातवः॥"

इत्यत्र उपधातुत्वेन समाम्नातानां कांस्यपित्तलशैलनिर्यासानां मध्ये कांस्यं ताम्रवङ्गांशमिश्रितत्वेन, पित्तलं ताम्रयशदांशमिश्रितत्वेन, शिलाजतु च लोहादिधातुमिश्रितत्वेन मिश्रकधातुषु परिगणितम्।

क्वचिच्च रसतन्त्रानिर्दिष्टानां मृगश्रृङ्गसमुद्रफेनादिकानां शोधनमारणादि विधानत्वात् वराटकादिजान्तवपदार्थसमतया जान्तवपदार्थेषु समाम्नानं विहितम्। तथा च प्राचीनरसागमेषु सामान्यतया प्रतिपादितानां विषोपविषाणां तत्तद्रसेषु प्रधानाङ्गतया सुसूक्ष्मभावेनावश्यज्ञातव्यतया च पृथगेव परिगणनं कृतं सविस्तरं गुणनिरूपणपूर्वकम्।

क्वचिच्च प्राचीनरसतन्त्रेषु नाममात्रेणाप्यश्रुताना नव्यरसायनतन्त्रप्रसिद्धानां निम्बूकाम्ल-टङ्कणाम्ल-सोरकाम्लीयरजत-आरनालीयकसीसकद्रव-गन्धकाम्लीययशदादीनामत्युपयोगिनां विषयाणां सन्निवेश· कृत.।

अपि च रसोपरसधातूपधात्वादिकानामवश्यप्रतिपत्तव्याः स्वानुभूताः शास्त्रसंमताश्च मात्राभेदा., गुणाः, पूर्वाचार्यैरनिरूपिता विशिष्टा गुणाः, सद्यो व्याधिहराः शास्त्रदृष्टाश्चामयिकप्रयोगा निर्दिष्टास्तत्र तत्र निर्व्याजम्। इहोक्ताश्च रसोपरसादिकानां शोधनमारणादिविधयः प्रायशः स्वानुभूताः सुखसाध्या एव दा सविस्तरं तथा प्रतिपादिता यथा सुकुमारमतयोऽपि शास्त्ररहस्यमधिगन्तुं शास्त्रोक्तक्रियाश्चानायासेनैव साधयितु प्रभवेयुः।

एतद्ग्रन्थनिर्माणे श्रीमद्भिर्गुरुवर्यैः कविराज नरेन्द्रनाथ मित्रमहोदयैर्यन्महत्साहाय्यमनुष्ठितं तदुपकारभारं वहामि सादरमवहितचेतसा। यच्च मदीय परमसुहृद्भिर्विद्यालङ्कारबिरुदविभूषितैः श्रीजयदेवशर्म्ममहोदयैः मुद्रणपत्रसंशोधनादिकर्मणि साहाय्यं सम्पादितं तदपि कृतज्ञतापूर्वकमभिनन्दनीयम्।

अन्ते तु—

वर्णयोजकदोषेण त्वज्ञानाद्वा प्रमादतः।<br>
कुत्रचित्स्खलनं जातं वर्णान्यत्वादिरूपकम्॥<br>
संशोधयन्तु सततं सन्तस्तदनुकम्पया।<br>
स्खलनं यच्च कुत्रापि स्यान्मे पूरुषदोषतः॥<br>
सयुक्तिकं सूचनीयं श्रीमद्भिस्तद्विशेषतः।<br>
द्वितीयमुद्रणावृत्तौ तत्सर्वं शोधयिष्यते॥

इति निवेदयति—

भिषजां वशंवदः<br>
**सदानन्दशर्म्मा**<br>
घिल्डियालोपाह्वः।

मेषार्कदिने १<br>
विक्रमाब्दाः १९८१

# प्राक्पठनीयम्

सन्तः ! प्राणाचार्य्याः ! प्राणकामाश्च ! भारतीये रसायनशास्त्रे नवीन पदमादधाना रसतरङ्गिणीयं सद्भिषजां प्रथमदर्शनत एव परं प्रमोदमातन्वाना ऽनितरसाधारणरसगुणविचारणकारणादपारमानन्दाधिकारमतानीत् ।

तस्याः प्रथमं संस्करणमुदारचरितैर्गुणगृह्यैर्भिषग्वरैस्तत्र तत्र विशिष्टा युर्वेदविद्यालयेषु पाठ्यत्वेनाङ्गीकृतमपरैश्च जिज्ञासुभिरहमहमिकयेवात्मसात्कृत मिति भूयोऽपि भूयसीमावश्यकतामपरसंस्करणस्यान्वभूम ।

अत्र च द्वितीयेऽस्मिन् संस्करणे तत्र तत्र बहुत्र कठिनदुरूहस्थलेषु निगूढरहस्यप्रसादनी विषमस्थलव्याख्या निवेशितेति जिज्ञासुच्छात्राणां परं प्रमोदस्थानम् । किञ्च मूलेऽप्यत्र बहुत्र पूर्वसंस्करणापेक्षयोपयोगियोगाधिक्य मस्ति मननीयम्, विशेषतो यथा "तलसिन्दूरम्" "शुक्रशोधिगन्धयोगः" "मल्ल-मारणविधिः" "स्वर्णमारणप्रकारे पञ्चमे वैशेष्यम्" "कासीसमारणप्रकारः" इत्यादि । प्रसादन्यान्तु बहुत्र रहस्योद्घाटनम्, पारदावशिष्टदशसंस्कारसंक्षिप्त समुल्लेखः, अन्तर्धूमवालुकायन्त्रप्रकारः, गन्धकविशेषयोगाः, मल्लभस्मयोगः, इत्यादयोऽनेके सूक्ष्मेक्षिकासमीक्षणीयाश्चापरे विशेषा भावुकमनोमोदावहाः सन्त्येव ।

अपि च एतावता कृतेऽपि प्रयत्ने श्रमप्रमादादिस्वाभाविकास्मदीयदोष हेतोर्जायमानं स्खलनं चेत् शोधनीयं सुधीरैः ।

इति निवेदयति—

भिषजामनुग्राह्यो

**हरिदत्तः शास्त्री**

आयुर्वेदाचार्यः ।

सूचना—४४ पृष्ठे पारदसंस्कारविवेचनशेषे व्याख्यायां प्राचीनोक्तपञ्चविंशति पारदबन्धविशेषाः प्रत्यक्षप्रक्रियातीतप्रायाः प्रायो नातीवोपयुक्ता इति हेतोर्बहुमिष्टा अप्युपेक्षिताः साम्प्रतम् । सत्यवसरे तान् कृत्वा प्रत्यक्षप्रायप्रकारान् प्राप्य च पिनाकिप्रसादं प्राथ्यमानं प्रकाश यिष्याम इति ।

# तरङ्गानुक्रमणिका

ॐ

# रसतरङ्गिणी

श्री कंसमर्दिन्यै नमः।

## अथ रसशालाविज्ञानीयः प्रथमस्तरङ्गः

गणेशमुखचुम्बिनी सुरकदम्बकादम्बिनी
दयारसतरङ्गिणी दनुजसङ्घसंहारिणी।
अघव्रजविडम्बिनी हरकुटुम्बिनी सन्ततं
भवत्वमरवन्दिता मम हृदन्तरालम्बिनी ॥१॥

ज्योतिःशास्त्रमहाम्भोधिकर्णधारं नमाम्यहम्।
जीवानन्दं तु पितरं मातरञ्च सरस्वतीम् ॥२॥

क्वाहं विमूढधिषणः क्व च सूततन्त्र-
माकुण्ठितामलधियामपि यत्र बुद्धिः।

प्रसादनी

शुत्रोऽखिलनमस्कृतः स्थिरतनुश्च यत्साधकः
समस्तगुणमण्डितो जगति यन्नियुक्तो बलिः॥
यतोऽतनुरपि स्मरस्तनुयुतोऽनिरुद्धस्थितिः
स नोऽवतु समन्ततो मुरहरस्तथा पारदः ॥१॥

अथ खलु रसतन्त्रविनिदिपा मुधन्मनुजमानसमलमोपिणीं रसतरङ्गिणी-माविष्करिष्यन्नाचार्यः सम्भावितप्रत्यूहव्यूहापोहाय शिष्टाचारानुमितस्मृत्यनुमितश्रुतिबोधितकर्तव्यताकमङ्गलमाचरन् स्वेष्टदेवतामुपश्लोकयति-गणेशमुखचुम्बिनीत्यादिना पृथ्वीवृत्तेन। गणेशः विघ्नहरः, तस्य मुखं चुम्बतीति, सुतवत्सलतया, गणेशः पार्वतीसुतः इति पौराणिकस्मरणात्। अत्र चादौ गणेशनामकीर्तनमपि माङ्गलिकमित्यपि रहस्यम्। सुरकदम्बः देवसमूहः तत्र कादम्बिनी सामूहिका प्रधानभूतेति यावत्, दया करुणा एव रसस्तस्य तरङ्गिणीव अत्यन्तदयायुक्तेति यावत्, दनुजसङ्घो दैत्यसमूहस्तस्य संहारिणी विनाशिका, अघव्रजः पापसमूहः तस्य विडम्बिनी अपहरणशीला, अमरवन्दिता देवैः स्तुता, नमस्कृता च, हरकुटुम्बिनी शिवस्यार्धाङ्गिनी, सन्ततं निरन्तरं ममहृदन्तरालम्बिनी मानसमध्यस्थायिनी भवतु इत्याशीःप्रार्थनम् ॥१॥

ज्योतिःशास्त्रेत्यादिना पित्रोर्नमस्कारः ॥२॥

सत्यं तदेतदपि तत्र तथापि यत्नः
साफल्यमेष्यति गुरोरनुकम्पयायम् ॥३॥
य इह गुरुसमीपे यत्नतोऽब्दत्रयेण
रसनिगमनिगूढग्रन्थितत्वावबोधः ।
अपि च गुरुरहस्यः कर्ममार्गोऽप्यकारि
सरलमधुरपद्यैर्ग्रथ्यते वै स एव ॥४॥
प्राचीनेषु दुरूहेषु रसतन्त्रेषु मुह्यताम् ।
सन्दिग्धास्वतिकष्टासु रसपाकक्रियासु च ॥५॥
पदे पदे विशेषेण नित्यं व्यामोहितात्मनाम् ।
ग्रन्थसम्पद्विहीनानां स्वल्पाध्ययनसम्पदाम् ॥६॥
इदानीन्तनबालानां स्वल्पेन समयेन तु ।
सुखतः प्रतिपत्त्यर्थं प्रयत्नोऽयं कृतो मया ॥७॥
धिल्डियालोपसंज्ञेन सदानन्देन शर्मणा ।
निबध्यते महायत्नादियं रसतरङ्गिणी ॥८॥

गुर्वनुकम्पासामर्थ्यं प्रकटयन् स्वाभिमानमपाकरोति क्वाहमिति-विमूढधिषणः मुग्धबुद्धिः अहं क्व ? अमलधियां निर्मलमतीनामपि यत्र सूततन्त्रे बुद्धिः आकुण्ठिता स्यादिति शेषः, तादृशं सूततन्त्रं पारदसाधनशास्त्रं च क्व ? अहो वैषम्यम् । अपिः यद्यप्यर्थे, यद्यपि तदेतद् वैषम्यं सत्यं तथापि तत्रायं यत्नः रसतरङ्गिणीनिर्माणरूपः गुरोरनुकम्पया साफल्यमेष्यति ॥३॥

ननु क्रियमाणोऽयं भवद्यत्नो रसयोगसंग्रहफल एवेति कृतं प्रयत्नेन, तादृशसंग्रहाणां बाहुल्यात् इति चेत्तत्राह, य इहेति—यत्नतः शिष्यधर्मपालनपरतया रसनिगमे रसशास्त्रे निगूढाः यत्नलभ्याः ये ग्रन्थयः आवरणसामान्याद् गुप्तरहस्यस्थलानि, तेषां यः तत्वावबोधो मर्मज्ञानं गुरुसमीपे मया अकारि, अपि च गुरुणा बोधितं रहस्यं यस्य तादृशः, कर्ममार्गः रचनात्मकः क्रमोऽपि अकारि स एव सरलमधुरपद्यैः सुखेनैवार्थज्ञापकैः मधुरैश्च श्लोकैः ग्रथ्यते, नतु संग्रहमात्रमिति भावः ॥४॥

अथ ग्रन्थानुबन्धचतुष्टयं दर्शयति विशेषकेण—प्राचीनेष्विति-दुरूहेषु कष्टलभ्यतत्वेषु, रसतन्त्रेषु रसहृदयतन्त्रादिषु, मुह्यतामाकुलानाम्, सन्दिग्धासु स्फुटनिश्चायकवर्णनारहितासु अतएव अतिकष्टासु, बहुसमारम्भाल्पफलासु रसपाकक्रियासु पारदादिजारणमारणव्यापारेषु, पदे पदे इति बाहुल्याभिप्रायेण । स्वल्पेन समयेन तु इति तुर्विशेषार्थे, यदयमेव प्राक्तनतन्त्रेभ्यो रसतरङ्गिण्यां विशेषो यावता परिमितकालमप्येतदध्ययनं जिज्ञासुमनःसु रसरहस्यमाधातुमलमिति । तदेतदाह सुखतः प्रतिपत्त्यर्थमिति-प्रतिपत्तिः ज्ञानम्, महायत्नात् गुर्वनुकम्पासहायविशिष्टाद् यत्नात् इत्यर्थः ॥५-८॥

रसतरङ्गिण्याः परिचयः ।

सशिलापि निराघाता सनागापि भयोज्झिता ।
सुखावगाहा वोभूयादियं रसतरङ्गिणी ॥९॥
ससत्वापि निराबाधा सघोषापि स्थिरक्रिया ।
सुखावगाहा जयति भृशं रसतरङ्गिणी ॥१०॥

रसवैद्यस्य प्रशंसा ।

तत्तत्संस्काररीत्या सपदि रसवरः शोधितः स्यान्न यावद्
यावद्वा मारितः स्यात्सकृदपि न रसो नो कृता स्याद्बुभुक्षा।
यद्वा नैवाभ्रसत्वं खलु कृतमथवा जारितं वा सुवर्णं
प्राणाचार्यः क्व तावद्भवति हि भिषजां मण्डले मण्डनीयः ॥११॥
कृतिरियमिह दोषैराचिता स्यान्मदीया
यदि तदपि न धीरैः काप्युपेक्षा विधेया ।
कृमिशतपरिपूर्णा कण्टकाकीर्णकाया
स्वनसि नहि नरेन्द्रैरर्प्यते केतकी किम् ॥१२॥

रसशाला ।

विमलोपवनप्रदेशगां रमणीयां जलयन्त्रशोभिताम् ।
कमनीयगवाक्षसंयुतां जनबाधारहितामसंकुलाम् ॥१३॥

अथ रसतरङ्गिण्या अलौकिकत्वं ध्वनयति युग्मकेन सशिलापीति-लोकोपलब्धा हि तरङ्गिणी नदी शिलापाषाणयुता चेदाघातविशिष्टा, ससर्पा च भयप्रदा, जलजन्तुसमन्विता चेत् प्रविष्टपुरुषप्राणहरा च, सजलशब्दा चञ्चला च, इयन्तु सह शिलया मनःशिलया उपलक्षितापि निराघाता सङ्घट्टनवर्जिता, सनागा सीसकयुतापि भयोज्झिता निर्भयसाधना, ससत्वा अभ्रकादिसत्वयुतापि निराबाधा प्राणबाधारहिता, घोषः कांस्यं तद्युतापि स्थिरक्रिया निश्चितगुणसाधना च, सेयमध्यापकाध्येतॄणां सुखावगाहा सरसवर्णनायुक्तत्वेन सुखप्रवेशा भृशं अत्यर्थं वोभूयात् आस्तामित्याशिषः। जयतीत्यस्याः सर्वोत्कर्षो बोधितः ॥९-१०॥

अथ चिकित्साप्रधानपादं रसवैद्यं प्रस्तौति स्रग्धरया, तत्तदिति-मारणं भस्मत्वापादनं, बुभुक्षा पारदस्य धात्वादिग्राससामर्थ्यं एतावता च पारदसंस्कारादि जारणान्तं कर्म भिषग्बुभूषुणावश्यं ज्ञातव्यमिति ध्वनितम् ॥११॥

अथ दोषैकदृष्ट्या नेयमुपेक्षणीयेति दृष्टान्तयति कृतिरियमिति—दोषभरितापीयं मत्कृतिः धीरैर्नोपेक्षणीया, इति नात्राधीराः प्रार्थ्यन्ते तेषामुपेक्षणस्वभाववत्वात्, यतः कृमिशतैः पूर्णा अथच कण्टकव्याप्तशरीराऽपि केतकी नरेन्द्रैः किं स्वनसि स्वकीयनासिकायाम् नार्प्यते ? अपि त्वर्प्यत एव। तथाच विधूय पुरोभागितां गुणैकग्रहिलैर्भव्यैर्भाव्यमिति भावः ॥१२॥

निखिलौषधवर्गमण्डितां रससिद्धेश्वरचित्रभूषिताम् ।
विपुलाखिलसाधनान्वितां रसशालां विदधीत शोभनाम् ॥१४॥

रसशालायां कर्मविभागः ।

शङ्करं पूर्वदिग्भागे स्थापयेद्भिषजाग्रणीः ।
आग्नेये वह्निकार्याणि याम्ये प्रस्तरकृत्यकम् ॥१५॥
शस्त्रकृत्यन्तु नैर्ऋत्ये क्षालनादीनि वारुणे ।
वायव्ये शोषणं शस्तमुत्तरे यन्त्ररक्षणम् ॥१६॥
निदध्यादीशकोणे तु रससाधनमूलकम् ।
मुख्योपकरणं तत्तन्नित्यकृत्यसमागतम् ॥१७॥

रसशालायां उपकरणद्रव्याणि ।

द्रोणीरूपा वर्तुलाश्च खल्वाः पाषाणनिर्मिताः ।
आयसाश्चापि संग्राह्यास्तद्योग्याश्चैव मर्दकाः ॥१८
काचमृत्काष्ठलोहादिनिर्मितानि बहूनि च ।
पात्राणि कारयेद्धीमान् यत्नतः पात्रमानवित् ॥१९॥
सन्दंशिका कर्तरी च तथा शूर्पमुदूखलम् ।
चालनी वह्निमित्रा च स्थापनीया प्रयत्नतः ॥२०॥
दोलायन्त्रादिकानाञ्च सामग्रीं निखिलामपि ।
सुरक्षिते प्रदेशे तु स्थापयेद्भिषजाग्रणीः ॥२१॥
सुदृढा विविधाकाराः कूपिकाः काचनिर्मिताः ।
सपिधाना. सिद्धरसस्थापनाय समाहरेत् ॥२२॥

अथ साधनप्राथम्याद्रुपक्रमो रसशालायाः विमलेत्यादि वियोगिनी- वृत्तयुगलेन—विमले उपवनप्रदेशे स्थापितां, उपवनस्य ओषधिसुलभता- जनकत्वात् रजोधूमादिबाधारहितत्वात् रम्यत्वाच्च। औषधव्याघातभयात् जनबाधारहिताम्, असङ्कुलां असङ्कीर्णाम्, निखिलौषधवर्गेण रसक्रियोपयोगि- भेषजसमूहेन, रससिद्धेश्वराः श्रीशङ्करादयः, तेषां चित्रैः भूषितां श्रद्धाप्रोत्सा- हनहेतोः। स्पष्टमन्यत् ॥१३-१४॥

अत्र च कर्मसौकर्यार्थं दिग्भेदेन रसशालायां कर्मविभागमाह शङ्करं पूर्वदिग्भाग इति—शङ्करो रससाधकेष्टतमः, शङ्करप्रियं इत्याचार्यगुणोपूक्ते। वह्निकार्याणि भ्राष्ट्रीप्रभृतीनि, प्रस्तरकृत्यं खल्वपेषणादिकम्। याम्ये दक्षिणस्याम्, वारुणे पश्चिमायाम् ॥ अन्यत् सुगमम् ॥१५-१७॥

प्रसङ्गादुपकरणद्रव्याणि—द्रोणीरूपाः नौकाकाराः, वर्तुलाः गोलाः, तद् योग्याः खल्वसमानोपादानाः। सन्दंशिका वस्तुदृढग्रहणसाधनम्, चालनी औषधादिशोधनी "तितउ" इति ख्याता, वह्निमित्रा मूषा, सुरक्षिते रज.-

विविधानि सुरूपाणि पित्तलादिकृतानि च ।
मानयुक्तानि वै वैद्यस्तुलायन्त्राणि रक्षयेत् ॥२३॥
मसृणान्यतिनूत्नानि कागदानि सितानि तु ।
रसौषधप्रदानार्थं प्रशस्यन्ते भिषग्वरैः ॥२४॥
वन्योत्पलानि काष्ठानि तुषादीनि तृणानि च ।
शिखित्रान् कोकिलांश्चापि रक्षयेद्भिषजां वरः ॥२५॥
यच्चान्यदुपयोगि स्याद् देशकालाद्यपेक्षया ।
तत्तत्संस्थापयेत्तत्र रसकर्मविशारदः ॥२६॥
प्रत्यहं कारयेद्धीमान् शालायां मार्जनादिकम् ।
भृत्यैः कर्मसु निष्णातैः सदाऽऽतङ्कनिवृत्तये ॥२७॥

परिचारकलक्षणम् ।

सोद्यमाः सत्यवक्तारो निर्लोभाः शुचयः परम् ।
शूराः पथ्याशिनो ग्राह्याः भिषग्भिः परिचारकाः ॥२८॥

रससिद्धानां नामपरिगणनम् ।

श्रीशङ्करो भैरवश्च नन्दी स्वच्छन्दभैरवः ।
मन्थानभैरवः शम्भुर्ब्रह्मा विष्णुश्च भास्करः ॥२९॥
कापालिकश्च लङ्केशो ह्यगस्त्यो नरवाहनः ।
नागार्जुनो नरेन्द्रश्च काकचण्डीश्वराभिधः ॥३०॥
मत्तो माण्डव्यगोविन्दौ नागबोधिर्विशारदः ।
यशोधनो रत्नकोशो व्याडिर्गौरत्ननाथकः ॥३१॥
सुगृहीताभिधेयास्तु रससिद्धा इमे मताः ।
नामान्येतानि हि पठेत् प्रत्यहं रससिद्धये ॥३२॥

कृम्यादिवर्जिते, सपिधानाः यथायोगं कोमलकाष्ठकाचादिनिर्मितमुखावरणान्विताः, विविधानि लघूनि बृहन्ति च, मसृणानि सुचिक्कणानि अतिनूत्नानि, पुरातनानि विदीर्यन्ते, कागदानि सितानि मस्यादिसम्पर्करहितानि, तथा च मुद्रितपत्रेष्वौषधं न्यस्तं विगुणीभवतीति । वन्योत्पलानि वने स्वयं शुष्काणि, शिखित्रः जलनिर्वापितं दग्धकाष्ठं, कोकिलः सबाष्परोधं निर्वापितमिति भेदः । शिखित्राः पावकोच्छिष्टा अङ्गाराः कथिताः पुनः । कोकिलाश्चेतिताङ्गारा निर्वाणाः पयसा विना, इति रसरत्नसमुच्चयात् । अन्यदपि योग्यतानुसारमावश्यकं सुराप्रदीपादि । आतङ्कनिवृत्तये रोगपरिहारार्थम् । स्पष्टमन्यत् ॥१८-२७॥

प्रसङ्गाद् योग्यपरिचारकलक्षणम्—पथ्याशिनः अन्यथा रोगादिभिः कर्मकालातिपातः ॥२८॥

अथ रससिद्धानां नामपरिगणनं मङ्गलार्थं सम्प्रदायप्रवृत्तये च । सुगृहीताभिधेयाः पुण्यश्लोकाः सिद्धिश्च तादृशादृष्टसंपत्त्या ॥२९-३२॥

रसशास्त्राचार्यस्य स्वरूपम् ।

सदाचारः सुचरितः समदर्शी सदाशयः ।
सत्यवादी सिद्धमन्त्रः सर्वदा शङ्करप्रियः ॥३३॥
धीरो वीरः स्थिरप्रज्ञो रसकर्मविचक्षणः ।
रसतन्त्रस्वतन्त्रो यः स आचार्यः प्रशस्यते ॥३४॥

शिष्यस्य स्वरूपम् ।

सदाशयः सदाचारः स्वकुलाचारदीक्षितः ।
गुरुपूजारतो वीरः सत्यवादी दृढव्रतः ॥३५॥
आज्ञापरो निरालस्यो कुलीनोऽतिविचक्षणः ।
आयुर्वेदकृताभ्यासः शिष्यः खलु प्रशस्यते ॥३६॥

शिष्योपनयने वर्जनीयाः ।

दुराचारा दुश्चरिता अकुलीना मदोद्धताः ।
चौर्यच्छलादिना नित्यं विद्याग्रहणलोलुपाः ॥३७॥
अज्ञातकुलशीला ये नास्तिका गुरुनिन्दकाः ।
शिष्योपनयने हेया नरा रसविशारदैः ॥३८॥

इति रसशालाविज्ञानीयो नाम प्रथमस्तरङ्गः ।

---

## अथ परिभाषाविज्ञानीयो द्वितीयस्तरङ्गः ।

परिभाषाविज्ञानफलम् ।

परिभाषाध्यायमादौ योऽधीते रससाधकः ।
रसतन्त्रार्थविज्ञाने न स मुह्यति कुत्रचित् ॥१॥

"ततोऽनन्तरमाचार्य्यम्परीक्षेत" इति विमानस्थाने चरकस्मरणात्, आचार्यपरीक्षोपयोगि रसशास्त्राचार्यस्वरूपमाह सदाचार इत्यादिना—सदाचारादयो गुणाः प्रभावरक्षार्थंव्यवहारशुद्ध्यर्थञ्च, सिद्धमन्त्रः आप्तमन्त्रसिद्धिः । रसतन्त्रस्वतन्त्रः स्वतन्त्रप्रज्ञः नवनवरसतन्त्रनिर्माणकुशलः ॥३३-३४॥

सदाशयादयः शिष्यगुणाः शिक्षादृढताव्यवहाररक्षार्थाः । दृढव्रतः प्रतिज्ञापालकः, अतिविचक्षण ऊहापोहकुशलः ॥३५-३६॥

दुराचारादयः शिष्यदोषास्त्यागार्थाः, नास्तिकाः-"नास्तिको वर्ज्यानामिति" चरकस्मरणात्, शिष्योपनयने शिष्यतास्वीकारणकर्मणि हेयाः वर्जनीयाः ॥३७-३८॥

स्पष्टम् ॥१॥

परिभाषालक्षणम्।

निगूढानुक्तलेशोक्तसन्दिग्धार्थप्रदीपिका।
सुनिश्चितार्था विबुधैः परिभाषा निगद्यते ॥२॥

लवणपञ्चकम्।

सैन्धवञ्चाथ सामुद्रं विडं सौवर्चलं तथा।
रोमकञ्चेति विज्ञेयं बुधैर्लवणपञ्चकम् ॥३॥

लवणत्रिकम्।

सिन्धुजं रुचकं पाक्यमेतत् त्रिलवणं स्मृतम्।
प्रकीर्तितञ्च लवणत्रिकं वा लवणत्रयम् ॥४॥

सैन्धवस्य मुख्यत्वम्।

तत्रापि सैन्धवं मुख्यं विद्वद्भिः परिकीर्तितम्।
उक्ते लवणसामान्ये सैन्धवं विनियोजयेत् ॥५॥

क्षारद्वयं क्षारत्रिकञ्च।

स्वर्जिक्षारो यवक्षारः क्षारद्वयमुदाहृतम्।
सौभाग्येन समायुक्तं क्षारत्रिकमुदाहृतम् ॥६॥

क्षारपञ्चकम्।

मुष्कक्षारो यवक्षारः किंशुकक्षार एव च।
स्वर्जिक्षारस्तिलक्षारः क्षारपञ्चकमुच्यते ॥७॥

क्षाराष्टकम्।

सुधापलाशशिखरिचिञ्चार्कतिलनालजाः।
स्वर्जिका याचशूकश्च क्षाराष्टकमुदाहृतम् ॥८॥

मूत्राष्टकम्।

सैरिभाजाविकरभगोखरद्विपवाजिनाम्।
मूत्राणीति भिषग्वर्यैर्मूत्राष्टकमुदाहृतम् ॥९॥
खरेभोष्ट्रतुरङ्गाणां पुंसां मूत्रं प्रशस्यते।
गोजाविमहिषीणाञ्च मूत्रं स्त्रीणां हितं मतम् ॥१०॥

स्पष्टम् ॥२॥
विडसौवर्चले कृत्रिमे ॥३॥
रुचकं सौवर्चलम्, पाक्यं विडम् ॥४॥
मुख्यं नैम्यत्वाद् बहुगुणवत्त्वाच्च ॥५॥
किंशुकक्षारः पलाशक्षारः ॥ ६-७ ॥
सुधा स्नुही, शिखरी अपामार्गः ॥८॥
सैरिभी महिषी, करभः उष्ट्रः, द्विपः हस्ती ॥९-११॥

निखिलेष्वपि मूत्रेषु गोमूत्रं गुणवत्तमम् ।
अतो विशेषानुक्तौ तु गोमूत्रं विनियोजयेत् ॥११॥

गोर्वरम् ।

गोखुरैस्ताडितं गोष्ठे शुष्कं चूर्णोपमञ्च यत् ।
गोमयं तत्समाख्यातं बुधैर्गोर्वरसंज्ञकम् ॥१२॥

अम्लवर्गः ।

जम्बीरं निम्बुकञ्चैव त्वम्लवेतसमम्लिका ।
नारङ्गं दाडिमञ्चैव वृक्षाम्लं बीजपूरकम् ॥१३॥
चाङ्गेरी चणकाम्लञ्च कर्कन्धुः करमर्दकः ।
चुक्रिका चेति सामान्यादम्लवर्गः प्रकीर्तितः ॥१४॥

अम्लपञ्चकम् ।

अम्लवेतसजम्बीरलुङ्गनारङ्गनिम्बुकैः ।
फलपञ्चाम्लकं ख्यातं कीर्तितञ्चाम्लपञ्चकम् ॥१५॥

अपरमम्लपञ्चकम् ।

कोलदाडिमवृक्षाम्लचाङ्गेरीचिञ्चिकारसैः ।
पञ्चाम्लकं समाख्यातं त्वम्लपञ्चकमेव च ॥१६॥
सर्वेषामम्लजातीनां निम्बूकं गुणवत्तमम् ।
अम्लवेतसकं वापि त्वम्लिका वा गुणाधिका ॥१७॥

पञ्चतिक्तकम् ।

गुडूची निम्बमूलत्वक् भिषङ्माता निदिग्धिका ।
पटोलपत्रमित्येतत् पञ्चतिक्तं प्रकीर्तितम् ॥१८॥

पञ्चमृत्तिकाः ।

इष्टिकाचूर्णकं भस्म तथा वल्मीकमृत्तिका ।
गैरिकं लवणञ्चेति कीर्तिताः पञ्चमृत्तिकाः ॥१९॥

मधुरत्रिकम् ।

आज्यं गुडो माक्षिकञ्च विज्ञेयं मधुरत्रिकम् ।
मतं त्रिमधुरञ्चापि तथैव मधुरत्रयम् ॥२०॥

गोष्ठे गोनिवासस्थले ॥१२॥

वृक्षाम्लं तिन्तिडीकम्, कर्कन्धुः बदरीफलम्, चुक्रिका 'चूका' इति ख्याता ॥१४॥

लुङ्गं मातुलुङ्गम् ॥१५-१७॥

भिषङ्माता वासक', निदिग्धिका क्षुद्रभण्टाकी ॥१८॥

इष्टिकाचूर्णं पक्वेष्टिकाक्षोदः ॥१९॥

आज्यं घृतम् ॥२०॥

पञ्चामृतम्।

गव्यं क्षीरं दधि घृतं माक्षिकञ्चाथ शर्करा।
पञ्चामृतं समाख्यातं रसकर्मप्रसाधकम् ॥२१॥

पञ्चगव्यम्।

गव्यं क्षीरं दधि घृतं गोमूत्रं गोमयं तथा।
एकत्र योजितं तुल्यं पञ्चगव्यमिहोच्यते ॥२२॥

क्षीरत्रयम्।

रविक्षीरं वटक्षीरं स्नुहीक्षीरस्तथैव च।
क्षीरत्रयमिति ख्यातं मारणादौ प्रशस्यते ॥२३॥

दुग्धवर्गः।

करिणी घोटिका धेनुस्त्वविका छागिकोष्ट्रिका।
महिषी गर्दभी नारी काकोदुम्बरिका सुधा ॥२४॥
दुग्धिकोदुम्बरश्चार्कौ न्यग्रोधोऽश्वत्थतिल्वकौ।
एषां दुग्धैः समाख्यातो दुग्धवर्गः समासतः ॥२५॥

तैलवर्गः।

तिलसर्षपकोन्मत्तभल्लातैरण्डनिम्बजैः।
उमादीनाञ्च तैलैस्तु तैलवर्गोऽत्र सम्मतः ॥२६॥

कज्जलीस्वरूपम्।

निर्द्रवैर्धातुभिश्चाथ गन्धादिभिः
पेषितः पारदः श्लक्ष्णतां प्रापितः।
कज्जलाभो यदा जायतेऽसौ तदा
नामतः कोविदैः कज्जलीत्युच्यते ॥२७॥

कज्जली कज्जलञ्चैव मता कज्जलिका च सा।
रससम्पादनादौ च विशेषात्सा विधीयते ॥२८॥

रसपङ्कस्य लक्षणम्।

सद्रवैर्गन्धकाद्यैश्च धातुभिः पेषितो रसः।
सुश्लक्ष्णः पङ्कसङ्काशो रसपङ्क इति स्मृतः ॥ २९ ॥

दधिघृतेऽपि गव्ये ग्राह्ये ॥२१-२२॥

रविक्षीरं अर्कदुग्धम् ॥२३॥

करिणीतो नारीपर्यन्तं जङ्गमवर्गः, काकोदुम्बरिकातस्तिल्वकपर्यन्तं स्थावर वर्गः, उभयग्रहणं तन्त्रानुरोधात्। तिल्वको लोध्रः ॥२४-२५॥

उन्मत्तः धत्तूरः। उमा अतसी ॥२६॥

पिष्टिका।

सूतं विमर्द्य गन्धेन दुग्धाद्यैस्तु द्रवैस्तथा।
पेषणात् पिष्टतां नीता मता पिष्टी च पिष्टिका ॥ ३० ॥

हिङ्गुलाकृष्टो रसः।

ऊर्ध्वपातनयन्त्रेण हिङ्गुलादुत्थितो रसः।
हिङ्गुलोत्थः स्मृतश्चैव हिङ्गुलाकृष्ट उच्यते ॥ ३१ ॥

धातुसत्वलक्षणम्।

कोष्ठ्यां ध्मातस्य वज्रादेर्द्रावकौषधिभिः समम्।
सारो यो निर्गतः सोऽत्र सत्वमित्यभिधीयते ॥ ३२ ॥

वनौषधिसत्वलक्षणम्

वाष्पस्वेदनयन्त्रेण वनौषधिसमुद्भवः।
सारः सत्वमिति प्रोक्तं रसतन्त्रविचक्षणैः ॥ ३३ ॥

सिक्थतैलस्य लक्षणम्।

सिक्थकं तिलतैलञ्च युक्तमानविमिश्रितम्।
विपक्वं नवनीताभं सिक्थतैलं प्रकीर्तितम् ॥ ३४ ॥

द्रावको गणः।

गुञ्जा मधु गुडः सर्पिः सौभाग्यं गुग्गुलुस्तथा।
पूर्वाचार्यैः कीर्तितोऽयं धातूनां द्रावको गणः ॥ ३५ ॥

ढालनम्।

संद्रावितस्य द्रव्यस्य द्रवे निक्षेपणन्तु यत्।
ढालनं तत्समुद्दिष्टं रसकर्मविशारदैः ॥ ३६ ॥

मित्रपञ्चकम्।

आज्यं गुञ्जाथ सौभाग्यं क्षौद्रं च पुरसंज्ञकम्।
एतत्तु मिलितं विज्ञैर्मित्रपञ्चकमुच्यते ॥ ३७ ॥
विविधानां तु लोहानां द्रावणाय विशेषतः।
रसतन्त्रविशेषज्ञैर्युज्यते मित्रपञ्चकम् ॥ ३८ ॥

निर्द्रवैरित्यारभ्य हिङ्गुलाकृष्ट उच्यत इति पर्यन्तं सुगमम् ॥२७-३१॥

द्रावकौषधिभिर्वक्ष्यमाणैर्गुडगुग्गुल्वादिभिः ॥३२-३३॥

सिक्थकं मधूच्छिष्टम्, युक्तमानविमिश्रितमिति मूर्च्छनाविज्ञानीयोक्तप्रमाणेन विमिश्रितम् ॥३४॥

पुरसंज्ञकं गुग्गुलुः ॥३५-३८॥

आवापलक्षणम् ।

द्रव्यान्तरविनिक्षेपो द्रुते वङ्गादिके तु यः ।
क्रियते स प्रतीवाप आवापश्च निगद्यते ॥ ३९ ॥

निर्वापलक्षणम् ।

धात्वादेर्वह्नितप्तस्य जलादौ यन्निषेचनम् ।
स निर्वापः स्मृतश्चापि निषेकः स्नपनञ्च तत् ॥ ४० ॥

शुद्धावर्तलक्षणम् ।

यदा तु ज्वलनो ज्वालाकुलः शुक्लसमुत्थितिः ।
सत्वनिर्गमकालः स शुद्धावर्त इति स्मृतः ॥ ४१ ॥

पर्पटीस्वरूपम् ।

संद्राविता कज्जलिकाग्नियोगात् रम्भापलाशे चिपिटीकृता च
रसागमज्ञैः खलु पर्पटी सा प्रकीर्तिता पर्पटिका च सैव ॥ ४२ ॥

ताडनम् ।

यत् श्लिष्टलोहयोरेकतरस्य परिणाशनम् ।
अपरस्य च लोहस्य भवेच्च परिसाधनम् ॥ ४३ ॥
आध्मानाद् वङ्कनालेन ताडनं तदिहोच्यते ।
सञ्जातताडनं लोहं ताडितं परिकीर्तितम् ॥ ४४ ॥

घोषाकृष्टं ताम्रम् ।

ताडितं वङ्कनालेन सौषधं घोषकं यदा ।
स्यान्मुक्तरङ्गं तत्ताम्रं घोषाकृष्टमिहोच्यते ॥ ४५ ॥

वङ्कनालम् ।

करप्रमाणं यन्नालं पित्तलादिविनिर्मितम् ।
वह्नौ फूत्कारदानाय वङ्कनालं तदुच्यते ॥४६॥

स्वाङ्गशीतस्य लक्षणम् ।

ज्वलनस्थितमेवेह शीतलत्वमुपैति यत् ।
स्वाङ्गशीतं तदुद्दिष्टं स्वतःशीतञ्च तन्मतम् ॥४७॥

द्रव्यान्तरस्य अश्वत्थवल्कचूर्णादेः ॥३९-४०॥

ज्वलनोऽग्निः, शुक्लसमुत्थितिः शुक्लवर्णज्वालायुक्तः । सत्वनिर्गमकालः स इति तदानीं वह्नितीव्रतासद्भावात् ॥४१॥

रम्भापलाशे कदलीपत्रे ॥४२॥

श्लिष्टलोहयोरिति मिश्रलोहयोः ॥४३-४४॥

घोषः कांस्यम्, मुक्तरङ्गं वङ्गविहीनम् ॥४५॥

बहिःशीतलक्षणम् ।

वह्नेर्बहिः समानीय यद् द्रव्यं याति शीतताम् ।
बहिःशीतं तदुद्दिष्टं बाह्यशीतञ्च तन्मतम् ॥४८॥

भावनालक्षणम् ।

यच्चूर्णितस्य धात्वादेर्द्रवैः सम्पेष्य शोषणम् ।
भावनं तन्मतं विज्ञैर्भावना च निगद्यते ॥४६॥

भावनायां द्रवपरिमाणम् ।

द्रवेण यावता द्रव्यं चूर्णितं त्वार्द्रतां व्रजेत् ।
तावानेव द्रवो देयो भिषग्भिर्भावनाविधौ ॥५०॥
भाव्यद्रव्यमितः क्वाथ्यो जलमष्टगुणं ततः ।
वस्वंशशेषितः क्वाथो देयः क्वाथेन भावने ॥५१॥

शोधनम् ।

उद्दिष्टैरौषधैः सार्द्धं क्रियते पेषणादिकम् ।
मलविच्छित्तये यत्तु शोधनं तदिहोच्यते ॥५२॥

वारितरलक्षणम् ।

मृतं लोहं विनिक्षिप्तं यदा तरति वारिणि ।
रसतन्त्रसुनिष्णातैस्तद् वारितरमीरितम् ॥५३॥

मृतलोहम् ।

तर्जन्यङ्गुष्ठसंघृष्टं विशेद्रेखान्तरं तु यत् ।
निर्विघ्नञ्च वह्निर्नैति मृतलोहं तदुच्यते ॥५४॥

वङ्कनालं स्वर्णकाराद्युपयुज्यमानमेकतः सूक्ष्मेणापरतश्च विस्तृतेन मुखेनोपलक्षितं नलिकाकारं फूत्कारदानयन्त्रम् ॥४६-४६॥

वस्वंशशेषितः अष्टमांशावशेषितः । प्रसङ्गात् सुभावितदुर्भावितयोः स्वरूपम्—"पेष्यमाणञ्च यद् द्रव्यं चिपिटीभूय चूर्णताम् । याति मार्दवयुक्तन्तत् सुभावितमुदाहृतम् ॥ यत् पिष्टं सहसा दीर्णं खरस्पर्शंञ्च कोमलम् । तद्दुर्भावितमित्युक्तं भावनावेदिभिर्जनैः ।" इति ॥५०-५१॥

आदिपदेन स्वेदनक्षालनादि ग्राह्यम्, मलविच्छित्तये मलनाशाय ॥५२॥

वारितरमिति—अत्रेदमवधेयम्-वारितरत्वमेव लोहमृतेर्न निश्चितं लक्षणं व्यभिचारात्, तथाहि दरदयोगमृतस्य शतधापुटितस्यापि लोहस्य न क्वचिद् वारितरत्वमवलोकितचरम्, क्वचिच्च जम्बूफलादिरसपुटितस्याल्पपुटेष्वपि वारितरत्वमायातीति, तस्माद् वारितरत्वं लोहमृतेर्न व्यापकं लक्षणम् । अपरत्र तु दरदादिपुटितस्यापि घृतादिनाऽमृतीकरणात् वारितरतागोधूमादिकणतारकत्वाद्यवलोक्यते ॥५३॥

निर्विघ्नञ्च बहिर्नैति—अत्यन्तसूक्ष्मत्वादिति शेषः ॥५४॥

मृतं लोहं पुटे ध्मातं ताराज्यमधुसंयुतम् ।
न त्यजेत्तारमानम्वा मृतलोहं तदुच्यते ॥५५॥

अपुनर्भवलक्षणम् ।

समित्रपञ्चकं ध्मातं प्रकृतिं नैति यत् पुनः ।
अपुनर्भवमुक्तं तन्निरुत्थं च तदीरितम् ॥५६॥

निरुत्थलक्षणम् ।

अपुनर्भवसंज्ञं यल्लोहं तारसमन्वितम् ।
यदा तारे न लगति तन्निरुत्थमिहोच्यते ॥५७॥

अमृतीकरणम् ।

लोहादीनां मृतानां वै शिष्टदोषापनुत्तये ।
क्रियते यस्तु संस्कार अमृतीकरणं मतम् ॥५८॥

परिस्रुतसलिलम् ।

यन्त्रेण नाडिकाख्येन वह्निसन्तापयोगतः ।
विन्दुशो यत्स्रुतं नीरं तत्परिस्रुतमुच्यते ॥५९॥

मानपरिभाषा ।

मानमादौ परीक्षेत योगान्निर्मापयेत्ततः ।
योगनिर्माणसिद्ध्यर्थं मानं निर्दिश्यतेऽधुना ॥६०॥
षड्भिस्तु सर्षपैर्गौरैर्यवस्त्वेकः प्रकीर्तितः ।
त्रिभिर्यवैश्च गुञ्जैका मता सैवेह रक्तिका ॥६१॥
वसुसंख्योन्मिताभिश्च रक्तिकाभिस्तु माषकः ।
माषकै रविसंख्यातैस्तोलकं परिकीर्तितम् ॥६२॥
वटकः क्षुद्रकश्चैव द्रंक्षणश्च प्रकीर्तितः ।
तोलकद्वितयेनेह कर्षः स्यात्सैव तिन्दुकः ॥६३॥

मृतलोहस्य स्थूलपरीक्षामुक्त्वा सूक्ष्मपरीक्षामाह-पुटे ध्मातं मूषायां निधायाङ्गाराग्नौ स्थापितं, तारमानं न त्यजेत् रजतं न्यूनमधिकम्वा न भवेत् यदा तदा तन्मृतं लोहं ज्ञेयम् ॥५५॥

मित्रपञ्चकं प्रागुक्तं गुञ्जाद्यम्, प्रकृतिं नैति पुनर्लौहरूपन्न भवति ॥५६॥

यच्च लौहं तारस मन्वितं ईषत्तारं सम्मेल्याग्नौ ध्मातं सत् तारे रजते न लगति रजतसम्पृक्तं न भवति तन्निरुत्थम् ॥५७॥

अथामृतीकरणं सप्रयोजनमाह लोहादीनामिति—आदिना गगनादिग्रहणम् । शिष्टदोषाः ताम्रादीनां वान्तिभ्रान्त्यादयः, तेषामपनुत्तिर्विनाशः ॥५८॥

विन्दुशः परिस्रुतं नीरं अर्कपदवाच्यं तत्परिस्रुतम् ॥५९॥

अक्षः स एव कथितो विडालपदकं तथा ।
कवलग्रहसंज्ञश्च सुवर्णश्च निगद्यते ॥६४॥
कर्षद्वयं त्वर्द्धपलं स्याच्छुक्तिश्च निगद्यते ।
मता चाष्टमिका सैव पलार्द्धश्च प्रकीर्तितम् ॥६५॥
शुक्तिभ्यान्तु पलं ज्ञेयं मुष्टिः षोडशिका च सा ।
चतुर्थिका च बिल्वश्च प्रकुञ्चश्च निगद्यते ॥६६॥
पलाभ्यां प्रसृतं ज्ञेयं प्रसृतिश्च निगद्यते ।
प्रसृतिभ्यां समाख्यातः कुडवश्चाञ्जलिः स्मृतः ॥६७॥
कुडवाभ्यां शरावः स्यात् मानिका च निगद्यते ।
तदेवाष्टपलं ख्यातं रसतन्त्रे विचक्षणैः ॥६८॥
दशभिश्च पलैरत्र सेरस्त्वाधुनिकः स्मृतः ।
अशीतितोलकमितः स एव सेरकः स्मृतः ॥६९॥

धन्वन्तरिभागः ।

अर्द्धं सिद्धरसादीनां तथैव घृततैलयोः ।
पादस्तु मृतधात्वादेरवलेहस्य चाष्टमः ॥७०॥
भागस्तुरीयोऽरिष्टादेश्चूर्णादीनाञ्च सप्तमः ।
भिषग्वराय लोकेऽस्मिन् स्वास्थ्यमङ्गलकाम्यया ॥७१॥
धन्वन्तरिं विनिर्दिश्य रोगिभिर्दीयते तु यः ।
पूर्वाचार्यैः समाख्यातो भागो धन्वन्तरेस्तु सः ॥७२॥

विश्वासघातको वैद्यः ।

भागाद्धन्वन्तरेर्लोभादधिकं यो हरेद्भिषक् ।
दद्याच्च भेषजं दुष्टं स वै विश्वासघातकः ॥७३॥
इयमिह रसतन्त्रागाधरत्नाकराद्या
परिचितपरिभाषामूल्यरत्नानि चित्वा ।

अथ मानपरिभाषा—योगान् मृत्युञ्जयरसप्रभृतीन् । वसुसंख्या अष्टमिता, 'अष्टौ वसवः' इति स्मरणात् । रविसंख्यातैः द्वादशभिः । सैव तिन्दुक इत्यत्र सन्धिः "सैष दाशरथी रामः" इतिवत् । दशभिश्च पलैरिति पलस्याष्टतोलकमितत्वात् । आधुनिकः वर्तमाने प्रचलितः ॥६०–६९॥

प्राचीनक्रमाद् धन्वन्तरिभागो निगदव्याख्यातः ॥७०–७३॥

इयमिहेत्यादिनोपसंहारः—रसतन्त्रमेवागाधो रत्नाकरस्तस्मात् परिचिताः व्यावहारिक्यः परिभाषा एव अमूल्यानि रत्नानि, चित्वा एकत्रीकृत्य, 'रत्नमाला'

रुचिरतरनिवेशा गुम्फिता कण्ठमाला
भवतु विबुधकण्ठालम्बिनी सा नितान्तम् ॥७४॥

इति परिभाषाविज्ञानीयो नाम द्वितीयस्तरङ्गः ।

---

## अथ मूपादिविज्ञानीयस्तृतीयस्तरङ्गः ।

मूषानामानि ।

मूषा हि कुमुदी ख्याता प्रोक्ता कुमुदिका च सा ।
क्रौञ्चिका वह्निमित्रा च पाचनी च निगद्यते ॥१॥
मुष्णाति दोषान् यस्मात्सा तस्मान्मूषा प्रकीर्तिता ।
कुमुदाकारसादृश्यात् कुमुदी च निगद्यते ॥२॥
वह्निर्मित्रं यतश्चास्या वह्निमित्रा ततः स्मृता ।
द्रव्यपाचनयोगाच्च पाचनी समुदीरिता ॥३॥

पिधानम् ।

द्रव्यपूरितमूषादेः द्रव्यपातनिवृत्तये ।
आच्छादकं भवेद् यत्तु पिधानं तदिहोच्यते ॥४॥

सन्धिलेपनम् ।

मूषादीनां तु यत्सन्धौ किट्टाद्यैः स्याद्विलेपनम् ।
तत्सन्धिलेपनं ख्यातं तच्चोक्तं सन्धिबन्धनम् ॥५॥

मूषानिर्माणोचिता मृत्तिका ।

सशर्करा पाण्डुरा च वह्नितापसहा चिरम् ।
स्थूला च मृत्तिका या स्यात् मूषार्थं सा मतोत्तमा ॥६॥

इति युक्तः पाठः औचित्यात्, विबुधकण्ठालम्बिनी विद्वत्कण्ठीकृता ॥७४॥

ज्ञानसौलभ्याय मूषापर्यायाः समानप्रवृत्तिनिमित्तत्वात् । नाम्नामर्थपरीक्षणम्मौलिकताद्योतनार्थम् । मुष्णाति अपनयति दोषान् तन्मध्यपतितद्रव्याणामग्निसंयोगात् तस्मान्मूषा । कुमुदो रात्रिपुष्पश्चन्द्रदयितस्तस्याकारो वर्तुलहस्वविकस्वरास्यस्तत्सादृश्याद् गौणं नाम "सिंहो माणवक" इतिवत्, क्रौञ्चिका तन्मुखाकारसामान्यात्, वह्निमित्रा साहचर्यात्, पाचनी द्रव्यपाचनात् ॥१-३॥

द्रव्यपूरितमूषादेरित्यपादाने पञ्चमी । द्रव्यस्य पातः बहिरुच्छलनं, तन्निवर्तकं पिधानकम् ॥४॥

सन्धिलेपनं व्याख्यासमम् ॥५॥

सशर्करा स्फुटनभयराहित्यात्, वह्नितापसहा वह्नौ स्फुटनावर्जिता ॥६॥

सामान्यमूषा ।

शिखित्रकैर्दग्धतुषैः शणेन सलद्दिका दण्डसुकुट्टिता च ।
या मृत्तिका तद्विहिता तु मूषा सामान्यमूषा कथिता रसज्ञैः ॥७॥

वज्रमूषा ।

त्रयो भागा मृदो द्वौ तु शणलद्दिकयोस्तथा ।
भागो दग्धतुषादेश्च किट्टस्य त्वर्धं एव च ॥८॥
एभिः कृता तु या मूषा वज्रमूषा तु सा मता ।
प्रयुज्यते विशेषेण सत्वपातनकर्मणि ॥९॥

योगमूषा ।

तुषाद्यैश्च विडाद्यैश्च कृता चापि विलेपिता ।
सूतसिद्धिकरी चैषा योगमूषा निगद्यते ॥१०॥

वज्रद्रावणिका मूषा ।

समैर्भूनागगाराद्यैस्तुषाद्यैश्चापि निर्मिता ।
क्षीरैश्च माहिषैर्मूषा वज्रद्रावणिका मता ॥११॥
वज्रद्रावणिका मूषा वज्रसत्वप्रसाधिका ।
यामद्वयमपि ध्माता नासौ द्रवति कर्हिचित् ॥१२॥

गारमूषा ।

दग्धषड्गुणगारेण मृदा चासितया तु या ।
विधीयते च किट्टाद्यैर्गारमूषा तु सा मता ॥१३॥
यामयुग्ममपि ध्माता नासौ द्रवति निश्चितम् ।
ढालनादौ विशेषेण रसज्ञैः सा प्रयुज्यते ॥१४॥

गोस्तनीमूषा ।

सपिधाना शिखोपेता गोस्तनाकारसन्निभा ।

शिखित्रकैर्जलनिर्वापितैरङ्गारैः । लद्दिका घोटकपुरीषम् । दण्डेन मुसलादिना सामान्यमूषेत्यनुक्तविशेषमूषास्थाने ग्राह्या ॥७॥

वज्रमूषा काठिनतायां वज्रतुल्या, यथाभागं मृत्तिकाशणादिक्षेपश्च सुश्लक्ष्णताहेतुः व्यपगतस्फुटनभयो निर्माणसुखश्चेति ॥८-९॥

सूतसिद्धिकरी पारदसाधनकारिका ॥१०॥

भूनागः कञ्चुलिकस्ताम्रवर्णः कीटविशेषः सरीसृपो वर्षासु जायमानः । गारो जलप्लुता मृत्तिका । यामद्वयमपि ध्मातेति अत्यन्तदृढेत्यर्थः ॥११-१२॥

असितया कृष्णया ॥१३-१४॥

सत्वद्रावणशुद्ध्यर्था सा मूषा गोस्तनी[1] मता ॥१५॥

मल्लमूषा।

सम्पुटाकारतां नीता मल्लद्वितययोजनात्।
मल्लमूषा समाख्याता पर्पट्यादिप्रसाधिका ॥१६॥

महामूषा।

वर्तुला चिपिटा मूले स्थूला चायामविस्तरा।
विस्तृतास्या च या मूषा महामूषा तु सा मता ॥१७॥
लोहाभ्रताप्यसत्वादेः पुटनाय भिषग्वरैः।
प्रयुज्यते महामूषा स्थूलमूषा च सा स्मृता ॥१८॥

वृन्ताकमूषा।

धत्तूरपुष्पाकारेण सच्छिद्राष्टाङ्गुलेन च।
नालेन तूर्ध्वतः श्लिष्टा सुदृढं द्वादशाङ्गुला ॥१९॥
वृन्ताकसदृशाकारा मूषा वृन्ताकमूषिका।
साधयेत्खर्परादीनां सत्वं वै मूषयाऽनया ॥२०॥

मूषाप्यायनकम्।

द्रव्ये द्रवोन्मुखे जाते मूषाया वह्नियोगतः।
निष्कासनं क्षणं यत्तु तन्मूषाप्यायनं मतम् ॥२१॥

शिखोपेता शिखायुक्ता, ग्रहणसौकर्याय ॥१५॥

मल्लद्वितयं चपकयुगम्। पर्पट्यादिप्रसाधिकेति न स्वर्णपर्पट्यादिसाधनमभिप्रेतम्, अपितु विशिष्टो रसः कश्चित्। यथा रसरत्नसमुच्चये त्रैलोक्यसुन्दरः—विमर्दिताभ्यां रसगन्धकाभ्यां नीरेण कुर्यादिह गोलकन्तं, भाण्डे नवीने विनिवेश्य पश्चात्तद्गोलकस्योपरि ताम्रपात्रम्। सार्धम्मुहूर्तं विनिरुध्य धीमानुद्दीपयेद्दीप्तकृशानुनास्य, अधस्ततः सिद्ध्यति पर्पटीय नवज्वरारण्यकृशानुमेघः। इति ॥१६॥

आयामविस्तरेति आयामे विस्तारे च समा, विस्तृतं आस्यं मुखं यस्याः सा विस्तृतास्या ॥१७-१८॥

वृन्ताकमूषायां धत्तूरपुष्पाभनालनिवेशः सत्वपातसुखार्थः। नालस्य विस्तृतं मुखं मूषामुखे संयोज्य सन्धिबन्धनं विधेयम् ॥१९-२०॥

मूषाऽऽप्यायनं मूषारक्षार्थमौषधदाहनिवारणञ्च। द्रवोन्मुखे जात इति तदानीं मूषाऽऽप्यायनकालो नार्वाक् ॥२१॥

---

१—इयमेव मूषा रसार्णवे अन्धमूषाख्यया प्रतिपादिता। तथा हि—
"अन्धमूषा तु कर्तव्या गोस्तनाकारसन्निभा।
पिधानकसमायुक्ता किञ्चिदुन्नतमस्तका" ॥१॥ [चतुर्थपटलः]

अङ्गारधानिका ।

अङ्गारधानिका ख्याता हसन्ती च हसन्तिका ।
अङ्गारशकटी चापि हसनी च निगद्यते ॥२२॥
अङ्गारधानिका ह्येषा मृदुद्रव्यप्रसाधिका ।
वङ्गादीनां ढालनादौ विशेषेण प्रयुज्यते ॥२३॥

कोष्ठिका ।

सत्वादिपातनाद्यर्था द्रव्यढालनसाधिका ।
वह्निसन्धानिका या तु कोष्ठिका सा निगद्यते ॥२४॥

अङ्गारकोष्ठिका ।

नृपहस्तमितोत्सेधे तदर्धायामविस्तृता ।
मध्यतश्चतुरस्रा च मृदा च परिलेपिता ॥२५॥
चतुरङ्गुलमानेन रन्ध्रेण परिशोभिता ।
नालिकां समकोणाञ्च रन्ध्रे तिर्यङ् निवेशयेत् ॥२६॥
नालिकाया मुखे चैव भस्त्रावक्त्रं निवेशयेत् ।
आपूर्य कोकिलैः कोष्ठीं द्रव्यमूषान्वितां धमेत् ॥२७॥
अङ्गारकोष्ठिका ख्याता द्रव्यढालनसाधिका ।
सत्वानां पातने चेयं विशेषाद्विनियुज्यते ॥२८॥

पातालकोष्ठिका ।

वितस्तिविस्तृतं गर्तं भूमौ कुर्याद्विधानतः ।
तन्मध्ये वर्तुलं छिद्रं निम्नदेशे प्रकल्पयेत् ॥२९॥
गर्तमध्यगते छिद्रे तिर्यङ् नालं निवेशयेत् ।
नालवक्त्रे च भस्त्राया मुखं सम्यङ् निरोधयेत् ॥३०॥
द्रव्यमूषां कोष्ठिकायां निधाय भस्त्रया धमेत् ।
पातालकोष्ठिका ह्येषा मृदुद्रव्यप्रसाधिका ॥३१॥

अथ पुटलक्षणम् ।

रसोपरसलोहादेः पाकमानप्रमापकम् ।
उत्पलाद्यग्निसंयोगात् यत्तदत्र पुटं स्मृतम् ॥३२॥

अङ्गारधानिका यथार्थनाम्नी । उज्ज्वलतासादृश्याद् हसन्ती च ॥२२-२३॥

वह्निसन्धानिका सर्वतोऽवरुद्धवह्नितया सम्यग्द्रव्यतापकरी ॥२४॥

उत्सेधे उच्चतायां नृपहस्तमिता सपादहस्तपरिमाणा, चतुरस्रा चतुष्कोणा ॥२५-२८॥

वितस्तिविस्तृतं द्वादशाङ्गुलमानम् । यदुक्तम्-"पातालकोष्ठिका ह्येषा मृदूनां सत्वपातनी । ध्मानसाध्यपदार्थानां नन्दिना परिकीर्तिता" ॥२९-३१॥

अथ क्रमप्राप्तं पुटलक्षणमाह—रसः पारदः, उपरसा अभ्रादयः, लोहाः

पुटप्रयोजनम्।

भवेद्यतः पुटादेव दोषहानिर्गुणोदयः।
रसोपरसलोहानां पुटपाकस्ततः स्मृतः ॥३३॥
पुटपाकेन लोहादेर्निरुत्थत्वञ्च दीपनम्।
भवेद्धारितरत्वञ्च पुटपाकस्ततः स्मृतः ॥३४॥
मृतलोहादिकं यस्मादतिशेते मृतं रसम्।
पुटपाकविधानेन, पुटं तस्मात्प्रशस्यते ॥३५॥

सामान्यपुटक्रमः।

मूषागते तु लोहादौ पुटनीये विशेषथा।
वह्निस्तु स्वानुकूल्येन तथा स्यात्तु पुटक्रमः ॥३६॥

सूर्यपुटलक्षणम्।

द्रव्याणां भावितानान्तु भावनौषधजै रसैः।
शोषणं सूर्यतापे यत्तत्सूर्यपुटमुच्यते ॥३७॥

महापुटम्।

व्यामार्द्धनिम्ने चतुरस्ररूपे हस्तद्वयायाममिते च कुण्डे।
वन्योत्पलापूरितगर्भभागे मूषां निदध्यात्पुटनीयपूर्णाम् ॥३८॥
पुनस्तु विन्यस्य वनोत्पलानि सम्पूरयेत्कुण्डमुखं रसज्ञः।
सन्दीप्य वह्निं पुटनं ततस्तन्महापुटाख्यं विबुधैः प्रदिष्टम् ॥३९॥

गजपुटम्।

नृपकरचतुरस्रोत्सेधदैर्घ्ये तु कुण्डे
छगणगणभृतार्द्धे मूषिकां स्थापयित्वा।
पुटनमिह भवेद्यच्छाणपूर्णोर्द्धभागे
गजपुटमिह तन्त्रे भाषितं तद्रसज्ञैः ॥४०॥

सुवर्णादय, तेषां पाको वह्निसंयोगेन गुणान्तरपरिणाम. तस्य मानज्ञापकम्, वनगोमयादिना तुषादिग्रहः ॥३२॥

अथ विशिष्टं प्रयोजनम्—दोषाणां रोगहेतूनाम्, गुणानां रोगापनयनशक्तीनाम्। दीपनं तीव्रगुणता। तदुक्तम्—रसादिद्रव्यपाकानां प्रमाणज्ञापनं पुटम्। नेष्टो न्यूनाधिकः पाक. सुपाकं हितमौषधम् ॥ लोहादेरपुनर्भावो गुणाधिक्यं ततोऽग्रथता। न चाप्सु मज्जनं रेखापूर्णता पुटतो भवेत् ॥ पुटाद्ग्राम्णो लघुत्वञ्च शीघ्रव्याप्तिश्च दीपनम्। जारितादपि सूतेन्द्राल्लोहानामधिको गुणः ॥३३-३७॥

व्यामो नाम विस्तारितबाहुयुगस्य पुंसः दक्षिणहस्तमध्यमाङ्गुल्यग्रभागाद् वामहस्तमध्यमाङ्गुल्यग्रभागपर्यन्तं दीर्घता। "चतुरशीत्यङ्गुलो व्यामः" इति कौटिल्यः। व्यामो बाह्वोरन्तरमित्यमरश्च ॥३८-३९॥

गजपुटन्तु नृपकरचतुरस्रोत्सेधदीर्घं सपादहस्तं सर्वत इत्यर्थः। छगणश्छाणो वन्योपल इत्यनर्थान्तरम् ॥४०॥

वाराहपुटम् ।

कुण्डे त्वरत्निमानेन चतुरस्रे तथोच्छ्रिते ।
पुटं यद् दीयते तत्तु वाराहपुटमुच्यते ॥४१॥

कुक्कुटकपुटम् ।

वितस्तिद्वयमानेन निम्ने च चतुरस्रके ।
पुटं यद्दीयते तत्तु मतं कुक्कुटकं बुधैः ॥४२॥

कपोतपुटम् ।

वन्योत्पलैरष्टसंख्यैः क्षितौ यद्दीयते पुटम् ।
रसादीनान्तु सिद्ध्यर्थं तत्कपोतपुटं स्मृतम् ॥४३॥

गोर्वरपुटम् ।

गोर्वरैर्वा तुषैर्वापि खलु कुण्डेऽथवा क्षितौ ।
पुटं यद्दीयते विज्ञैस्तद् गोर्वरपुटं स्मृतम् ॥४४॥

भाण्डपुटम् ।

मूषागर्भे तुषापूर्णे स्थूले भाण्डेऽग्नियोजनात् ।
दीयते यत्पुटं विज्ञैस्तद् भाण्डपुटमुच्यते ॥४५॥

वालुकापुटम् ।

प्रतप्तवालुकागर्भे न्यस्य मूषादिकं दृढम् ।
यद् दीयते पुटं तत्तु वालुकापुटमुच्यते ॥४६॥

भूधरपुटम् ।

भूमिगर्भे कुमुदिकां विन्यस्य द्व्यङ्गुलोपरि ।
यद् दीयते पुटं तत्तु पुटं भूधरसंज्ञकम् ॥४७॥

लावकपुटम् ।

गोर्वरैर्वा तुषैर्वापि वितस्त्यूर्ध्वं पुटन्तु यत् ।
मृदुद्रव्यप्रसिद्ध्यर्थं तल्लावकपुटं मतम् ॥४८॥

पुटमानानुक्तौ पुटप्रदानप्रकारः ।

पुटनाम्नामनिर्देशे वीक्ष्य द्रव्यबलाबलम् ।
पुटेष्वन्यतमं दद्यात् यत्स्याद्युक्ततमं भृशम् ॥४९॥

अरत्निः विस्तृतकनिष्ठिको मुष्टिः ॥४१॥
वितस्तिः द्वादशाङ्गुलः ॥४२॥
क्षितौ इति न विनैव गर्तं, किन्तु ईषद्गर्तं विधायेत्यर्थः ॥४३॥
स्थूले भाण्डे कुसूलादौ ॥४४-४६॥
द्व्यङ्गुलोपरि अङ्गुलयुगमितां वालुकामापूर्य तदुपरीत्यर्थः । कुमुदिका मूषा । मूषाया उपरि समन्ततश्चापि द्व्यङ्गुलमिता वालुका पूरणीया ॥४७॥

उपलनामानि ।

उपलं चोत्पलं ख्यातं गिरिण्डं पिष्टकन्तथा ।
छाणञ्च छगणञ्चैव करीषञ्च निगद्यते ॥५०॥

इति मूषादिविज्ञानीयो नाम तृतीयस्तरङ्गः ।

---

## अथ यन्त्रविज्ञानीयश्चतुर्थस्तरङ्गः ।

यन्त्रलक्षणम् ।

रसोपरसलोहाद्या मारणाद्यर्थसिद्धये ।
यन्त्र्यन्तेऽनेन यस्मात्तु तस्माद् यन्त्रं प्रकीर्तितम् ॥१॥

दोलायन्त्रलक्षणम् ।

सूतादिकं स्वेदनीयं निक्षिपेत् त्रिगुणाम्बरे ।
स्फीतकेन निरुध्याथ पोट्टलीं कारयेद् भृशम् ॥२॥
पूरितार्द्धोदरे भाण्डे द्रवैस्तन्मुखपार्श्वयोः ।
रन्ध्रद्वयं विधायाथ तत्र दण्डं विनिक्षिपेत् ॥३॥
दण्डमध्ये तु सुदृढं बध्नीयाद् द्रव्यपोट्टलीम् ।
गुरुदर्शितमार्गेण वह्निं प्रज्वालयेदधः ॥४॥
स्वेदयेच्च ततश्चैतद् दोलायन्त्रमिति स्मृतम् ।
द्रव्याणां शोधनाद्यर्थं विशेषेण नियुज्यते ॥५॥

ऊर्ध्वपातनयन्त्रम् ।

द्वादशाङ्गुलमुखी सुवर्तुला सुदृढा च खलु गर्भविस्तृता ।
अङ्गुलद्वयमितोष्ठसंयुता पातने भवति निम्नगा घटी ॥६॥

लावकपुटेऽपि, सर्वतः वितस्तिप्रमितैः गोवरैस्तुपैर्वा मूषाऽऽच्छादनीया । अन्यत्स्पष्टम् ॥४८-५०॥

अथादौ यन्त्रलक्षणम्—मारणशोधनादौ रसादिनियन्त्रणप्रयोजनं यन्त्रमिति निष्कर्षः । तदुक्तं रसवाग्भटे—स्वेदादि कर्म निर्मातुं वार्तिकेन्द्रैः प्रयत्नतः । यन्त्र्यते पारदो यस्मात्तस्माद्यन्त्रमिति स्मृतम् ॥ इति ॥१॥

त्रिगुणाम्बरे त्रिपुटीकृतवस्त्रे, केचित्तु वस्त्रमध्येऽपि भूर्जपत्रादिकं निधाय तत्र सूतादिप्रक्षेपमाहु: सम्प्रदायात् । स्फीतकेन 'फीता' इति भाषाप्रसिद्धेन, सुदृढं बध्नीयादिति यथा तलस्पर्शो न भवति । शोधनाद्यर्थमिति आदिशब्देन दीपनादावपि प्रयुज्यते, यथा दीपने—"निक्षिप्याथ दिनद्वयं बुधवरो दोलाख्ययन्त्रे पचेत्" उत्थापने च—"क्षाराद्यैः स्वेदयेत्सम्यग् दोलायन्त्रे भिषग्वरः" इति च वक्ष्यते पञ्चमतरङ्गे ॥२-५॥

उक्तसर्वगुणसंयुता तले छिद्रयुक्तदृढवृत्तिकान्विता ।
ऊर्ध्वगा च जठरोज्ज्वला घटी तूर्ध्वपातनविधौ प्रशस्यते ॥७॥
निम्नगायां रसं क्षिप्त्वा मेलयेदनयोर्मुखम् ।
सम्वेष्ट्य शोषयेत् सन्धिं चुल्ल्यामारोपयेत्ततः ॥८॥
नलिकां वृत्तिकाछिद्रे न्यस्य सन्धिं प्रलेपयेत् ।
वृत्तिमध्ये क्षिपेत्तोयं नलिकामुखमागतः ॥९॥
तप्तं निष्कासयेत्तोयं शीतलञ्च विनिक्षिपेत् ।
रसज्ञैः कीर्तितमिदमूर्ध्वपातनयन्त्रकम् ॥१०॥

अधःपातनयन्त्रम् ।

ऊर्ध्वपात्रान्तरे सूतं लिप्त्वाधःपात्रके जलम् ।
निक्षिप्य भूमौ गर्तञ्च विधाय विन्यसेद् दृढम् ॥११॥
प्रदीप्तैश्छगणैस्तत्र वह्निं प्रज्वालयेद् भृशम् ।
रसज्ञैः कीर्तितमिदमधःपातनयन्त्रकम् ॥१२॥

तिर्यक्पातनयन्त्रम् ।

नतनाले घटे दीर्घे रसराजं विनिक्षिपेत् ।
तन्नालं योजयेदन्यकुम्भगर्भे प्रयत्नतः ॥१३॥
रोधयेदथ यत्नेन रसगर्भघटीमुखम् ।
ततो रसघटस्याधो वह्निं प्रज्वालयेद् भृशम् ॥ १४ ॥
पूरयेच्च घटं त्वन्यं विमलैः शीतलैर्जलैः ।
यन्त्रमेतत्समाख्यातं तिर्यक्पातनसंज्ञकम् ॥ १५ ॥

भस्मयन्त्रम् ।

मृन्निर्मितं पात्रमिहाहरेद् दृढं वितस्तिगम्भीरमथोऽतिनूतनम् ।

द्व्यङ्गुलमित ओष्ठो मुखवृत्तिका यस्याः, तच्च सुष्ठु मुखसन्धानाय द्रव्यनिर्गमरोधाय च । अस्याश्च तलबहिर्भागे जलस्थापनाय दृढा वृत्तिका एकतश्छिद्रयुता कार्या, सा च जलमृत्स्नया विधातव्या, यद्वा तादृशवृत्तिकायुक्तमेव भाण्डं ग्राह्यम् । जलमृत्तिकालक्षणं यथा—"लेहवत्कृतबब्बूलक्वाथेन परिमर्दितम् । जीर्णकिट्टरजः सूक्ष्मं गुडचूर्णसमन्वितम् । इयं हि जलमृत्प्रोक्ता दुर्भेद्या सलिलैः खलु ॥" जठरज्वालया औषधनैर्मल्याय उज्ज्वलं निर्मलं विधेयम् । वृत्तिकाछिद्रे नलिकान्यास उष्णीभूतजलनिष्कासनार्थः । अन्यत् सुगमम् ॥९-१०॥

ऊर्ध्वपात्रान्तरे सूतं लिप्त्वेति तत्तदौषधमर्दितस्य पारदस्य ऊर्ध्वपात्रोदरे लेपम्विधायेत्यर्थः । अधःपात्रके जलं क्षिप्त्वा गर्ते जलपूरितमधःपात्रमेवासन्धिबन्धं पूरणीयम् । अथवाधोमुखीनतया स्थापितस्योर्ध्वभाण्डस्य सूतलिप्तान्तर्जठरभागं बाह्यतो विहायान्यत्सर्वं यन्त्रं गर्ते दृढं स्थापनीयम् ॥११-१२॥

तिर्यक्पातनयन्त्रम्-सुगमम् ॥१३-१५॥

भूत्या तदर्धं परिपूर्य यत्नात् तालादिगोलान् क्रमशो निदध्यात् ॥१६॥
निर्दिष्टभूत्यैव तदूर्ध्वभागं प्रपूर्य संमुद्य च भाण्डवक्त्रम् ।
चुल्ल्यां निधायाग्निमथ प्रदद्यादेतन्मतं वै खलु भस्मयन्त्रम् ॥१७॥

कच्छपयन्त्रस्य स्वरूपम् ।

जलपूरितभाजनमध्यगते घटखर्परके विनिधाय रसम् ।
बलिमध्यगतं कुमुदीनिहितं चपकेन भृशं पिदधीत ततः ॥१८॥
कृतसन्धिविलेपनमम्बुमृदा खलु खादिरकोकिलकैर्ज्वलनम् ।
परिदीप्य भृशं सुपचेद् गदितं किल कच्छपसंज्ञकयन्त्रमिदम् ॥१९॥
बलिजारणसिद्ध्यर्थं यन्त्रं कच्छपसंज्ञकम् ।
समाख्यातं रसाचार्यैं रससिद्धिप्रदायकम् ॥२०॥

भूधरयन्त्रम् ।

वालुकाचितसर्वाङ्गां कुमुदीं कुण्डगां पचेत् ।
आच्छाद्य दीप्तैरुपलैर्यन्त्रं भूधरसंज्ञकम् ॥२१॥

मृदङ्गयन्त्रम् ।

मृदङ्गसदृशाकारं शून्यगर्भञ्च सुदृढम् ।
पात्रं निर्मापयेद् युक्त्या रसतन्त्रविचक्षणः ॥२२॥
व्यावर्तनपिधानेन संयुक्तं त्वेकपार्श्वतः ।
परिभ्रामणशीलौ च वारङ्गौ पार्श्वयोस्तथा ॥२३॥

अथ भस्मयन्त्रम्—मृन्निर्मितमिति धात्वादिपात्रव्यावृत्तिरतिवह्नितापभयात्, दृढं वह्नितापसहम्, वितस्तिगम्भीरं द्वादशाङ्गुलनिम्नम् । यत्नादिति भूतिस्तरकाठिन्यार्थम्, भस्म चात्र वस्त्रपूतं सम्यक्श्वेतं कोकिलांशरहितञ्च ग्राह्यम्, सकोकिलं स्थालीनिहितं प्रस्फुटितस्तरं श्विकस्वरञ्च स्यात् तथा चौपधधूमरोधो न सम्यग् जायेत । न सम्यक् श्वेतञ्चेत् पुनः पाकेन श्वेतम्विधाय पश्चात्तस्य स्तरे पाक्यद्रव्यचक्रिका निवेशनीया, मुखपर्य्यन्तञ्च भाण्डपूर्तिर्भस्मना कार्य्या ॥१६-१७॥

अथ जारणोपयोगि कच्छपयन्त्रम्—कुमुदीनिहितं मूषास्थापितम्, चषकेण शरावेण, अम्बुमृदा जलेन मृत्स्नया च । भृशं सुपचेदागन्धकजारणम् । बलिर्गन्धकः ॥१८-२०॥

मूषां कुण्डे गर्ते वा निधाय वालुकाभिर्द्व्यङ्गुलं सर्वत आच्छाद्य उपरि दीप्तोपलाग्नियोगेन भूधरमन्वर्थम्भवति यन्त्रम् ॥२१॥

मृदङ्गो वाद्यविशेषः, शून्यगर्भं सुषिरम्, व्यावर्तनपिधानेन आवर्तमानरेखायायोगाद् भ्रामणद्वारा स्थिरीकर्तुं योग्येन पिधानकेन इति । वारङ्गौ "वारं वारं गच्छतीति" निरुक्त्या वारङ्गो मुष्टिग्राह्य उत्सेधो हस्तक इत्यर्थः । वारङ्गौ चक्रयोः

कारयेच्च ततो युक्त्या सूतं गन्धञ्च निक्षिपेत् ।
व्यावर्तनपिधानञ्च सुदृढं सन्निवेशयेत् ॥२४॥
ततो नरोत्सेधमितौ स्तम्भौ भूमौ तु विन्यसेत् ।
सम्मुखीनतया तत्र विधानज्ञो भिषग्वरः ॥२५॥
ततः प्रलम्बयेद् यन्त्रं स्तम्भयोर्दण्डसंश्रितम् ।
मृदङ्गयन्त्रकमिदं रसज्ञैः परिकीर्तितम् ॥२६॥
निर्मातुं कृत्रिमं म्लेच्छं रसतन्त्रविचक्षणैः ।
मृदङ्गयन्त्रमधुना विशेषेण प्रयुज्यते ॥२७॥

स्थालीयन्त्रम् ।

स्थाल्यां संस्थाप्य लोहादि मल्लेनावृणुयान्मुखम् ।
स्थाल्यधो ज्वालयेदग्निं स्थालीयन्त्रमिदं स्मृतम् ॥२८॥

वालुकायन्त्रम् ।

सवस्त्रकुट्टितमृदा लिप्ताङ्गीञ्च विशोषिताम् ।
रसादिपूर्णजठरां काचकूपीन्तु विन्यसेत् ॥२९॥

सद्व कार्यौ । व्यावर्तनपिधानस्य दृढं निवेशः पारदादिरक्षार्थः । नरोत्सेधमितौ सार्धत्रिहस्तौ स्तम्भौ सम्मुखीनतया समरेखायां भूमौ निखान्य तत्र दण्डबद्धं मृदङ्गयन्त्रं लम्बयेत् । प्रतिपार्श्वस्थितो दण्डः स्तम्भविहितच्छिद्राद्बहिः सचक्रः कार्यः । म्लेच्छं हिङ्गुलम्, रसगन्धकयोः सम्यङ्मिश्रणार्थमस्य प्रयोगः ॥२२-२७॥

मल्लेन शरावेण ॥२८॥

वालुकायन्त्रे—स्फुटनभयाल्लेपस्य दृढताऽपेक्षिता, अत आह सवस्त्रकुट्टितमृदेति । अत्र च वालुका स्थूलशर्करा ग्राह्या सम्यक्तापार्थं चालनीशोधिता च । स्पष्टमन्यत् । अत्रेदमवधेयम्—उक्तप्रचलितवालुकायन्त्रद्वारा मकरध्वजादिसाधनेन न स्वर्णसहितो रस ऊर्ध्वं लगतीति, तथाच निःस्वर्णक एवासौ नाधिकमुपयुक्तः स्यादिति विमृशद्भिर्मित्रवंशावतंसैः श्रीनरेन्द्रनाथनामधेयैः सूक्ष्मेक्षणमनु निश्चितं यत् प्रचलितं वालुकायन्त्रमेव न सम्यक् अतिप्राचीनतन्त्रेष्व वर्णितञ्चेति, प्राचीनाचार्य्यसम्मतेन वालुकायन्त्रेण मकरध्वजादिनिर्माणे स्वर्णसाहित्यं भवति रसेश्वरस्येति, तदेतद्रहस्यमत्यन्तकृपोपलब्धमाविष्कुर्मः सतां लाभाय । तद् यथा—'आदौ पुष्टां दीर्घनालां काचकूपीं विचक्षणः । समाहृत्य तत्तृतीयं भागं द्रव्येण पूरयेत् ॥ तस्या मुखं मुद्रयित्वा लिम्पेन्मृद्वस्त्रसप्तकैः । विशोष्य च सुगम्भीरे भाण्डे संस्थाप्य यत्नतः ॥ यथा तु कूपिकास्येऽपि वालुका स्यात् षडङ्गुला । तथा च मुखपर्य्यन्तं भाण्डमापूरयेद्बुधः ॥ मृत्कपटविलिप्ताङ्गं शरावेणाथ रोधयेत् । तस्याधोऽग्निं तथा दद्याद्यथा भाण्डमुखोपरि ॥ क्षिप्तं तृणं दहेदग्निः, स्वाङ्गशीतन्ततो नयेत् । एषोऽन्तर्धूमसिन्दूरनिर्माणे सिद्धसम्मतः ॥ प्रकारो वालुकायन्त्रस्यैतद्भिन्नो न चोत्तमः । इति ॥ अतएव च "अधःस्थश्च रसो

स्थाल्यां मृत्तूललिप्तायां सुदृढायां प्रयत्नतः ।
आकण्ठं कूपिकान्तत्र वालुकाभिः प्रपूरयेत् ॥३०॥
भाण्डाधो ज्वालयेदग्निं यथाकालं यथाक्रमम् ।
एतद्बुधैः समाख्यातं वालुकायन्त्रसंज्ञकम् ॥३१॥

लवणयन्त्रम् ।

लवणस्य च निक्षेपादेवं लवणयन्त्रकम् ।
प्रकीर्तितं भिषग्वर्यैर्मृगाङ्कादिरसार्थकम् ॥३२॥

पुटयन्त्रम् ।

पुटनीयं तु कुम्भादौ विन्यस्यावृणुयात् पुनः ।
पिधानेन दृढेनाथ विदध्यात्सन्धिबन्धनम् ॥३३॥
करीषाग्नौ चुल्लिकायां वा पचेदग्निमानवित् ।
लोहादीनां मारणार्थं पुटयन्त्रं प्रशस्यते ॥३४॥

वाष्पस्वेदनयन्त्रम् ।

नीरपूरितगर्भे तु पात्रे पात्रं निवेशयेत् ।
पार्श्वयोः कर्णिकोपेतं द्रव्यक्वाथप्रपूरितम् ॥३५॥
चुल्लिकायां निधायाथ वह्निं प्रज्वालयेदधः ।
संशोषयेत्ततः क्वाथं यावदायाति चूर्णताम् ॥३६॥
वाष्पेन स्वेदनं यस्माद् रसतन्त्रविशारदैः ।
तस्माद्यन्त्रमिदं ख्यातं वाष्पस्वेदनसंज्ञकम् ॥३७॥
वन्यौषधिविशेषाणां सत्वनिर्माणसाधकम् ।
यन्त्रमेतत्समाख्यातं भिषजां सुखहेतवे ॥३८॥

दर्विकायन्त्रम् ।

चषकं दर्विकाकल्पं दीर्घहस्तकसंयुतम् ।
दर्विकायन्त्रमेतद्धि गन्धशोधनसाधकम् ॥३९॥

ग्राह्य ऊर्ध्वलग्नं बलिन्त्यजेदि" ति प्राचीनोक्तिः सङ्गच्छते, तथाच तन्त्रान्तरे "तलस्थ तामनोज्ञत्वम्" इति मकरध्वजपरीक्षायां कश्चिदाह । यथा चातिप्राचीनसम्मतोऽयं पन्थास्तथा तत्र तत्रैव कणेहत्य अवलोकनीयं सुधीरैरित्यलमत्राम्रेडितेन । एतदेव च वालुकास्थाने लवणप्रक्षेपाल्लवणयन्त्रन्नाम, तच्च मृगाङ्करसादिसाधनम् । लवणस्य च पिष्टस्यैवात्र क्षेपः ॥ इति ॥ २९-३२ ॥

पुटयन्त्रम्—आवृणुयादिति आच्छादयेत् ॥३३-३४॥

वाष्पस्वेदनयन्त्रम्—वन्यौषधिसत्वनिर्माणसाधनं निगदव्याख्यातम् ॥
॥ ३५-३९ ॥

पालिकायन्त्रम् ।

एतदेव हि यन्त्रन्तु नतहस्तकसंयुतम् ।
पालिकायन्त्रमुद्दिष्टं रसतन्त्रविचक्षणैः ॥४०॥

डमरुकाख्ययन्त्रम् ।

स्थालिकोपरि विन्यस्य स्थालीं न्युब्जतयापराम् ।
पचेद्यथाक्रमं त्वेतद्यन्त्रं डमरुकाह्वयम् ॥४१॥

नाडिकायन्त्रम् ।

घटे तु चुल्लिकासंस्थे निक्षिपेत्सलिलादिकम् ।
अधोमुखं घटं त्वन्यं मुखे तस्य निधापयेत् ॥४२॥
उभयोर्मुखमालिप्य मृदा संशोषयेत्ततः ।
उपरिस्थे ततो भाण्डे नाडिकान्तु निवेशयेत् ॥४३॥
एतान्तु नाडिकां प्राज्ञो यत्नतः कुण्डलीकृताम् ।
जलद्रोण्यां विनिक्षिप्य भित्त्वा चाथ निवेशयेत् ॥४४॥
काचकूपीमुखे सम्यक्, वह्निं प्रज्वालयेत्ततः ।
यावद् घटस्थितद्रव्यसारो यातीह बाष्पताम् ॥४५॥
एतद्धि नाडिकायन्त्रं भिषग्भिः परिकीर्तितम् ।
परिस्रुताम्बुनिर्माणे विशेषेण प्रयुज्यते ॥४६॥

पातालयन्त्रम् ।

भूमौ हस्तमितं निम्नं विदध्याद् गर्त्तमुत्तमम् ।
तस्मिन् पात्रं निधायाथ तद्रूपं पात्रमन्यकम् ॥४७॥
आददीत ततस्तस्मिन्नौषधानि निधापयेत् ।
आस्यमस्य शरावेण छिद्रगर्भेण रोधयेत् ॥४८॥
पात्रमेतत्तु गर्तस्थे पात्रे यत्नेन विन्यसेत् ।
विदध्यादनयोर्यत्नात् सुदृढं सन्धिबन्धनम् ॥४९॥

पालिकायन्त्रम्—तैलपात्रात्तैलोद्धारार्थमधुनापि प्रयुज्यमानं 'पली' इति भाषायाम्, तत्प्रयोगश्च रसेन्द्रसारसंग्रहे कपर्दभस्मनिर्माणाय ॥४०॥

डमरूसमाकारं डमरूयन्त्रम्—अत्र केचिदधःस्थालीमुखमुपरितनस्थालीमुखान्तर्गतमिच्छन्ति सम्यग् द्रव्यपातार्थम् । एतत्प्रयोगो हिङ्गुलात्पारदोत्थापने गन्धकशोधनकर्मणि च । अनेन च गन्धकशुद्धिर्वक्ष्यते ॥४१॥

नाडिकायन्त्रम्—परिस्रुताम्बु इत्युपलक्षणं तेन सुरादिनिर्माणेऽपि बोद्धव्यम् ॥४२–४६॥

पातालयन्त्रम्—सुबोधम् ॥४७–५५॥

मृदा सम्पूर्य गर्तन्तु वह्निं दद्यात् प्रयोगवित् ।
स्वाङ्गशीतं ततो ज्ञात्वा रसतन्त्रविचक्षणः ॥५०॥
उपरिस्थन्तु वै पात्रं शनैः समवतारयेत् ।
अधःपात्रगतं तैलं गृह्णीयाच्च विधानतः ॥५१॥
एतद् बुधैः समाख्यातं यन्त्रं पातालसंज्ञकम् ।
आहर्तुं गन्धकादीनां तैलमेतत्प्रयुज्यते ॥५२॥

खल्वयन्त्रम् ।

चषकोपममत्यच्छं सुदृढं पिच्छिलोपलम् ।
सच्छिलाविहितं पात्रं खल्वयन्त्रमिहोच्यते ॥५३॥

खल्वयन्त्रस्य प्रयोजनम् ।

रसोपरसलोहादेः पेषणादिककर्मणि ।
रसतन्त्रक्रियादक्षैः खल्वयन्त्रं प्रयुज्यते ॥५४॥

खल्वयन्त्रस्य द्वैविध्यम् ।

खल्वयन्त्रं द्विधा प्रोक्तं रसतन्त्रे विशेषतः ।
प्रथमं वर्तुलाकारं द्रोणीरूपं द्वितीयकम् ॥५५॥

वर्तुलः खल्वः ।

विस्तारे तपनाङ्गुलः समतलो नीलाब्जतुल्यप्रभः
निम्नत्वे च नवाङ्गुलः सुमसृणो रुद्राङ्गुलोच्चायवान् ।
भित्त्या द्व्यङ्गुलसंमितः खलु तथा चेन्द्राङ्गुलो घर्षकः
खल्वोऽयं खलु वर्तुलो निगदितः सूतादिसिद्धिप्रदः ॥५६॥

द्रोणीरूपः खल्वः ।

उत्सेधे तुरगाङ्गुलः खलु कलातुल्याङ्गुलश्चायतौ
विस्तारे तपनाङ्गुलश्च मसृणो भित्त्या च वै द्व्यङ्गुलः ।
घर्षः सूर्यसमाङ्गुलः सुविशदो लोहादिभिर्निर्मितः
खल्वोऽयं रससिद्धिकृन्निगदितो द्रोणीनिभोऽत्युत्तमः ॥५७॥

उलूखलयन्त्रम् ।

दशाङ्गुलन्तु विस्तारे तूत्सेधे षोडशाङ्गुलम् ।
त्रयोदशाङ्गुलश्चैव निम्नत्वेन च सुदृढम् ॥५८॥

वर्तुलखल्वः—तपनाङ्गुलः द्वादशाङ्गुलः, रुद्राङ्गुल एकादशाङ्गुलः, इन्द्राङ्गुल श्चतुर्दशाङ्गुलः ॥५६॥

द्रोणीखल्वः—तुरगाङ्गुलः सप्ताङ्गुलः, कलातुल्याङ्गुलः षोडशाङ्गुलः । आयतौ दैर्घ्ये । तपनसूर्यशब्दाभ्यां द्वादशाङ्का ग्राह्याः ॥५७॥

अयसा निर्मितश्चैव मध्येऽतिमसृणीकृतम् ।
विंशत्यङ्गुलदीर्घश्च लोहदण्डः सुशोभनः ॥५९॥
उलूखलाभिधं यन्त्रं बुधैरेतत्प्रकीर्तितम् ।
ताप्यादीनां कुट्टनार्थं यन्त्रमेतत्प्रयुज्यते ॥६०॥
लघूनि चाथ दीर्घाणि युक्त्या यन्त्राणि कारयेत् ।
द्रव्यमानानुकूल्येन विधानज्ञो भिषग्वरः ॥६१॥
यन्त्राण्येतानि प्रोक्तानि दिग्दर्शनतया मया ।
अध्येतॄणां शिशूनान्तु सुखबोधाय सत्वरम् ॥६२॥

इति यन्त्रविज्ञानीयो नाम चतुर्थस्तरङ्गः ।

---

## अथ पारदस्य अष्टसंस्कारविज्ञानीयः पञ्चमस्तरङ्गः ।

### अथ पारदस्य नामानि ।

रसो रसेन्द्रः सूतश्च रसेशश्च रसेश्वरः ।
चपलो रसराजश्च पारदश्च शिवाह्वयः ॥१॥
रसनादभ्रकादीनां धातूनां कीर्तितो रसः ।
अभ्रकाद्यधिराजत्वाद्रसेन्द्र इति कथ्यते ॥२॥
देहलोहमयीं सिद्धिं सूतेऽतः सूत उच्यते ।
स्वभावाच्चपलो यस्मात् ततोऽसौ चपलः स्मृतः ॥३॥
आतङ्कपङ्कमग्नानां पारदानाच्च पारदः ।
अभ्रादिरसराजत्वाद्रसराजः स्मृतो बुधैः ॥४॥

### विशुद्धाविशुद्धसूतस्य स्वरूपम् ।

शुद्धः सूतो मतस्त्वन्तःसुनीलो बहिरुज्ज्वलः ।
सूर्यप्रभश्चाविशुद्धो धूम्रो वा परिपाण्डुरः ॥५॥

### अविशुद्धसूतस्य हेयत्वम् ।

सदोषो रसराजस्तु विदध्याद्विविधान् गदान् ।

उलूखलयन्त्रे—ताप्यं माक्षिकम् । स्पष्टमन्यत् ॥५८-६२॥

अत्र पारदनामानि तन्त्रव्यवहारसाधनानि, शिवाह्वयो यावच्छिवनामाभिधेयः । नामनिरुक्तिः शिष्यबोधार्था । रसनात् भक्षणात्, अधिराजत्वात् प्रधानत्वात्, देहसिद्धिः नीरोगता, लोहसिद्धिः स्वर्णादिरूपा, चपलश्चञ्चलः, आतङ्क एव पङ्कः तत्र मग्नानां पारदानात् ॥१-४॥

तत्र शुद्धसूतरूपम्—अन्तःसुनीलः मध्यावच्छेदेन नीलप्रभः । अविशुद्धस्तु परिपाण्डुरः ईषत्पीतवर्णः, स च त्याज्यः—"अन्तः सुनीलो बहिरुज्ज्वलो यो

तस्माद् दोषविहीनन्तु योगेषु विनियोजयेत् ॥६॥

अथ पारदस्य नैसर्गिका दोषाः।

नागवङ्गौ वह्निमलौ चापल्यं गरलं गिरिः।
असह्याग्निश्च विज्ञेया दोषा नैसर्गिका रसे ॥७॥
नागाद् व्रणं भवेत्कुष्ठं वङ्गात्तापोऽग्निदोषतः।
मलाज्जाड्यं तु चापल्याद् बीजनाशो विषान्मृतिः ॥८॥
गिरेः स्फोटोऽथ मोहश्च ह्यसह्याग्नेः प्रजायते।
एतैर्दोषैर्विहीनश्च रसेन्द्रमिह योजयेत् ॥९॥

पारदस्य सप्तकञ्चुकाः।

भेदी द्रावी मलकरी ध्वाङ्क्षी पर्पटिका च सा।
अन्धकारी पाटनिका कञ्चुकाः सप्त कीर्तिताः ॥१०॥

सप्तकञ्चुकानां परिचयः।

धातवो रससंश्लिष्टा यदा विष्णुपदामृतम्।
गृह्णन्ति हि तदा तेषां कश्चिद् भागोऽवशीर्यते ॥११॥
ततश्चूर्णत्वमापन्ना रसमाच्छादयन्ति ते।
तेनावरणसाम्येन धातवः सूतसंगताः ॥१२॥
कञ्चुकाख्यां भजन्तीति प्राच्यपाश्चात्यसंमतिः[1]।
केश्चिदेते कञ्चुकाख्या दोषा औपाधिकाः स्मृताः ॥१३॥

मध्याह्नसूर्यप्रतिमप्रकाशः। शस्तो, ऽथ धूम्रः परिपाण्डुरश्च चित्रो न योज्यो रसकर्मसिद्ध्यै" इति प्राचीनसंवादात् ॥५-६॥

पारददोषा नैसर्गिकाः प्राकृताः, तापो देहसन्तापः, जाड्यं चेष्टाहानिः। बीजनाशः शुक्रक्षयः, मोहो वैचित्यम् ॥७-९॥

अथ सप्तकञ्चुकाः—कञ्चुकवद् बहिरावरणे समाः। तन्नामानि यौगिकानि ध्वाङ्क्षी काकवत् कृष्णवर्णत्वात्, पाटनिका स्फोटहेतुः ॥ १० ॥

सप्तकञ्चुकानां परिचयः स्वरूपनिर्णयाय—रससंश्लिष्टाः प्राप्तपारदसंयोगाः धातवो नागवङ्गादयः यदा विष्णुपदामृतमम्बरपीयूषं (औक्सिजन् इत्याङ्गलभाषायाम्) गृह्णन्ति विशीर्णावयवत्वेनात्मानं लीनयन्ति, अवशीर्यते स्वरूपाच्च्यवते, तथा चावरणसामान्यात् रससंगतानां धातूनां कञ्चुकाख्येति प्राचां पाश्चात्यानाञ्च रासायनिकानां सम्मतिः। तथाच धातुसम्पर्कविनाशाय शुद्धिर्विधेया सूतस्येति। औपाधिका वणिग्भिः छलनार्थं मिश्रितैर्धातुभिः समुत्पन्ना एवैते दोषा इति केचित् ॥११-१३॥

---

1. Impure mercury, when shaken with air yields a black powder, caused by the oxidation of the metallic impurities, and the film of the oxide incloses a small globule of the liquid metal
(Chemistry by H. E. Roscoe and C. Schorlemmer F. R. S)

पारदशोधनस्यावश्यकता।

नैसर्गिकास्तु ये दोषा ये चान्ये कञ्चुकाह्वयाः।
तेषान्तु परिहाराय सामान्यं शोधनं स्मृतम् ॥१४॥
विशुद्धो रसराजस्तु सत्यं पीयूषसोदरः।
सदोषस्तु रसो वैद्यैर्यमोऽयमपरः स्मृतः ॥१५॥
तस्मात्सूतविशुद्ध्यर्थं युक्तः सुपरिचारकैः।
सर्वामादाय सामग्रीं रसशुद्धिं समारभेत् ॥१६॥

शोधनार्थं रसपरिमाणम्।

पलानां शतकं ग्राह्यं तदर्धार्धमथापि वा।
पलानां दशकं वापि पञ्चकं वा पलोन्मितम् ॥१७॥
पलान्न्यूनो न संग्राह्यः संस्कारार्थं रसो बुधैः।
बहुप्रयाससाध्यत्वाल्लाभाभावाच्च निश्चितम् ॥१८॥

अथ समयशोधनम्।

सुदिने शुभनक्षत्रे स्वेष्टदेवञ्च शङ्करम्।
भैरवञ्चापि सम्पूज्य रसकर्म समाचरेत् ॥१९॥

अथ रसपूजनम्।

अघोरेण च मन्त्रेण खल्वे संस्थापितं रसम्।
गन्धधूपादिभिः प्राज्ञः पूजयेद्भिषजां वरः ॥२०॥

अथ रसस्य साधारणशोधनम्।

आधिव्याधिविनाशार्थं प्रयोगार्थं रसेषु च।
सामान्यं शोधनं शस्तं रसतन्त्रविशारदैः ॥२१॥

प्रथमः शोधनप्रकारः।

धूमेष्टिकाहट्टविलासिनीनां सोर्णैस्तु चूर्णैः परिमर्द्य सूतम्।
प्रक्षालयेदम्लजलेन सम्यक् ततो रसो मुञ्चति नागदोषम् ॥२२॥

शुद्धस्तु पारदः सत्यं पीयूषसोदरः सर्वथा अमृततुल्यः, सदोषस्तु अपरो यम इति प्रभूतपीडाकर इत्यर्थः ॥१४-१६॥

शोधनाय रसपरिमाणं बहुप्रयाससाध्यस्य फललाभाय ॥१७-१८॥

समयशोधनमन्तरायप्रतीकाराय अभीष्टसिद्धये च। सुदिने व्यतीपातादिवर्जिते, शुभनक्षत्रे पुष्यादौ ॥१९

अघोरमन्त्रेणेति—अघोरमन्त्रश्च रुद्राध्यायोक्तः—"अघोरेभ्योऽथ घोरेभ्यो घोराघोरतरेभ्यश्च। सर्वतः सर्वसर्वेभ्यो नमस्ते रुद्ररूपिभ्यः" ॥२०॥

साधारणशोधनफलमाधिव्याधिविनाशः रसयोगप्रयोगयोग्यता चेत्यवधेयम् ॥२१॥

साधारणशोधनप्रकारमाह धूमेष्टिकेत्यादिना-धूमः महानसादौ इन्धनान-

मृगेक्षणाङ्कोलनिशोत्थचूर्णैः सूतो जहातीह तु वङ्गदोषम् ।
चित्रोऽग्निदोषं विनिहन्ति शीघ्रं दोषं मलोत्थं खलु राजवृक्षः ॥२३॥
चापल्यहारी खलु कृष्णधूर्तो विषापहर्त्री त्रिफला प्रशस्ता ।
दोषं गिरेस्त्र्यूषणमाशु हन्यात् त्रिकण्टको वह्न्यसहत्वदोषम् ॥२४॥
चूर्णं कलांशप्रमितं तु सूतात् सकन्यकं भाषितभेषजानाम् ।
विमर्दयेत्खल्वगतं दिनैकं प्रक्षालयेच्चापि ततोऽम्लतोयैः ॥२५॥
रीत्यानया शोधित ईशसंज्ञः सत्यं भवेत्कञ्चुकदोषहीनः ।
इत्थं विशुद्धं खलु सूतराजं नियोजयेद्वैद्यवरो रसेषु ॥२६॥

द्वितीयः शोधनप्रकारः ।

रसेश्वरं समसुधारजसा मर्दयेत् त्र्यहम् ।
ततो द्विगुणवस्त्रान्तर्गालितं खल्वके न्यसेत् ॥२७॥
रसोनं निस्तुषं तुल्यं तदर्धं लवणं हरेत् ।
तत्कल्के मर्दयेत्सूतं यावदायाति कृष्णताम् ॥२८॥
कृष्णं कल्कं परित्यज्य तथा प्रक्षाल्य युक्तितः ।
एवमेकेन वारेण रसेन्द्रः शुद्धिमाप्नुयात् ॥२९॥
श्रीमद्गुरुमुखोद्गीतः कृतश्च बहुशो मया ।
सौकर्यार्थं प्रयोगेषु प्रकारोऽयम्प्रकाशितः ॥३०॥

तृतीयः शोधनप्रकारः ।

कुमारिकाचित्रकरक्तसर्षपैः कृतैः कषायैर्बृहतीविमिश्रितैः ।
फलत्रिकेणापि विमर्दितो रसो दिनत्रयं सप्तमलैर्विमुच्यते ॥३१॥

लजः धूमनिःसारकान्तःशुषिरस्तम्भविलग्नो धूमः, इष्टिका पक्वेष्टिका, हदविलासिनी हरिद्रा, ऊर्णा मेषरोमाणि, अम्लजलेन काञ्जिकेन । अत्र च धूमादिचूर्णानां भागाः पारदात् षोडशांशाः स्युः । मृगेक्षणा इन्द्रवारुणी, अंकोलः अंकोठः "ढेरा" इति भाषायाम्, निशा हरिद्रा, एषां चूर्णैः । धूर्तः धत्तूरः, त्रिकण्टको गोक्षुरः । सकन्यकं कुमारीरससहितम् । ईशसंज्ञः पारदः ॥२२-२६॥

अथ द्वितीयः शोधनप्रकार. सुखसाधनार्थम्—समसुधारजसा पारदतुल्येन चूर्णकक्षोदेन, ततो द्विगुणवस्त्रान्तर्गालितम् । निस्त्वग्रसोनकल्केन पारदतुल्येन कल्ककृष्णीभावपर्य्यन्तं युक्त्या मर्दनम् । स्पष्टमन्यत् । अस्य प्रामाणिकतां बोधयति—श्रीमद्गुरुमुखोद्गीत इति । उक्तञ्चान्यत्रापि—"एकेन लशुनेनापि शुद्धो भवति पारदः । पिष्टो लवणसंयुक्तो मासैकं तप्तखल्वके ॥ आरनालेन चोष्णेन क्षालयेन्मर्दनोत्तरम् । रसं तत्र विलीनन्तु शोषयित्वाऽथ पातयेत् ॥" ऊर्ध्वपातनादिनेति शेष इति ॥२७-३०॥

तृतीयः शोधनप्रकारः कुमारिकेत्यादिना—बृहती क्षुद्रभण्टाकी, "क्षुद्रायां क्षुद्रभण्टाक्यां बृहतीति निगद्यते" इति भावप्रकाशात्, नतु कण्टकारी, बृहतीकण्टकार्य्योः परस्परं भेदात् । शिष्टं सुगमम् ॥३१॥

चतुर्थः शोधनप्रकारः।

गुडस्त्रिकटु यामिनी लवणपञ्चकं पावकः
फलत्रिकयवाग्रजौ खलु सुवर्चिकष्टङ्कणः।
तथा कितवसर्षपौ खलु समैस्तु विंशांशकैः
विशुद्ध्यति विमर्दितो रसवरोऽश्वसंख्यैर्दिनैः ॥३२॥
श्रीमद्गुरुमुखोद्गीतः कृतश्च बहुशो मया।
अनुभूतश्च योगेषु प्रकारोऽयं निरूपितः ॥३३॥

पञ्चमः शोधनप्रकारः।

नागवल्लीदलरसैस्तथा चार्द्रकजैः रसैः।
क्षारत्रययुतैश्चापि रसराजं विमर्दयेत् ॥३४॥
ततस्तेभ्यः पृथक्कृत्वा सप्तदोषविवर्जितम्।
मुक्ताफलसमाकारं रसराजं प्रयोजयेत् ॥३५॥

षष्ठः शोधनप्रकारः।

विमर्द्य सुधया सप्तदिनं धूमनिशेष्टकैः।
त्रिदिनं मर्दयेत्सूतं काञ्जिकैः क्षालयेत्ततः ॥३६॥
वस्त्रं चतुर्गुणं कृत्वा सूतं निःसारयेत्ततः।
सप्तकञ्चुकनिर्मुक्तो जायते निर्मलो रसः ॥३७॥

इति रसस्य सामान्यशोधनम्।

अथ हिङ्गुलोत्थितपारदस्य निर्माणप्रकारः।

हिङ्गुलं पारिभद्रस्य रसैः सम्पेषयेद् बुधः।
चाङ्गेर्या वा रसेनैव द्रवैर्जम्बीरजैस्तथा ॥३८॥
ऊर्ध्वपातनयन्त्रेण सप्तकञ्चुकवर्जितम्।
गृह्णीयान्निर्मलं सूतं रसतन्त्रविशारदः ॥३९॥
षोडशांशे निशाचूर्णे ततस्तं पेषयेद् बुधः।
अम्लेन पटुना चापि मर्दयेद्वा दिनद्वयम् ॥४०॥

चतुर्थः शोधनप्रकारः—यामिनी हरिद्रा, यवाग्रजो यवक्षारः, सुवर्चिकः स्वर्जिक्षारः, कितवः धत्तूरः, अश्वसंख्यैः सप्तभिः ॥३२-३३॥

पञ्चमः शोधनप्रकारः—नागवल्लीदलरसैः ताम्बूलपत्ररसैः, क्षारत्रयं स्वर्जिका-सौभाग्य-यवाग्रजाः ॥३४-३५॥

षष्ठः शोधनप्रकारः—सुगमः। चतुर्गुणवस्त्रेणेत्युपलक्षणं, शम्बरमृगचर्मणा चात्यन्ततनुना पारदस्य गालनं कार्य्यमिति गुरुसम्प्रदाय ॥३६-३७॥

अथ हिङ्गुलात् पारदनिर्माणप्रकारः—पारिभद्रः 'फरहद' इति ख्यातः। जम्बीरनिम्बुनीरैर्वा हिङ्गुलमर्दनं पारदविश्लेषणार्थम्, ऊर्ध्वपातनेन पारदपातनं

वस्त्रं चतुर्गुणीकृत्य ततो निःसारयेद्रसम् ।
योगेषु योजयेद्वैद्यो रसराजं सुनिर्मलम् ॥४१॥
गुरुदर्शितमार्गेण यन्त्रमानं प्रकल्पयेत् ।
मानाभावाद्रसेन्द्रस्य लेखितुं नैव शक्यते ॥४२॥

अथ पारदस्य अष्टौ संस्काराः ।

रसायनप्रयोगेषु रसागमविशारदः ।
रसराजं प्रयुञ्जीत कर्माष्टकविशोधितम् ॥४३॥
स्वेदनं मर्दनञ्चैव मूर्च्छनोत्थापने तथा ।
पातनत्रितयञ्चाथ बोधनं सुनियामनम् ॥४४॥
सुप्रदीपनमित्यष्टौ प्रोक्ताः सर्वोपयोगिनः ।
संस्कारा रसराजस्य रसशास्त्रविशारदैः ॥४५॥

स्वेदनलक्षणम् ।

दोलायन्त्रे स्थापयित्वा रसेन्द्रं क्षारैरम्लैरौषधैर्वा कषायैः ।
युक्त्या यत्स्यात्पाचनं स्वेदनं तत् प्राज्ञैरुक्तं दोषशैथिल्यकारि ॥४६॥

प्रथमः स्वेदनप्रकारः ।

पिप्पलीमरिचचित्रकार्द्रकैर्विश्वसैन्धवफलत्रिकान्वितैः ।
षोडशांशकमितैर्दिनत्रयं स्वेदयेद्रसवरं सकाञ्जिकैः ॥४७॥
नूतनं कल्कमादाय नातितीक्ष्णेन वह्निना ।
प्रत्यहं स्वेदयेद्धीमान् रसतन्त्रविशेषवित् ॥४८॥

नागवङ्गादिदोषापनोदाय, ततश्च हरिद्राचूर्णेनाथवा लवणेनाम्लेन च मर्दनं निर्मलीकरणाय। अद्यत्वे बहवोऽलसाः हिङ्गुलस्य द्विगुणवस्त्रवेष्टितस्य शनैर्ज्वालनद्वारा पारदविश्लेषणमातन्वते, स च लघुरपि प्रकारो रसस्य साकल्येनोर्ध्वपातनस्याभावात् नागवङ्गादिदोषापरिहारकत्वादुपेक्षित आचार्यैः, इत्यवधेयम् ॥३८-४२॥

अथ पारदस्याष्टौ संस्काराः—रसतन्त्रप्रसिद्धाः सर्वोपयोगिनश्च वर्ण्यन्ते, नाम्नामर्थैरेव तत्त्वमेषां व्याख्यातम् । नामकीर्तनादेव संख्यालाभेऽपि पुनरष्टौ इतिकथनं न्यूनाधिकतानिषेधाय । यद्यप्यष्टादशसंस्काराः प्राचीनतन्त्रप्रसिद्धास्तथापि न तेषामव्याधावुपयोगोऽतस्त इहोपेक्षिताः परिभाषासौकर्याय, तदेतदाह सर्वोपयोगिन इति ॥४३-४५॥

स्वेदनलक्षणम्—सुगमम् । तथाच रसवाग्भटः—"क्षाराम्लैरौषधैर्वापि दोलायन्त्रे स्थितस्य हि । पाचनं स्वेदनाख्यं स्यान्मलशैथिल्यकारकम्" इति ॥४६॥

प्रथमः स्वेदनप्रकारः—विश्वः शुण्ठी, पिप्पल्यादिनवद्रव्याणां पृथक्पृथगेकोंशः श्लक्ष्णपिष्टः, काञ्जिकमर्धपात्रम्, पारदस्य षोडशांशाः, चतुर्गुणवस्त्रस्थभूर्जपत्रपोट्टलीस्थं पारदं विधाय दोलया काञ्जिके त्रिदिनं स्वेदनम् । प्रतिदिनञ्च नूतनकाञ्जिककल्कक्षेपः । निगदव्याख्यातमन्यत् ॥४७-४८॥

द्वितीयः स्वेदनप्रकारः ।

त्र्यूषणं मूलकासुर्यौ पट्वकार्द्रकवह्नयः ।
तत्कल्कैः काञ्जिके सूतं स्वेदयेद्दिवसत्रयम् ॥४९॥

तृतीय. स्वेदनप्रकारः ।

पिप्पली मरिचविश्वभेषजे शृङ्गवेरलशुनार्द्रकाग्नयः ।
मेघनादलवणौ महाबला चुल्लिकालवणमाजशृङ्गिका ॥५०॥
आसुरी खलु गवेधुका वरा प्रक्षिपेद्रसकलांशकं पृथक् ।
तत्समस्तमथ व्यस्तमेव वा काञ्जिकेन सह मर्दयेद् बुधः ॥५१॥
कल्कतामुपगतेन तेन वै वस्त्रमङ्गुलिमितं प्रलेपयेत् ।
निक्षिपेद्रसवरं तदन्तरे स्फीतकेन सुदृढं निरोधयेत् ॥५२॥
दोलिकायन्त्रके स्थापयेत्पोट्टलीं नातितीक्ष्णानलं ज्वालयेत्सन्ततम् ।
नूतनं काञ्जिकं प्रक्षिपेत्प्रत्यहं स्वेदयेत्पारदं वासराणां त्रयम् ॥५३॥

मर्दनस्वरूपम् ।

क्षाराद्यैरौषधैर्वा यत् खल्वे सूतस्य पेषणम् ।
तन्मर्दनं बुधैः प्रोक्तं बहिर्मलनिवृत्तये ॥५४॥

मर्दनस्य प्रथमः प्रकारः ।

सैन्धवं सदनधूम आसुरी यामिनी लशुनमार्द्रकं वरा ।
षोडशांशमिह निक्षिपेद्रसान्मर्दयेद्रसवरं दिनत्रयम् ॥५५॥

मर्दनस्य द्वितीयः प्रकारः ।

इष्टिकाचूर्णकं सैन्धवं यामिनी गेहधूमो गुडश्चासुरी नागरम् ।
षोडशांशं क्षिपेत्सर्वमेतद्रसान्मर्दयेत् पारदं वासराणां त्रयम् ॥५६॥

द्वितीयः स्वेदनप्रकारः—त्र्यूषणं त्रिकटु, आसुरी राजिका, पटु सैन्धवम्, वह्निश्चित्रकः ॥४९॥

अथ तृतीयः—शृङ्गवेर आर्द्रकम्, पुनरप्यार्द्रकपाठस्तस्य द्वैगुण्यार्थः। मेघनादः तण्डुलीयकम्, महाबला सहदेवी, चुल्लिकालवणं नवसादरः, गवेधुकः अरण्यगोधूमः, वरा त्रिफला। भूर्जपत्रमध्ये पारदनिक्षेपः पारदरक्षार्थः ॥५०-५३॥

अथ क्रमप्राप्तं मर्दनस्वरूपमाह बहिर्मलनिवृत्तय इति-बहिर्मलाः कञ्चुकाः आवरकत्वात्, तन्निवृत्तिरस्य फलम्। "उदितैरौषधैः सार्धं सर्वाम्लैः काञ्जिकैरपि। पेषणं मर्दनाख्यं स्याद् बहिर्मलविनाशनम्।" इत्याहुः प्राञ्चः ॥५४॥

मर्दनस्य प्रथमः प्रकारः—सदनधूमो गृहधूमः, यामिनी हरिद्रा, वरा त्रिफला। प्रतिद्रव्यं षोडशांशं निक्षिप्य मर्दनम् ॥५५॥

इष्टिकाचूर्णेत्यादिनापरो मर्दनप्रकारो व्याख्यासमः। केचिदत्र हरिद्रानागरस्थाने दधि प्रक्षिपन्ति, अपरे सप्तदिनान्यपि मर्दनमाहुः ॥५६॥

मूर्च्छनस्वरूपम्।

गृहकन्यादिभिर्द्रव्यैर्नष्टपिष्टत्वसाधनम्।
दोषत्रयनिवृत्त्यर्थं तन्मूर्च्छनमिहोच्यते ॥५७॥
स्वरूपत्यागसहितं पिष्टित्वकरणं हि यत्।
रसज्ञैर्जितसूतोऽसौ नष्टपिष्ट उदाहृतः ॥५८॥

मूर्च्छनस्य प्रथमः प्रकारः।

कुमारिका मलं हन्ति वरा दहननाशिनी।
चित्रमूलं विषं हन्ति तस्मादेभिः प्रयत्नतः ॥५९॥
मर्दितं सूतकं द्रव्यैः सप्तवाराणि मूर्च्छयेत्।
एवं सम्मूर्च्छितः सूतो दोषैः सर्वैः प्रमुच्यते ॥६०॥

मूर्च्छनस्य द्वितीयः प्रकारः।

यवाग्रजः स्वर्जिका च तथा लवणपञ्चकम्।
अम्लौषधानि विबुधः प्रक्षिप्य सूतके दृढम् ॥६१॥
तावत्सुपेषयेद्यावन्नष्टपिष्टत्वमाप्नुयात्।
इत्थं सम्मूर्च्छितः सूतो विमुञ्चति मलत्रयम् ॥६२॥

उत्थापनस्वरूपम्।

स्वेदाद्यैर्यद्रसेन्द्रस्य मूर्च्छाव्यापत्तिनाशनम्।
पुनः स्वरूपकरणं तदुत्थापनमीरितम् ॥६३॥

उत्थापनस्य प्रथमः प्रकारः।

सौभाग्यलवणक्षौद्रैः पारदं पेषयेद् भृशम्।

मूर्च्छनस्वरूपम्—दोषत्रयाणां मलवह्निविषाणाम्, यदुक्तम्—"मर्दनोद्दिष्टभैषज्यैर्नष्टपिष्टत्वकारकम्। तन्मूर्च्छनं हि वार्यद्रिभूजकञ्चुकनाशनम्" इति ॥५७॥

अथ नष्टपिष्टस्य लक्षणमाह—यत् स्वरूपस्य चाञ्चल्यादेः त्यागसहित रसस्य पिष्टित्वकरणं असौ रसज्ञैर्नष्टपिष्ट उक्तः, स च फलतः जितसूतः चाञ्चल्यादि विनिवारणादिति भावः ॥५७-५८॥

मूर्च्छनस्य प्रथमः प्रकारः—व्याख्यासमः। अत्र केचित्—"आरग्वधो हन्ति मलं प्रयत्नात् कुमारिका सप्त हि कञ्चुकांश्च। अंकोलमूलं हि विषं निहन्याद्रसस्य वह्निः किल पावकञ्च" इत्याहुः। अपरे तु राजवृक्षस्य मूलोत्थचूर्णेन सह कन्यका मलदोषापनुत्त्यर्थम्, चित्रको वह्निदोषापनुत्त्यं, त्रिफला विषनाशाय इत्याहुः। प्रक्षेप्यद्रव्यमानञ्च—"षोडशांशं प्रतिद्रव्यं सूतमानान्नियोजयेत्" इति रसरत्नसमुच्चये। सप्तवाराणि इति प्रतिमूर्च्छनोत्तरं काञ्जिकेन प्रक्षाल्य पुनर्मर्दनं पुनः प्रक्षालनमित्येवं सप्तधा मूर्च्छनं कुर्यात् ॥५९-६२॥

उत्थापनलक्षणम्–उत्थापनं मूर्च्छाव्यापद्विनाशाय। यदुक्तम्–"स्वेदातपादियोगेन स्वरूपापादनं हि यत्। तदुत्थापनमित्युक्तं मूर्च्छाव्यापत्तिनाशनम्॥" इति ॥६३॥

तद्गोलकं विधायाथ पोट्टल्यान्तु विनिक्षिपेत् ॥६४॥
क्षाराद्यैः स्वेदयेत्सम्यक् दोलायन्त्रे भिषग्वरः ।
एवं वारत्रयं कुर्यादुत्थितो जायते रसः ॥६५॥

द्वितीयः प्रकारः ।

अथवा काञ्जिकेनैव रसेन्द्रं स्वेदयेद् बुधः ।
अम्लैः प्रक्षालयेत्सम्यगुत्थितो रसराड् भवेत् ॥६६॥

तृतीयः प्रकारः ।

रसेन्द्रं काञ्जिकेनेह याममात्रं विमर्दयेत् ।
सलिलैः क्षालयेत्सम्यगुत्थितो जायते रसः ॥६७॥

चतुर्थः प्रकारः ।

जम्बीरमातुलुङ्गाद्यैः पेषयेदातपे रसम् ।
वसनात्स्रावयेत्सम्यगुत्थितो जायते रसः ॥६८॥

पातनात्रितयस्वरूपम् ।

उक्तौषधै रसवरस्य विमर्दितस्य
यन्त्राहितस्य यदिहोर्ध्वमधश्च तिर्यक् ।
निष्कासनं तदिह पातनसंज्ञमुक्तं
वङ्गाहिदोषयुगलं शमयत्यनलश्रम् ॥६९॥

तत्र ऊर्ध्वपातनस्य प्रथमः प्रकारः ।

स्वर्जिका खलु यवाग्रजं तथा रामठं लवणपञ्चकान्वितम् ।
अम्लवर्गगदितैस्तु भेषजैः संयुतं रसवरं विमर्दयेत् ॥७०॥
स्थापयेदिह सुयुक्तितो भिषक् पारदं विहितकल्कसंयुतम् ।
ऊर्ध्वपातनकयन्त्रमार्गतः पातयेदिह रसेश्वरं भिषक् ॥७१॥

द्वितीयः प्रकारः ।

तुत्थके विमलहेममाक्षिके निक्षिपेत्खलु रसेन्द्रमुज्ज्वलम् ।
मर्दयेद् गृहकुमारिकारसैर्यावदेति खलु नष्टपिष्टताम् ॥७२॥

तत्प्रथमः प्रकारः—सौभाग्यलवणसर्षपैः पारदं पेषयित्वा गोलकं विधाय चतुर्गुणवस्त्रपोट्टल्यां निधाय क्षाराद्यैः सम्यक् त्रिवारं स्वेदयेत्, तथात्र स्वरूपापत्तिर्भवति रसस्य ॥६४-६८॥

अथ पातनात्रयस्वरूपम्—अनल्पं स्पष्टम् ॥६९॥

ऊर्ध्वपातनस्य प्रथमः प्रकारः—रामठं हिङ्गु । सुयुक्तित इत्यधःपात्रे मर्दितः सकल्कः पारदः स्थाप्यः । शिष्टं सुगमम् ॥७०-७१॥

द्वितीयः प्रकारः—तुत्थकेन सह रसेन्द्रं मर्दयित्वाग्निर्बहुशः क्षालयेत् । क्षालनानन्तरं कन्यारसेन मर्दनं कार्यम् । अथवा उपधात्वादिविज्ञानीयोक्तेन

कारयेच्च तदनन्तरं भिषक् स्थालिकातलगतं रसेश्वरम् ।
ऊर्ध्वपातनकयन्त्रपातितमाददीत विमलं रसेश्वरम् ॥७३॥

तृतीयः प्रकारः ।

त्रयो भागा ग्राह्याः खलु रसवरस्येह विबुधैः
रवेश्चैको भागो विधिविहितशुद्धिः कृतदलः ।
समं सर्वं मर्द्यं भृशमिह हि जम्बीरजरसैः
रसः पात्यो युक्त्या खलु डमरुयन्त्रे बुधवरैः ॥७४॥

अधःपातनस्य प्रथमः प्रकारः ।

बलिसम्वलितं रसेश्वरं सुचिरं वैद्यवरः सुपेषयेत् ।
विधिना च विधाय कज्जलीमथ जम्बीररसैः सुमर्दयेत् ॥७५॥
शिखी च शिग्रुबीजकं तथासुरी च सैन्धवम् ।
तथा च मर्कटी बुधः समं समं विनिक्षिपेत् ॥७६॥
पिष्टेनानेन तु प्राज्ञो लेपयेदूर्ध्वभाजनम् ।
अधःपातनयन्त्रे च गृह्णीयान्निर्मलं रसम् ॥७७॥

द्वितीयः प्रकारः ।

हरीतकी विभीतकस्तथासुरी च सैन्धवम् ।
शिखी च शिग्रुजः समैः समैः सुपेषयेद्रसम् ॥७८॥
यदा स नष्टपिष्टतामियात्तदा भिषग्वरः ।
निरुक्तयन्त्रवर्त्मना रसं निपातयेदधः ॥७९॥

तिर्यक्पातनम् ।

उद्दिष्टैरौषधैः साकं रसराजं सुपेषयेत् ।
तिर्यक्पातनयन्त्रे च गृह्णीयान्निर्मलं रसम् ॥८०॥

प्रथमशोधनप्रकारसमुदितविधिना शोधितेन स्वर्णमाक्षिकेण सह पारदस्य नष्टपिष्टत्वमापाद्य कन्यारसेन मर्दनं कार्यम् ॥७२-७३॥

तृतीयः प्रकारः—पत्राकारस्य चूर्णीकृतस्य वा शुद्धस्य ताम्रस्यैको भागो रसभागत्रयं जम्बीररसैस्त्रिदिनं मर्दनं विधाय पातनं कार्यम् ॥७४॥

अधःपातनप्रकारः प्रथमः—बलिसम्वलितं गन्धकयुतम्, शिखी चित्रकः, मर्कटी आत्मगुप्ता । ऊर्ध्वभाजनं लेपयेत्, ततोऽधः पातयेत् ॥७५-७९॥

तिर्य्यक्पातने केचिदाहुः—"श्लक्ष्णीकृतमभ्रदल रसाद्द्विगुणञ्च तथारनालेन । खल्वे त्रिदिनं मृदितं यावत् तन्नष्टपिष्टतामेति ॥ कुर्य्यात्तिर्य्यक्पातनपातितसूतं क्रमेण दृढवह्निम्" इति ॥८०॥

बोधनलक्षणम्।

मर्दनादिकयोगेन जातक्लैब्यस्य शूलिनः।
क्लैब्यापहं तु यत्कर्म बोधनं कथ्यते बुधैः ॥८१॥

बोधनस्य प्रथमः प्रकारः।

भूर्जपत्रे निधायाथ रसराजं निरोधयेत्।
प्रक्षिप्य सैन्धवं तोये दोलायन्त्रे पचेद् बुधः ॥८२॥
एवं संस्वेदितः सूतः भृशमाप्यायितो भवेत्।
जातवीर्यप्रकर्षो हि षण्ढतामिह मुञ्चति ॥८३॥

द्वितीयः प्रकारः।

जलसैन्धवसूतपूरितां क्षितिगर्ते खलु काचकूपिकाम्।
विनिधाय दिनत्रयं ततो गतषाण्ढ्यः सबलो रसो भवेत् ॥८४॥

तृतीयः प्रकारः।

सैन्धवेनाम्लपिष्टेन रसेन्द्रं कूपिकागतम्।
गर्ते निधाय चोर्ध्वन्तु देयो लघुपुटो बुधैः ॥८५॥
एवं सम्पुटितः शीघ्रं भृशमाप्यायते रसः।
जातवीर्यप्रकर्षश्च षण्ढभावं विमुञ्चति ॥८६॥

नियामनस्य स्वरूपम्।

बोधनाल्लब्धवीर्यस्य रसस्य स्वेदनं हि यत्।
चापल्यविनिवृत्त्यर्थं तन्नियामनमीरितम् ॥८७॥

नियामनस्य प्रथमः प्रकारः।

अम्लिकानागिनीभृङ्गवन्ध्याब्दकितवोद्भवैः।
रसैः संस्वेदितः सूतो नियतं नियतो भवेत् ॥८८॥

द्वितीयः प्रकारः।

रसोनभृङ्गराजाब्दचिञ्चिकानवसागरैः।
भृशं संस्वेदितः सूतो नियतं नियतो भवेत् ॥८९॥

अथ बोधनस्वरूपम्—जातक्लैब्यस्य निर्बलस्य, शूलिनः पारदस्य। अत्र—"जलसैन्धवयुक्तस्य रसस्य दिवसत्रयम्। स्थितिराप्यायनी कुम्भे याऽसौ रोधनमुच्यते" इत्यादिनास्य रोधनमपि नामान्तरमनुसन्धेयम् ॥८१॥

अस्याद्यः प्रकारः—भूर्जपत्रे निधाय पारदं पोट्टलीकृत्य ससैन्धवे जले दोलया सप्तदिनं स्वेदयेत् इति ॥८२-८४॥

तृतीयः शीघ्रसंभवी प्रकारः—अम्लपिष्टेन सैन्धवेन सह पारदं काचकुप्यां निधायोपरि लावकाख्यपुटदानम्, फलञ्च पूर्ववत्, शीघ्रतायां विशेषः ॥८५-८६॥

नियामनलक्षणं सफलमाह—बोधनादिति ॥८७॥

अस्याद्यः प्रकारः—अम्लिका चिञ्चा, नागिनी सर्पाक्षी, अब्दं मुस्तकम्, कितवः धत्तूरः। नियतः निरस्तचाञ्चल्यः ॥८८-८९॥

तृतीयः प्रकारः ।

नियामकगणोद्दिष्टैः समस्तव्यस्तभेषजैः ।
पूर्वदर्शितमार्गेण भिषक् कुर्यान्नियामनम् ॥६०॥

रसस्य नियामको गणः ।

महाबला नागबला यमचिञ्चा पुनर्नवा ।
आखुपर्णी सहचरा वासिका काकमाचिका ॥९१॥
गोक्षुरः शरपुङ्खा च विष्णुक्रान्ता घनध्वनिः ।
मण्डूकपर्णी तुलसी बला च गिरिकर्णिका ॥६२॥
शतावरी शङ्खपुष्पी श्वेतार्कः कनकाह्वयः ।
चक्रमर्दः करञ्जश्च ब्रह्मदण्डी शिखण्डिनी ॥६३॥
गुडूची सैन्धवं पाठा मृगाक्षी सोमवल्लिका ।
नियामकगणो ह्येष प्रोक्तो रसविशारदैः ॥६४॥

अथ दीपनस्वरूपम् ।

दोलायन्त्रे स्थापयित्वा रसेन्द्रं क्षाराद्यैर्यत्पाचनं स्याद्यथायम् ।
ग्रासार्थी वा जारणे च प्रगल्भः शास्त्रज्ञैस्तद्दीपनं सम्प्रदिष्टम् ॥६५॥

अथ दीपनस्य प्रथमः प्रकारः ।

काशीशं मरिचं तथैव तुवरी शोभाञ्जनं काञ्जिकं
सौभाग्यं पटुपञ्चकञ्च दहनो राजी समं मेलयेत् ।
निक्षिप्याथ दिनद्वयं बुधवरो दोलाख्ययन्त्रे पचेत्
ग्रासार्थी खलु जारणे च चतुरः संजायते पारदः ॥६६॥

अथ द्वितीयः प्रकारः ।

सौभाग्यं पटुपञ्चकञ्च मरिचं शोभाञ्जनं चासुरी
काशीशं यवजोऽनलश्च तुवरी शेफालिका सर्जिका ।

तृतीयः प्रकारः—कल्कैः क्वाथैर्वा इति कल्कपक्षे काञ्जिकैः स्वेदनम् ॥६०॥

नियामकगणः—महाबला सहदेवी, नागबला गाङ्गेरुकी, यमचिञ्चा अपक्वा अम्लिका, सहचरा पीतझिण्टी, विष्णुक्रान्ता श्वेतापराजिता, घनध्वनिः तण्डुलीयकः, तुलसी कृष्णा ज्ञेया, गिरिकर्णिका कृष्णापराजिता, कनकाह्वयः धत्तूरः, मृगाक्षी इन्द्रवारुणी, सोमवल्लिका मत्स्याक्षी । स्पष्टमन्यत् ॥६१-६४॥

अथ दीपनस्वरूपम्—दीपनं नाम ग्रासार्थिताजारणपटुतासम्पादकं दोलया क्षाराद्यैः पारदपाचनम् । "धातुपाषाणमूलाद्यैः संयुक्तो घटमध्यगः । ग्रासार्थं त्रिदिनं स्वेदो दीपनं तन्मतं बुधैः" इति प्राचीनोक्तिरत्रानुसन्धेया ॥६५॥

तत्प्रथमः प्रकारः—तुवरी स्फटिका, पटुपञ्चकं लवणपञ्चकम्, दहनश्चित्रकः । स्पष्टमन्यत् ॥६६॥

तुल्यांशैः सुविचूर्णितैर्गृहजले यन्त्रे तु दोलाह्वये
स्विन्नो यामयुगं ततो रसवरो ग्रासाभिलाषी भवेत् ॥९७॥

तृतीयः प्रकारः ।

स्वेदयेदासवाम्लेन सहितं याममात्रकम् ।
भिषग्वरः सूतराजं शीघ्रं वीर्यविवृद्धये ॥९८॥

चतुर्थः प्रकारः ।

अथवा दहनक्वाथैस्त्रिदिनं काञ्जिके पचेत् ।
एवं संस्वेदितः सूतो ग्रासार्थी जायते परम् ॥९९॥

जारणास्वरूपम् ।

सूते गन्धादिनिक्षेपात्तत्तद्विधिविशेषतः ।
गन्धाद्यं जार्यते यत्तु जारणं तदिहोच्यते ॥१००॥

। षड्गुणगन्धकजारणस्य प्रयोजनम् ।

वसुविधविधिसंस्कृतोऽपि सूतो रसविबुधैरिह हिङ्गुलोत्थितो वा ।
रसगुणबलिजारणाविहीनो गदगणवारणतां तु नैति नूनम् ॥१०१॥

षड्गुणबलिजारणस्य प्रथमः प्रकारः ।

निधाय वालुकायन्त्रे चषकं सुदृढं भिषक् ।
रसतुल्यं बलिं तस्मिन्निक्षिपेत् खलु शोधितम् ॥१०२॥
बलिं तु विद्रुतं दृष्ट्वा रसेशं तत्र दापयेत् ।
अर्द्धजीर्णं बलिं ज्ञात्वा पुनर्गन्धं प्रदापयेत् ॥१०३॥
आषड्गुणं क्षिपेदेवमल्पमल्पं समाहितः ।
स्वतःशीतं ततो ज्ञात्वा रसेशं तु समाहरेत् ॥१०४॥

द्वितीयः प्रकारः—यवजो यवक्षारः, अनलश्चित्रकः, शेफालिका "हारसिंगार" इति भाषायाम् ॥९७॥

आसवाम्लेन काञ्जिकेन ॥९८-९९॥

अथ जारणालक्षणम्—तत्तद्विधिविशेषतः वालुकायन्त्रकच्छपयन्त्रादिप्रकारेण । जार्यते वह्न्यादियोगात् क्षीणं क्रियते । "द्रुतग्रासपरीणामो विडयन्त्रादियोगतः । जारणा" इति-रसेन्द्रचूडामणौ । "जारणा नाम गालनपातनव्यतिरेकेण ग्रस्तघनहेमादिरसस्य पूर्वावस्थाप्रतिपन्नत्वम्" इति च—आयुर्वेदप्रकाशकारः ॥

जारणाफलम्—वसुविधविधिसंस्कृतः अष्टविधसंस्कारयुक्तः रसविबुधैरिति रसशास्त्राभिज्ञैः, रसगुणबलिजारणाविहीनः षड्गुणगन्धकजारणाविरहितः, अत्र "रसगुणबलिजारणं विनाऽयं न खलु रुजाहरणक्षमो रसेन्द्रः । न जलदकलधौतपाकहीनः स्पृशति रसायनतामिति प्रतिज्ञा ।" इति प्राचीनोक्तिरप्यनुसन्धेया ॥

षड्गुणबलिजारणस्य द्वितीयः प्रकारः ।

**कच्छपाख्येन यन्त्रेण रसतन्त्ररहस्यवित् ।**
**उक्तमार्गमनुसृत्य जारयेत् षड्गुणं बलिम् ॥१०५॥**

अथ षड्गुणगन्धकजारणस्याद्यः प्रकारः—अर्द्धगन्धके जीर्णे पुनर्गन्धकं प्रदापयेत्, सर्वगन्धकक्षये पारदस्योड्डयनभयात् । अतएव च किञ्चित् गन्धकशेष एवोत्तारणमस्य विधेयम् ॥ एवं षड्गुणगन्धकक्षयपर्य्यन्तमल्पमल्पं पुनः पुनर्दद्यादिति प्रथमः कल्पः ॥१०२-१०४॥

अथ गन्धकजारणगुणाः—महारोगविधूननः महारोगविनाशनः, विविधाद्भुतकार्य्यकृत् 'भवतीति' शेषः । तथोक्तं शिवागमेऽपि—"तुल्ये तु गन्धके जीर्णे शुद्धाच्छतगुणो रसः । द्विगुणे गन्धके जीर्णे सर्वथा सर्वकुष्ठहा ॥ त्रिगुणे गन्धके जीर्णे सर्वजाड्यविनाशनः । चतुर्गुणे तथा जीर्णे वलीपलितनाशनः ॥ गन्धे पञ्चगुणे जीर्णे क्षयक्षयकरो रसः । षड्गुणे गन्धके जीर्णे सर्वरोगहरो रसः ॥ अवश्यमित्युवाचेदं श्रीदेवीं भैरवः स्वयम् ॥" इति । अथ व्याधिघातकत्वेन परमावश्यका अष्टौ संस्काराः ग्रन्थकृता केवलमुक्ताः, रसतन्त्रप्रसिद्धा अवशिष्टाश्च दश नोक्ताः इति । वयन्तु जिज्ञासूनां मनोविनोदाय परिभाषावोधाय च लक्षणतः फलतश्चावशिष्टानुदाहरामो मा भूच्छिष्टसम्प्रदायहानिरिति ॥

तत्र अनुवासन-गगनादिग्रासप्रमाण-चारण-गर्भद्रुति-बाह्यद्रुति-जारण-रञ्जन-सारण-क्रामण-वेधनाख्या दशावशिष्टाः । केचित् शरीरयोगनामकमपरं संस्कारमिच्छन्ति तन्मतेऽनुवासनं दीपनान्न पृथक् । तत्रादावनुवासनक्रमः—"दीपितं रसराजन्तु जम्वीररससंयुतम् । दिनैकं धारयेद् घर्मे मृत्पात्रे वा शिलोद्भवे ॥" इति प्रथमः । तथा—"सहस्रनिम्बूफलतोयघृष्टो रसो भवेद् वह्निसमप्रभावः । सव्योपराजीलवणः सचित्रः सरामठो विंशतिवासराणि ।" इति रसचिन्तामणिप्रोक्तो द्वितीयः । अत्रेदमवधेयम्—"स्वेदनादिनवकर्मसंस्कृतः सप्तकञ्चुकविवर्जितो भवेत् । अष्टमांश इह शिष्यते यदा शुद्धसूत इति कथ्यते तदा ।" इति रसरत्नाकरकारस्य नित्यनाथस्य वचनम् । अयमाशयः—सप्तभागाः सप्तकञ्चुकसम्बन्धिनोऽपयान्ति पारदस्याष्टमो भागोऽवशिष्यते ॥ अथ ग्रासचारणप्रमाणम्—"इयन्मानस्य सूतस्य भोज्यद्रव्यात्मिका मितिः । इयतीत्युच्यते याऽसौ ग्रासमानं समीरितम् ॥ चतुःषष्ट्यंशकः पूर्वो द्वात्रिंशांशो द्वितीयकः । तृतीयः षोडशांशस्तु चतुर्थोऽष्टांश एव च ॥" एतद्विस्तरो रसार्णवादावनुसन्धेयः । एतस्योपयोगो गर्भद्रुतिसंस्कारे वक्ष्यमाणे । चारणा यथा—"रसस्य जठरे ग्रासक्षेपणं चारणा मता ॥" तत्प्रकारो रसपद्धत्याः—"तप्ते तीक्ष्णसमुद्भवे सुविमले खल्वेऽथ सूतं क्षिपेत् । पादांशं कनकं विमर्द्य शनकैर्दत्वाऽम्लजम्बीरकम् । पात्रे जम्भलवारिणा सुविपुले काचोद्भवे पूरिते । स्थाप्यं सूर्यखरातपे पटुतरं घस्त्रं ततो मर्दितम् । तस्मिन्नेव पुनर्ददीत विमलं सञ्चारणात् सात्म्यता ॥" इति । अथ गर्भद्रुतिः—"ग्रस्तस्य द्रावणं गर्भे गर्भद्रुतिरुदाहृता ।" इति लक्षिता । "व्योमसत्त्वं

षड्गुणबलिजीर्णस्य रसराजस्य गुणाः ।

समे तु गन्धके जीर्णे सामान्यगदनाशनः ।
द्विगुणे तु विशेषेण महारोगविधूननः ॥१०६॥

समांशेन ताप्यसत्वेन संयुतम् । साकल्येन चरदेवि गर्भद्रावी भवेद्रसः ॥" गर्भद्रुति-मन्तरेण च व्योमसत्वादिजारणाऽभावात् आवश्यकतैतस्याः । तथाच—"वह्नि-व्यतिरेकेणापि रसग्रासीकृतानां लोहादीनां द्रवत्वं गर्भद्रुतिरिति" रसमाधवो व्याजहार । "शिलया निहतं नागं ताप्यम्वा सिन्धुना हतम् । ताभ्यान्तु मारितं वीजं सूतके द्रवति क्षणात् ।" इति च । "बीजानां संस्कारः कर्तव्यः कोऽपि तादृशः प्रथमम् । येन द्रवन्ति गर्भे रसराजस्याम्लयोगेन ।" इति च श्रीगोविन्दभगवत्पादाचार्य्याः । अयञ्च गर्भद्रावको योगोऽनुसन्धेयः—सैन्धवेन समं ताप्यं घर्मे मर्द्यं पुटे पचेत् । पुनर्मर्द्यं पुनः पाच्यं यावद्द्वादशवारकम् ॥ अस्य तुल्यं सूतं नागं सर्वमम्लेन पेषयेत् । अनेन वर्णपत्राणि लिप्तानि प्रधमेद् दृढम् ॥ द्रुतञ्च वापितं तत्तु सप्तवारं पुनः पुनः । एतद्बीजं रसेन्द्रस्य गर्भे द्रवति मर्दनात् ॥" तथा—"शिला सौवर्चलं ताप्यं गन्धकासीसटङ्कणम् । मर्दयेच्चणकाम्लेन सर्वमेतद्दिनावधि ॥ रसस्यैतत् षोडशांशं दत्वा वीजञ्च दापयेत् । दीयते यत्र यत्रैवं तत्र द्रवति मर्दनात् ॥" इति । अथ बाह्यद्रुतिः—'वहिरेव द्रुतं कुर्य्यादभ्रसत्वादिकं खलु । जारणाय रसेन्द्रस्य सा बाह्या द्रुतिरुच्यते ।" इत्युक्तरूपा, तद्दिङ्मात्रं यथा—"कपितिन्दुबालफलैः समं धान्याभ्रकं दृढम् । मर्दयेद्दिनमेकन्तु काचकुप्यां निवेशयेत् ॥ नरकेशैर्मुखं रुद्ध्वा कूपिकां लेपयेन्मृदा । पुटेत् पातालयन्त्रेण दिनान्ते द्रुतिमाप्नुयात् ॥" इति । तथा "कुसुम्भतैलमध्ये तु संस्थाप्या द्रुतयः पृथक् । तिष्ठन्ति चिरकालन्तु प्राप्ते काले नियोजयेत्" इति । एतत्फलन्तु—"बाह्यद्रुतिस्तु केवलं शुद्धमेव रसं मिलिता बध्नाति । फलमस्या दीर्घायुष्ट्वम् । पूर्वोक्तग्रासक्रमजारणेन पूर्वोक्तफलप्रदत्वम्वा ।" इत्यादिनोक्तं रसमाधवेन । केचित्तु लुप्तसम्प्रदायत्वात्—"द्रुतयोऽपि न दृष्टास्ते शास्त्रे दृष्टा अपि ध्रुवम् । विना शम्भोः प्रसादेन न सिद्ध्यन्ति कदाचन ।" इत्याहुः । अत्र विशेषश्चिन्तनीय एवेति । जारणलक्षणमुक्तम्प्राक् । तत्प्रकारस्त्वेवंविधः स्मृत आचार्यैः रसरत्नाकरे—"स्वर्णं नागं समावर्त्य माषमात्रन्तु घर्षयेत् । तप्तखल्वे ततस्तस्मिन् पलमेकं रसं क्षिपेत् ॥ सिद्धमूलीद्रवं दत्वा मर्दयेत् काञ्जिकैर्दिनम् । घर्मे वा तप्तखल्वे वा ततो ग्रासन्तु दापयेत् ॥ चतुःषष्ट्यंशकं पूर्वं द्वन्द्वसत्वं सुभावितम् । दत्वा घर्मे दिनैकञ्च चारणायन्त्रके क्षिपेत् ॥ सजम्बीरे दिनं घर्मे धारितश्चरति ध्रुवम् । त्रिक्षारं पञ्चलवणमम्लवर्गः स्नुहीपयः ॥ गोमूत्रैर्गालयेत्सर्वं तेन वस्त्रं घनं दिहेत् । तन्मध्ये धारितं सूतं बद्ध्वा भूर्जेन वेष्टयेत् ॥ सिद्धमूलयम्लसंयुक्ते दोलायन्त्रे त्र्यहं पचेत् । उद्धृत्योष्णारनालेन क्षालयेल्लोहपात्रके ॥ वस्त्रपूतं ततः कृत्वा सोष्णे

त्रिगुणे तु विशेषेणाद्व्यपुंस्त्वप्रकाशनः ।
चतुर्गुणे महोत्साहमेधास्मृतिविवर्धनः ॥१०७॥

पात्रे विमर्दयेत् । हस्तेनैव भवेच्छुष्कं यावत्तं पारदं पुनः ॥ चतुर्गुणेन वस्त्रेन गालये- न्निर्मलो भवेत् । अजीर्णश्चेत्पुनर्मर्धमम्लं दत्त्वा दिनावधि ॥ दोलायां स्वेदयेत्तावद्भ वेज्जीर्णन्न संशयः ॥" इति । अत्र च चरति ध्रुवमित्यन्तं चारणाप्रकारः, त्रिक्षारं पञ्चलवणमित्यारभ्य च जारणाप्रकारोऽनुसन्धेयः । अयञ्च बीजजारणप्रकारो मूलेऽनुक्तः कथितः। गन्धकजारणप्रकारस्तु मूल एवोक्त इति नेहोक्तो माभूत्कालस्य व्यत्यय इति। इयञ्च समुखा जारणा, बीजावापयोगात्। निर्मुखा जारणा तु दिव्यौष धिसमायोगात्प्राचीनपरम्पराप्रसिद्धा इदानीं लुप्तप्राया चेति । अथ रञ्जनम्— "सुसिद्धबीजधात्वादिजारणेन रसस्य हि। पीतादिरागजननं रञ्जनं परिकीर्तितम्॥" "केवलं निर्मलं ताम्रं वापितं दरदेन तु । कुरुते त्रिगुणं जीर्णं लाक्षारसनिभं रसम् ।" इत्यादिनाऽनुसन्धेयम् । विस्तरस्तु—"खर्परस्थे द्रुते नागे ब्रह्मबीजद लानि तु । क्षिप्त्वाग्नि ज्वालयेच्चण्डं ब्रह्मदण्डेन चालयेत्॥ चतुर्यामात्तु तद्भस्म जातं पात्रात्समुद्धरेत्। तद्भस्म गन्धकं तुल्यं याममम्लेन मर्दयेत्॥ रुद्ध्वा गजपुटे पश्चात् पादांशं गन्धकं पुनः। दत्वाम्लैर्मर्दितं पश्चादेवं वारांश्चतुर्दश ॥ रक्तवर्णं भवेद्भस्म तद्भागं खर्परं क्षिपेत् । भागत्रयं शिलाचूर्णं पृथक्पात्रे विनिक्षिपेत्॥ पञ्चाङ्गवासकाच्चूर्णं त्वक्चूर्णञ्चार्जुनस्य च। शाककिंशुककोरण्टशिग्रू णां पुष्पमाहरेत् ॥ नागिनी नागकन्या च कुमारी चाहिमारकः। सर्वेषां प्रतिभागैकं शिलामध्ये विनिक्षिपेत्॥ तेभ्यश्चतुर्गुणैर्मूत्रैश्छागजैः क्वाथमाहरेत्। पूर्वोक्तं भस्म नागस्य खर्परस्य च संक्षिपेत् ॥ चालयन् पाचयेच्चुल्ल्यां यावत्सप्तदिनावधि। अनेन मृतनागेन वापो देयो द्रुतस्य च ॥ पक्वबीजस्य भागांस्त्रीन् रञ्जित जायते शुभम् ॥ इत्यादिना रसरत्नाकरादौ कणेहत्यावलोकनीयः । सारणा—"सूते सतैल- यन्त्रस्थे स्वर्णादिक्षेपणञ्च यत्। वेधाधिक्यकरं लोहे सारणा सा प्रकीर्तिता॥" तत्प्रकारश्च—"छिद्रान्वितान्धमूषा गम्भीरा स्यात् सारणोचिता। तस्यां सारणतैल निधाय तप्तं सबीजसूतञ्च तत्तैलाक्तपटेनाच्छाद्य मुखं सारणं कुर्यात् ॥ इत्यादिना- ऽऽकरेभ्योऽनुसन्धेया, विस्तरस्तु सारणतैलनिर्माणादे रसरत्नाकरादिभ्योऽव- सेयः। अपि च नैकधा सारणजारणपरम्परया वेधसम्भव इत्यपि प्राचां मतम्। "सारितो जारितश्चैव क्रमात् सारितजारितः। सप्तशृङ्खलिकावेधात् कोटिवेधी भवेद्रसः॥" इति प्राचीनसंवादात्। अतोऽनन्तरं केचिन्मुखबन्धनामानं संस्का- रान्तरमप्यातन्वते, तत्प्रकारो रसपद्धतेरवलोकनीयो नेह प्रतन्यते माभूद् ग्रन्थ- विस्तर इति । अथ क्रामणम्—"स्वर्णतारादिधर्मान् यत् क्रामयेदन्यधातुषु। सारणोत्थेन सूतेन क्रामणन्तदुदाहृतम्॥" तच्च—"शिलया निहतो नागो वङ्गं वा तालकेन शुद्धेन। क्रमशः पीते शुक्ले क्रामणमेतत् समुद्दिष्टम्॥" श्रीगोविन्द- भगवत्पादास्तु—"क्रामति तीक्ष्णेन रस" इत्याहुः। केचित्तु—"सौराष्ट्रीं भावये- द्घर्मे गवां पित्तैस्त्रिधा पुनः । तत्सत्त्व व्योमवद् ग्राह्य क्रामकं योजयेद्रसे ।"

तथा पञ्चगुणेऽशेषगदसन्तापनाशनः ।
रसेश्वरः षड्गुणे तु विविधाद्भुतकार्यकृत् ॥१०८॥

इति पारदस्याष्टसंस्कारविज्ञानीयो नाम पञ्चमस्तरङ्गः ।

---

## अथ मूर्च्छनाविज्ञानीयः षष्ठस्तरङ्गः ।

### अथ मूर्च्छनायाः स्वरूपम् ।

तत्तद्विधिप्रभेदेन रसस्याव्यभिचारतः ।

इत्याहुः। अथ वेधः-"व्यवायिभेषजोपेतो द्रव्ये क्षिप्तो रसः खलु । वेध इत्युच्यते ॥" स चानेकविधः—"लेपः क्षेपश्च कुन्तश्च धूमाख्यः शब्दसंज्ञकः ॥" तेषां लक्षणान्याकरेभ्योऽनुसन्धेयानि। विस्तरभयादुपरम्यते। भक्षणसंस्कारस्तु क्षेत्रीकरणादौ वक्ष्यते। पञ्चविंशतिप्रकारान् रसबन्धांस्तु मूर्च्छनाप्रकरणे वक्ष्यामः। इति प्राचीनरसतन्त्रप्रसिद्धाः अवशिष्टाः सूतसंस्काराः साकल्येन भवन्त्युक्ताः ॥१०८॥

आदौ मूर्च्छनास्वरूपं प्रयोजनसहितम्—तत्तद्विधयो वक्ष्यमाणाः सगन्धनिर्गन्धादयः, तद्भेदेन या रसस्य अव्यभिचारतः अनैकान्तिकत्वं विना व्याधिघातकता रोगापनयनसामर्थ्यं सा मूर्च्छना। यदाह रसमाधवः—"अव्यभिचरितव्याधिघातकत्वम्मूर्च्छना" इति। एतावता च मूर्च्छनसंस्कारादस्याः भेदो बोधितः मूर्च्छनसंस्कारस्य तथानुपयुक्तत्वात्, इत्यवधेयम्। यदुक्तम्—"मूर्च्छित्वा हरति रुजम् ।" इति भगवद्गोविन्दपादैः। वस्तुतस्तु करणे नामकरणः, तावता च तथाविधरोगावश्यंघातकशक्तिसाधकतमः क्रम एक एव, स तादृशो मूर्च्छनाशब्दवाच्यः, अत एव मूर्च्छनाभेदाः सङ्गच्छन्ते। यत्तु "मूर्च्छना जारणा चेत्यनर्थान्तरं प्रायः" इति रसमाधवो व्याजहार तत्र समीक्षामहे—"अत्र च सगन्धमूर्च्छनायाः कज्जलीरूपाया निर्गन्धमूर्च्छनायाश्च मुग्धत्वादेः जारणारूपाभावात् "प्रायः" शब्दसङ्गतिः। बन्धनस्यैवावस्थाविशेषो मूर्च्छनेति चेन्मैवं मंस्थाः, तथाऽभावात्—"बन्धनन्तु स्वाभाविकद्रवत्वे सति वह्निनाऽनुड्डीयमानत्व मूर्तिबद्धत्वम् ।" इति रसमाधवस्यैवोक्तेः। अयमामर्शः—"द्रुतग्रासपरीणामो जारणा" "अवश्यव्याधिघातकत्वञ्च मूर्च्छना" इति गौणमेवेद लक्षणयुगं फल उपचारात्, उपचर्य्यमाणं हि फलमेव तत्तत्क्रियया निर्देश्यम्, तथाच—सहकारिसंयोगविशेषप्रद्रुतगन्धादिग्रासानां स्वरूपक्षयोत्तर तथाविधः परिणामः फलं, तत्साधकङ्कर्म च जारणा, गन्धादिग्रासजरणसाधनत्वात्। अतएव गन्धजीर्णोऽभ्रजीर्णो हेमजीर्णो रस इति व्यवहाराः। "ग्रस्तस्य चारणं गर्भे द्रावणं जारणन्तथा। इति त्रिरूपा निर्दिष्टा जारणा वरवार्तिकैः" इत्यादिकन्तु पूर्वाभिभूतं क्रियाकलापमपेक्ष्योक्तम्। चारणगर्भद्रावणयोः संस्कारान्तरत्वाच्च, अन्यथा संस्काराष्टादशत्वं भज्येत। तस्माद् "द्रुतग्रासपरीणामो जारणा" इति पुष्कलम्। तत्प्रकाराश्च नैके—"प्रकाराः सन्ति

व्याधिघातकता या स्यात् सा मता मूर्च्छना बुधैः ॥१॥

मूर्च्छनाया द्वौ भेदौ।

निर्गन्धा च सगन्धा च मूर्च्छना द्विविधा मता।
निर्गन्धा गन्धरहिता सगन्धा गन्धसंयुता ॥२॥
निर्गन्धा रसपुष्पादौ मूर्च्छना परिकीर्तिता।
सगन्धा तु विशेषेण रससिन्दूरकादिषु ॥३॥

सगन्धाया ( मूर्च्छनायाः ) द्वौ भेदौ।

सगन्धा मूर्च्छना ह्यत्र रसतन्त्रविचक्षणैः।
अन्तर्धूमबहिर्धूमभेदेनापि द्विधा मता ॥४॥

अन्तर्धूममूर्च्छनायाः स्वरूपम्।

निरुध्यारम्भतः कूपीमुखं यद्गन्धजारणम्।
मूर्च्छना सा भिषग्वर्यैरन्तर्धूमाभिधा मता ॥५॥
जीर्णगन्धे तु यत्कूपीवक्त्ररोधनपूर्वकम्।
पाचनं मूर्च्छना सा तु बहिर्धूमाभिधा मता ॥६॥
सगन्धमूर्च्छितः सूतः सुचिरं परिशीलितः।
न जातु प्रकरोतीह विकारान् पारदोत्थितान् ॥७॥
निर्गन्धमूर्च्छितः सूतो गदसंक्षयकालतः।
अनन्तरं शीलनेन विकारान् जनयेद्भृशम् ॥८॥

कोटिशः" इत्युक्तत्वात्। एतावता च "गालनपातनव्यतिरेकेण" इत्यादिमाधवोक्तजारणालक्षणे गालनशब्दस्य वस्त्रादिगालनमर्थोऽनुसन्धेयः। अत्र च "द्रुतग्रासक्षय एव जारणा।" पूर्वावस्थाप्रतिपन्नत्वन्तु न लक्षणनिवेशायावश्यकं, तस्य ग्रासक्षयोत्तरं स्वतः संभवित्वात्। यच्च "मूर्च्छना जारणा चेत्यनर्थान्तरं प्रायः" इत्युक्तं तेन तदपि स्वोक्तिविरोधादुपेक्ष्यम्। "पूर्वावस्थाप्रतिपन्नत्वं जारणा" इति तेनोक्तेः। मूर्च्छनायान्तु न पूर्वावस्थाप्रतिपन्नतेति सुमहान् भेदः। मूर्च्छना च "भस्माभिन्नत्वे सति रसभक्षणयोग्यतापादककर्म।" अवश्यव्याधिघातश्चास्याः फलमित्यलमधिकाम्रेडितेन ॥१॥

निर्गन्धसगन्धादिभेदेन मूर्च्छनाप्रकारा बहवः। रससिन्दूरकादिषु इत्यत्र आदिना पर्पट्यादिग्रहणम्। रसरत्नसमुच्चये पर्पट्यादयो बन्धभेदेषूक्ताः, वस्तुतस्तु बन्धभेदविशेष एव फलविशेषान्मूर्च्छनाशब्दवाच्य इत्यवधेयम् ॥२-३॥

अन्तर्धूमभेदेन सगन्धा द्विविधा—आरम्भादवरुद्धमुखपाकान्तर्धूमा। गन्धकजरणोत्तरमल्पशेषे मुखरोधपूर्वकं जाता बहिर्धूमा मूर्च्छना इति भेदः ॥४-६॥

अथ सगन्धनिर्गन्धयोः फले विशेषः—सगन्धमूर्च्छितः रससिन्दूरादिरूपः कज्जलीरूपो वा सूतः सुचिरं सेवितोऽपि कदाचित् पारदोत्थितान् विकारान्

अथ मुग्धरसस्य निर्माणप्रकारः।

[ गीतिका ]

युगतोलकप्रमाणं विमलीकृतं रसेशम्।
द्विगुणां खटीञ्च शुद्धां निदधीत खल्वमध्ये ॥९॥
परिपेषयेत्तु तावद् विधिनैतदीयचूर्णम्।
अवलोक्यते न यावत्खलु चन्द्रिकाविहीनम् ॥१०॥
हतचन्द्रिकं तु चूर्णं ह्यवबुध्य योजयेद्वै।
विबुधैः स्मृतो रसोऽयं खलु मुग्धनामधेयः ॥११॥

मुग्धरसस्य गुणाः।

उदरामयनुत् वमिहृन्नियतं सहजोत्थफिरङ्गकुरङ्गहरिः।
शिशुरोगहरस्तु विशेषतया विबुधैरुदितः खलु मुग्धरसः ॥१२॥

मुग्धरसस्य मात्रानिरूपणम्।

गुञ्जार्धतः समारभ्य सार्धगुञ्जद्वयोन्मिता।
पूर्णमात्रा मता मुग्धरसस्य तरुणोचिता ॥१३॥
गुञ्जाष्टमांशतश्चास्य गुञ्जापादांशसंमिता।
पूर्णमात्रा मता विज्ञैर्वार्षिकस्यार्भकस्य तु ॥१४॥

मुग्धरसस्य आमयिकप्रयोगः।

गुञ्जैकसंमितो मुग्धरसस्तु सलिलान्वितः।

मुखशोथलालास्रावादीन् न करोति। गन्धप्रभावेण विकारमजनयता मलमूत्रस्वेदादिमार्गेभ्यः सूतस्य स्वत एव निर्गमात्। अतस्तस्य मात्रया सुचिरं सेवनेऽपि न हानिसंभावना। निर्गन्धमूर्च्छितः रसपुष्पकर्पूरादिरूपः सूतः रोगक्षयकालानन्तरं सेवनेन अवश्यं विकारान् जनयेत्। अतश्च फिरङ्गादिरोगक्षयोत्तरं रसपुष्पादेः सेवनञ्च कार्य्यम्। अपितु निर्गन्धमूर्च्छितसूतसेवनोत्तरं रोगशान्तौ सत्यां काकमाचीकूष्माण्डशारिवादिपारददोपसारकौषधिरससेवनेन शरीरात् पारदनिःसारणं कार्य्यम्। "रसत्यागविधौ पुनः भक्षयेद् बृहतीं विल्वम्" इति रसवाग्भट्टोक्तेः।

अथ मुग्धरसनिर्माणप्रकारः—पारदं विमलीकृतं पूर्वोक्तसंस्कारशुद्धं चतुस्तोलकमितमादायाष्टतोलकमितां शुद्धां पाषाणांशरहितां वस्त्रगालितां खटीं कठिनीं खल्वे मर्दयेत्। विनष्टपारदकणं हतचन्द्रिकमेतच्चूर्णं मुग्धरसन्नाम ॥९-११॥

अथ मुग्धरसगुणाः—उदरामयः अतीसारः, सहजोत्थः शरीरारम्भकबीजभागदुष्टिजन्यः फिरङ्गस्तदाख्यः पापरोग एव कुरङ्गो मृगस्तन्नाशाय हरिः सिंह इव, बलात् तन्नाशक इत्यर्थः ॥१२॥

मात्रानिरूपणं व्यवहारार्थम्। ½ गुञ्जातः २॥ गुञ्जा पर्य्यन्तं युवयोग्या, ⅛ गुञ्जातः ¼ गुञ्जापर्यन्तं वार्षिकबालकयोग्याऽस्य मात्रा ॥१३-१४॥

मासमेकं द्वयं वापि यत्नतः परिशीलितः ॥१५॥
गर्भिणीनां चिरोद्भूतां नवजातामथापि वा।
फिरङ्गजनितां बाधां नाशयत्यविलम्बितम् ॥१६॥
गुञ्जापादोन्मितो मुग्धरसो नीरेण शीलितः।
शिशूनां विनिहन्त्याशु फिरङ्गं सहजोत्थितम् ॥१७॥
रक्तिकाङ्घ्रिमितो मुग्धरसो वारा नियोजितः।
विनिहन्त्याशु बालानामतीसारं सुनिश्चितम् ॥१८॥
विज्ञाय रोगोपशमं प्राणाचार्यो भिषग्वरः।
न योजयेन्मुग्धरसं रससिन्दूरवद् भृशम् ॥१९॥

अथ रसपुष्पस्य नामानि।

रसपुष्पं रससुमं कुसुमं रसपूर्वकम्।
मतं, निरुच्यते कैश्चित्सुधानिधिरसाख्यया ॥२०॥

अथ रसपुष्पस्य प्रथमो निर्माणप्रकारः।

विशुद्धं रसराजन्तु पञ्चतोलकसंमितम्।
तत्समं लवणञ्चैव काशीसं विमलं तथा ॥२१॥
खल्वे सम्पेष्य यत्नेन श्लक्ष्णचूर्णञ्च कारयेत्।
अथ चूर्णं समादाय हण्डिकायां विनिक्षिपेत् ॥२२॥
मध्ये सच्छिद्रया काचलितयाऽऽयतवक्त्रया।
आच्छादयेद्धण्डिकया रसकर्मविशारदः ॥२३॥
सन्धिन्तु वाससाच्छाद्य लेपयेत्स्वल्पया मृदा।
न लेपयेदूर्ध्वपात्रं भानुतापेऽथ शोषयेत् ॥२४॥
चुल्ल्यां निधाय विपचेदत्यल्पानलयोगतः।
ऊर्ध्वपात्रस्थछिद्रेण वाष्पमुद्याति वेगतः ॥२५॥
निर्याते जलबाष्पे तु विधिना परिपाकतः।
खटीपिधानपिहितं छिद्रं खट्या प्रलेपयत् ॥२६॥
अतिमन्दानलेनैव यामद्वितयमादितः।
विपाचयेत्प्रयत्नेन स्वाङ्गशीतमथोद्धरेत् ॥२७॥

रक्तिकाङ्घ्रिमितः गुञ्जाचतुर्थांशः। वारा जलेन। शिष्टं सुगमम् ॥१५-१९॥

रसपुष्पनामानि शास्त्रे व्यवहाराय। केचिदिमं सुधानिधिनाम्ना ख्यापयन्ति ॥२०॥

अथ रसपुष्पस्य प्रथमो निर्माणप्रकारः—विशुद्धं संस्कारशुद्धं हिङ्गुलोत्थं वा पारदं ५ तोलकं, लवणं सैन्धवं ५ तो०, शुद्धं कासीसं ५ तो०, आनिश्चन्द्रिकं खल्वे

न्युब्जं कृत्वा समुत्तार्य सन्धिदेशं विलिख्य च ।
शशिप्रभं लम्बमानं रसपुष्पं समाहरेत् ॥२८॥

रसपुष्पस्य द्वितीयो निर्माणप्रकारः ।

शुद्धं तोलकपञ्चकं रसवरं काशीसकं सैन्धवं
दत्वा चैव समं समं सुमसृणं खल्वे ततः पेषयेत् ।
कूपीमध्यगतं पचेत्तु सिकतायन्त्रेऽथ यामद्वयं
नीहारप्रभमूर्ध्वभागनिचितं पुष्पं रसाद्यं हरेत् ॥२६॥
जलीयबाष्पे निष्क्रान्ते पिधानेन पिधाय वै ।
कूपिकाकण्ठदेशस्थां वालुकामपसारयेत् ॥३०॥
पुष्पवच्छोभते यस्मात्कूपीकण्ठप्रलम्बितम् ।
रसपुष्पमिदं तस्मात्प्राणाचार्यैर्निगद्यते ॥३१॥

रसपुष्पस्य तृतीयो निर्माणप्रकारः ।

पुष्पकासीसजं चूर्णं त्वतिमन्दाग्नियोगतः ।
किञ्चिद् भृष्टं नष्टनीरं पञ्चतोलकसंमितम् ॥३२॥
तन्मितामेव दहने पुष्पितां स्फटिकारिकाम् ।
रसेश्वरं सैन्धवं च पृथक्तुल्यं समाहरेत् ॥३३॥
खल्वे सम्पेष्य यत्नेन श्लक्ष्णचूर्णं तु कारयेत् ।
निश्चन्द्रिकं वीक्ष्य चूर्णं यन्त्रे डमरुकाह्वये ॥३४॥
अतिमन्दानलेनैव द्वियामं यत्नतः पचेत् ।
भिषग्वरो विधानज्ञः स्वाङ्गशीतमथोद्धरेत् ॥३५॥

पेषयेत्, न्युब्जीकृत्य हण्डिकां रसपुष्पोद्धरणं तस्याधःपातनिवृत्तये । शशिप्रभ-मतिश्वेतम् ॥२१-२८॥

अथ द्वितीयः प्रकारः—शुद्धपारदसैन्धवकासीसानां प्रत्येकं ५ तो०, आनिश्चन्द्रिक मर्दयित्वा काचकूप्यां निधाय वालुकायन्त्रेण यामद्वयं पाको विधेयः । जलीयबाष्पे निष्क्रान्ते पिधानकेन मुखमाच्छाद्य मृदा सन्धिं विलिप्य कूपिकागलाद् वालुकापसारणीया । तथा सति कण्ठदेशे शैत्यापादनेन रसपुष्पसङ्ग्रहः सम्यक् सम्भवति ॥२६-३१॥

अथ तृतीयः—पुष्पकासीसचूर्णमतिमन्दानलेन नष्टजलांशं ५ तोलकं, वह्निभर्जिता स्फटिका ५ तो०, पारदः सैन्धवञ्च तावदेव । ततः खल्वे यावन्निश्चन्द्रिक पिष्ट्वा डमरूयन्त्रेण पातयेत् । सुगमोऽयम्प्रकारः । रसतन्त्रमेव महाम्भोधिः तत्र कर्णधारेषु पारोत्तारकेषु धुरन्धरैः अग्रगण्यैः प्रधानैः मित्रवंशे विश्वामित्राख्ये कुले अवतंसैः शिरोभूषणरूपैः गुरुवर्यैः सद्गुरुभिः महोदयैः श्रीमन्नरेन्द्रनाथाख्यैः तादृशसुगृहीतनामभिः आविष्कृतः प्रकाशित इति श्रद्धाधिक्यसूचनम् ॥

भास्वद्विभं ततो शुक्लया शरदिन्दुमनोहरम् ।
पुष्पवल्लम्बमानं तु रसपुष्पं समाहरेत् ॥३६॥
रसतन्त्रमहाम्भोधिकर्णधारधुरन्धरैः ।
मित्रवंशावतंसैस्तु गुरुवर्यमहोदयैः ॥३७॥
श्रीमन्नरेन्द्रनाथाख्यैस्त्वयमाविष्कृतो विधिः ।
प्रकाशितः खलु मया लोकानुग्रहकाम्यया ॥३८॥

रसपुष्पस्य परीक्षणम् ।

महोज्ज्वले लोहपत्रे जलविन्दुं तु विन्यसेत् ।
रसपुष्पं समादाय जलविन्दौ विनिक्षिपेत् ॥३९॥
क्षणादूर्ध्वं जलं क्षिप्त्वा यदि कार्ष्ण्यं न लभ्यते ।
रसपुष्पं तदा शुद्धं जानीयाद्भिषजां वरः ॥४०॥

रसपुष्पस्य गुणाः ।

रसपुष्पं पित्तहरं मूत्रलं व्रणदोषहृत् ।
परं विरेचनकरं तथा भूतविषापहम् ॥४१॥
स्वस्थीकरणमत्यन्तं जलीयांशविशोषणम् ।
पित्ताशयं तु विक्षोभ्य मलपित्तापसारकम् ॥४२॥
कृमीन् विषूचिकोद्भूतान् हिक्काञ्चैव फिरङ्गकम् ।
जलोदरादिकान् रोगान् नाशयत्यविलम्बितम् ॥४३॥

रसपुष्पस्य मात्रानिरूपणम् ।

गुञ्जार्द्धतः समारभ्य सार्द्धगुञ्जद्वयोन्मिता ।
रसपुष्पस्य मात्रा स्यान्मात्राविन्मतसम्मता ॥४४॥
रेचनाय मता मात्रा सार्द्धगुञ्जद्वयोन्मिता ।
गुञ्जाष्टमांशप्रमिता मात्रा हिक्कामये हिता ॥४५॥

अथ परीक्षणमस्य—अत्यन्तनिर्मले लोहपत्रे जलविन्दुं निक्षिप्य तदुपरि किञ्चित् रसपुष्प प्रक्षिप्य क्षणं धारयेत् । ततः तत्स्थानस्य वस्त्रेण प्रोञ्छनं विधायालोकयेत्, यदि लोहपत्रे कृष्णता न स्यात्तदा शुद्धमिदमिति व्यवस्येत् ॥३९-४०॥

अथ गुणाः—पित्तहरं विरेकद्वारा पित्तहरम्, व्रणदोषाः कृम्यादयः, तीव्ररेचकम्, भूतानि सङ्क्रामकरोगबीजानि। पित्ताशयो यकृदधोवर्ति पाचकपित्तस्थानम्। स्पष्टमन्यत् ॥४१-४३॥

अथ रसपुष्पमात्रानिरूपणम्—१ गुञ्जातः २॥ गुञ्जां यावन्मात्रास्य । अत्र विशेषः—सार्द्धद्विगुञ्जा मात्रास्य रेचनाय दातव्या। गुञ्जाष्टमांशो हिक्कारोगे।

फिरङ्गरोगाय मता गुञ्जापादांशसंमिता ।
इयमेव मता मात्रा शिशूनां तु विरेचने ॥४६॥

रसपुष्पस्य आमयिकः प्रयोगः ।

रसपुष्पं सार्द्धगुञ्जाद्वितयं स्वर्जिकान्वितम् ।
शीलितं रेचयत्येव कामं यामद्वयोत्तरम् ॥४७॥
शीलितं रसपुष्पन्तु वारिणा गुञ्जपादिकम् ।
विसूच्यास्तु समारम्भे विसूचीकृमिसङ्कुलत् ॥४८॥
रसागमपरिज्ञानविहीनो भिषगल्पधीः ।
निरन्तरं विशेषेण रसपुष्पं न योजयेत् ॥४९॥

चन्दनादिवटिका ।

रक्तचन्दनमथोषणं सिता कुङ्कुमं रससुमं लवङ्गकम् ।
तोलकैकमितमेव वै पृथक् त्वाददीत रसतन्त्रकोविदः ॥५०॥
रक्तिकैकमिता वटी कृता प्रत्यहं तु नवनीतयोजिता ।
चन्दनादिवटिकेयमुत्तमा हन्ति दुर्जयफिरङ्गजां व्यथाम् ॥५१॥

अथ रसपुष्पमलहरः ।

रसपुष्पं चतुर्गुञ्जं मेलयेत्तोलकोन्मिते ।
क्षालिते नवनीते तु शतधा विमलाम्भसा ॥५२॥
मतो मलहरोऽयन्तु रसपुष्पसमाह्वयः ।
लिप्तोऽयं नाशयत्याशु फिरङ्गव्रणजां रुजम् ॥५३॥

गुञ्जाचतुर्थांशः फिरङ्गरोगे च । युवयोग्या चेयं मात्रा । बालकानान्तु गुञ्जाचतुर्थांशं यावत् रेचनाय मात्रा । अन्यत्र कर्मवयस्तोऽपि लघीयसी गुञ्जाविंशांशा त्रिंशांशा वा यथायोग्यम् ॥४४-४६॥

अथास्य रोगप्रयोगः—रसपुष्पं २॥गुञ्जामित, स्वर्जिकाक्षारो माषार्द्धमित, मिलितयोः सेवनाद् यामद्वयोत्तरं रेचनं स्यात् । अनुपानं जलम् । उपलक्षणञ्चै-तत् लवङ्गचूर्णादिना सहापि रेचनं करोत्येव । गुञ्जाचतुर्थांशो विषूचिकायाः प्रारम्भे । अनुपानं शृतशीतमुदकम् । रसपुष्पस्य च निरन्तरं प्रयोगो निषिद्धः । अत्रोपपत्तिः पूर्वमुक्तैवेति ॥४७-४९॥

अथ चन्दनादिवटिका—ऊषणं कृष्णमरिचम्, सिता खण्डम्, कुङ्कुमं काश्मीरम्, रससुमं रसपुष्पम् ॥५०-५१॥

अथ बाह्यप्रयोगार्थमस्य मलहरः—चतुर्गुञ्जामितं रसपुष्पं तोलकमिते निर्मलोदकेन शतधा धौते नवनीते मेलयेत्, सोऽयं फिरङ्गव्रणपीडाहरः लेपिताश्च ॥५२-५३॥

रसपुष्पाद्यमलहरः ।

रसपुष्पं चतुर्गुञ्जं सिक्थतैलञ्च तोलकम् ।
खल्वेऽतिमसृणे क्षुद्रे दत्त्वा यत्नेन मर्दयेत् ॥५४॥
ततो विशालवक्त्रायां काचकुप्यां तु विन्यसेत् ।
गदितोऽयं मलहरो रसपुष्पाद्यसंज्ञकः ॥५५॥

अस्य गुणाः ।

प्रलिप्तोऽयं मलहरः प्रत्यहं स्वल्पमात्रया ।
नाशयत्यचिरादेव फिरङ्गव्रणमुल्वणम् ॥५६॥
तथा पायुप्रदेशोत्थां त्वथवोपस्थदेशजाम् ।
विचर्चिकां चिरोद्भूतां नाशयत्येष निश्चितम् ॥५७॥
सिंहादिकानां हन्त्याशु तथा तत्कालसंभवम् ।
षाण्मासिकं वार्षिकं वा नखदन्तोद्भवं क्षतम् ॥५८॥

प्रसङ्गात्सिक्थतैलस्य प्रथमो निर्माणप्रकारः ।

भागैकं विमलं सिक्थं तैलन्तु रसभागिकम् ।
आदाय वङ्गलिप्तायां स्थालिकायां निधापयेत् ॥५९॥
पचेत्तावन्मन्दवह्नौ यावत्सिक्थं द्रवीभवेत् ।
स्थालिकामथ यत्नेन धरिण्यामवतारयेत् ॥६०॥
तावत्प्रचालयेद्दर्व्या यावदेति प्रगाढताम् ।
सिक्थतैलसमायोगात्सिक्थतैलमिदं स्मृतम् ॥६१॥

द्वितीयो निर्माणप्रकार ।

भागैकं विमलं सिक्थं तैलन्तु शरभागिकम् ।
पूर्वोद्दिष्टविधानेन पचेद्रसविशारदः ॥६२॥
जायते नवनीताभं यामं दर्व्या प्रचालितम् ।
रसज्ञैः कीर्तितमिदं सिक्थतैलं द्वितीयकम् ॥६३॥

अनयो प्रयोग. ।

आद्यं तु शीतसमये ग्रीष्मर्तौ तु द्वितीयकम् ।
सिक्थतैलं मलहरप्रयोगेषु नियोजयेत् ॥६४॥

रसपुष्पाद्यो मलहरो व्याख्यासमः ॥५४-५५॥

अस्य गुणाः—सिंहादिकानां नखदन्तोद्भवं क्षतं तात्कालिकं पाण्मासिकं वार्षिकञ्चा नाशयेदाशु ॥५६-५८॥

प्रसङ्गात् सिक्थतैलनिर्माणप्रकारः प्रथमः । सिक्थं मधूच्छिष्टमेकभागम्, तिलतैलस्य षड्भागाः ॥५९-६१॥

द्वितीयः प्रकारः—सिक्थस्यैको भागः, तिलतैलस्य पञ्च ॥६२-६३॥

अत्राद्यं शीततौं योज्यं । द्वितीयं च ग्रीष्मर्तौ ॥६४॥

अथ रसकर्पूरस्य निर्माणप्रकारः ।
[ गीतिका ]

पलसंमितं प्रयत्नाद् विमलीकृतं रसेशम् ।
सपलार्द्धकं पलैकं विमलञ्च गन्धकाम्लम् ॥६५॥
चषकोपमे विशुद्धे निदधीत काचपात्रे ।
विनिधाय काचपात्रं त्वयसस्त्रिपादिकायाम् ॥६६॥
ज्वलिते सुराप्रदीपे संशोषयेज्जलांशम् ।
अथ शोषिते तु चूर्णे त्ववतार्य वै प्रदीपात् ॥६७॥
समभागिकं तु दद्याल्लवणं तु सैन्धवाख्यम् ।
परिमेल्य चूर्णमेतन्निदधीत काचकुप्याम् ॥६८॥
युगसङ्ख्यकैस्तु यामैः सिकताख्ययन्त्रसंस्थम् ।
विपचेदतिप्रयत्नात् रसतन्त्रकर्मविज्ञः ॥६९॥
अवबुध्य काचकूपीं स्वत एव शीतलाङ्गीम् ।
घनसारनामधेयं रसमाहरेद्रसज्ञः ॥७०॥

अत्र रहस्यम् ।

जलीयबाष्पे निर्याते पिधानेन पिधापयेत् ।
कूपीकण्ठस्थितां स्वल्पां सिकताञ्चापसारयेत् ॥७१॥

रसकर्पूरस्य गुणाः ।

रसकर्पूरकः ख्यातो बहुभूतविषापहः ।
त्वग्रक्तदोषशमनो ग्राही रुचिविवर्द्धनः ॥७२॥
अतीसारप्रशमनो विशेषात्कृमिनाशनः ।
प्रवाहिकाहरः कामं मात्राधिक्ये विषक्रियः ॥७ ॥

अथ रसकर्पूरस्य निर्माणप्रकारः—पारदं पलमात्रम्, सार्द्धपलञ्च निर्मलं गन्धकाम्लं बलिद्रावकम्, शुद्धकाचपात्रस्थ सुराप्रदीपे लोहत्रिपादिकायां स्थापयित्वा बलिद्रावजलांशं शोषयेत्। चूर्णरूपे सति पारदे तत्समं सैन्धवलवणं प्रक्षिप्य खल्वे मर्दयेत्। बालुकायन्त्रे चतुर्यामं मन्दाग्निना पाकः । घनसारनामधेयो रस इति रसकर्पूरः। अत्र च काचकूप्यामौषधं निधाय पाककालेऽग्नियोगेन लवणस्य जलीयबाष्पनिर्गमनपर्य्यन्तं कूपीमुखरोधो न कार्यः,प्रथमत एव मुखरोधे जलानिर्गमेन रसकूर्पूरनिर्माणमेव न स्यात् सम्यक् । कूपीकण्ठस्थसिकतापसारणं रसकर्पूररक्षार्थम् ।' अत्रेदमवधेयं यत् भावप्रकाशाद्युक्तरसकर्पूरनिर्माणविधिना रसपुष्पमिश्रितस्यैव रसकर्पूरस्योपलब्धिर्न शुद्धस्य, तेन प्रयोगव्याकोपः, अतः रसपुष्पोपादानरहितं शुद्धं रसकर्पूरं निर्मातुमयं नवीन एव श्रमः ॥६५-७१॥

रसकर्पूरस्य गुणाः—अयं सङ्क्रामकजीवाणुविषनाशनः, प्रवाहिकाहर इति कफरक्तमिश्रितामेव प्रवाहिकां हरति। मात्राधिक्ये विषप्रभावः मारक इत्यर्थः।

स्फोटं कण्डूमपि च चिरजां मण्डलादींश्च कुष्ठान्
सर्वोत्थं वा सहजमपि वा स्पर्शजं वा फिरङ्गम्।
शीघ्रं नानाव्रणगणभवां हन्ति पीडां महोग्रां
कर्पूराख्यो जठरदहनोद्दीपनोऽयं रसेशः ॥७४॥
शीतले षोडशगुणे सलिले विनिपातितः।
सर्वथा द्रवतां याति रसः कर्पूरकाभिधः ॥७५॥

रसकर्पूरस्य मात्रानिरूपणम्।

आरभ्य रक्तिकायास्तु चतुःषष्ट्यंशतो भिषक्।
द्वात्रिंशद्भागपर्यन्तं मात्रामस्य प्रयोजयेत् ॥७६॥

रसकर्पूरस्य आभ्यन्तरप्रयोगार्थं मात्रानिर्माणप्रकारः।

चूलिकालवणं शुद्धं गुञ्जापञ्चकसंमितम्।
समञ्च रसकर्पूरं षष्टितोलकसंमिते ॥७७॥
जले विनिक्षिपेत्प्राज्ञो मात्रामस्य प्रकल्पयेत्।
बिन्दुत्रिंशकतश्चादौ षष्टिबिन्दुमितां पराम् ॥७८॥

अस्य आभ्यन्तरप्रयोगार्थं चूर्णरूपेण मात्रानिर्माणप्रकारः।

श्लक्ष्णं दारुसिताचूर्णं पञ्चमाषकसंमितम्।
गुञ्जैकं रसकर्पूरं क्षिपेन्निम्बवल्लमर्दितम् ॥७९॥
रक्तिकैकमितं चूर्णं मात्रायां विनियोजयेत्।
रक्तिकैकमिता पूर्णमात्रास्य परिकीर्तिता ॥८०॥

रसकर्पूरस्य आमयिक प्रयोगः।

रसः कर्पूरसंज्ञोऽयं मात्रया परिशीलितः।

अस्य विशेषगुणाः—सर्वोत्थं सान्निपातिकम्, सहजं जन्मना जातम्। जठरदहनोद्दीपन इति जाठराग्निप्रदीपनः। स्पष्टमन्यत् ॥७२-७४॥

अयञ्च स्वापेक्षया षोडशगुणे शीतले जले निपातितः सर्वथा द्रवतां याति। एतच्च जलपरिमाणं न्यूनान्न्यूनं ज्ञेयम्, अतोऽपि जलन्यूनतायान्तु न सम्यग् द्रावः स्यादौषधस्येति ॥७५॥

अथास्य मात्रानिरूपणम्-रक्तिकाया चतुःषष्ट्यंशत ($\frac{1}{64}$) आरभ्य द्वात्रिंशद्भागपर्यन्तं ($\frac{1}{32}$) अस्य मात्रा बलाबलं विज्ञाय दातव्येति ॥७६॥

अथास्याभ्यन्तरप्रयोगोपयोगिमात्रानिर्माणप्रकारः—शुद्धं चूलिकालवणं नवसादरं ५ गुञ्जामितम्, रसकर्पूरञ्च ५ गुञ्जामितम् षष्टितोलकमिते जले विनिक्षिप्य ३० बिन्दुभ्यः ६० बिन्दुपर्यन्तं मात्रां जानीयात् ॥७७-७८॥

अथ चूर्णरूपेण मात्रानिर्माणप्रकारः—श्लक्ष्णं मसृणम्, दारुसिता त्वक् ॥७९-८०॥

प्राभातिकीं भुक्तमात्रोत्थिताश्चातिसृतिं हरेत् ॥८१॥
कर्पूराख्यो रसो युक्तः सदाहं चिरकालजम् ।
द्रवपीतमलोपेतमतीसारं विनाशयेत् ॥८२॥
शीलितो रसकर्पूरो मात्रया सुचिरोत्थिताम् ।
सरक्तां सकफाञ्चैव विनिहन्ति प्रवाहिकाम् ॥८३॥

रसकर्पूरगुटिका ।

कुङ्कुमं मरिचं रक्तचन्दनं च लवङ्गकम् ।
जातिपत्री पृथक् सर्वं माषकप्रमितं हरेत् ॥८४॥
विशुद्धं रसकर्पूरं रक्तिकैकमितं क्षिपेत् ।
संमर्द्य निम्बुनीरेण कुर्याद् गुञ्जोन्मितां वटीम् ॥८५
रसकर्पूरगुटिका नामतः परिकीर्तिता ।
शीलिता नवनीतेन फिरङ्गं हन्त्यसंशयम् ॥८६॥

बाह्यप्रयोगार्थं भूतघ्नचक्रिका ।

रसं कर्पूरनामानं गुणपर्वतभागिकम् ।
निम्बूकाम्लञ्च विशदं वसुपावकसंमितम् ॥८७॥
समादाय विधानज्ञो मेलयेदतियत्नतः ।
चक्रिकाः कारयेद्वैद्यो गुञ्जाषट्कमिताः पृथक् ॥८८॥
रसज्ञैस्तु समाख्याता नाम्ना भूतघ्नचक्रिका ।
न जातु विकृतिं याति भूतसङ्घविषापहा ॥८९॥

अथ रसकर्पूरस्य रोगेषु प्रयोगः—प्राभातिकीं प्रातःकाले जनिशीलाम्, अतिसृतिं अतिसारम् । अपि च मिश्रितकफरक्तामेव प्रवाहिकां हन्ति नतु विभक्तकफरक्तामित्यवधेयम् ॥८३॥

अथ रसकर्पूरगुटिका—कुङ्कुमं काश्मीरम् । कुङ्कुमादिपञ्चद्रव्याणामेको माषकः प्रत्येकम्, रसकर्पूरस्यैका गुञ्जा । निम्बूनीरेण सम्मर्द्य कृता रक्तिमिता वटी नवनीतमध्ये निधाय भक्षिता फिरङ्गरोगशमनी । सेयं रसकर्पूरगुटिका नामतः ॥

भूतघ्नचक्रिकायां रसकर्पूरस्य त्रिसप्तति (७३) भागाः । गुणास्त्रयः, सत्वरजस्तमांसीति । पर्वताश्च सप्त 'सप्तैते कुलपर्वताः' इत्युक्तेः । तथाच "अङ्कानां वामतो गतिः" इति न्यायात् सप्ताङ्कोत्तरं त्रिकाङ्कलाभात् त्रिसप्ततिरिति ( ७३ ) प्राचां परिभाषा । एवमग्रेऽपि ज्ञेयम् । विशदं निर्मलम् । निम्बूकाम्लं वक्ष्यमाणप्रकारम्, वसुपावकसंमितं अष्टात्रिंशद् ( ३८ ) भागमितम् । उभयं समादाय अतियत्नेन सावधानतया सम्यङ्मिश्रयित्वा वर्तुलचिपिटा चक्राकाराः चक्रिकाः कार्याः । केवलं रसकर्पूर एव जले द्रावितो विश्लिष्टपारदो बहुदिनानि स्थातुमयोग्यश्च स्यादतो निम्बूकाम्लमेलनमत्र योग्यम् ॥८७-८९॥

प्रसङ्गान्निम्बूकाम्लस्य निर्माणप्रकारः ।

निम्बूकलुङ्गकादीनां निर्मलं रसमाहरेत् ।
काचलिप्ते तु मृत्पात्रे हसन्त्यां क्वाथयेद्भिषक् ॥६०॥
क्वथितञ्च समालोक्य मृत्पात्रमवतारयेत् ।
कठिनीचूर्णकं दद्याद् यावद्बाष्पोद्गमो भवेत् ॥६१॥
अनन्तरं गन्धकाम्लं क्षिपेत्तावच्छनैः शनैः ।
चूर्णं कुन्देन्दुसङ्काशं यावद्याति तलस्थताम् ॥६२॥
तलस्थं तं सुविज्ञाय सारयेत्पृथुवाससा ।
अवशिष्टञ्च वसने पदार्थं सन्त्यजेद् बुधः ॥६३॥
पानीयं सारितं काचपात्रे संस्थाप्य शोषयेत् ।
जायते शशिसङ्काशं चूर्णं पात्रतलस्थितम् ॥६४॥
अयमेव भिषग्वर्यैर्निम्बूकाम्ल इति स्मृतः ।
स्वजातिप्रभवास्तस्य गुणाः सर्वे भवन्ति हि ॥६५॥

रसकर्पूरद्रवस्य निर्माणप्रकारः ।

भूतघ्नचाक्रिकामेकां शततोलकसंमिते ।
जले क्षिपेत् विद्रुतायां द्रवं तु विनियोजयेत् ॥६६॥
रसकर्पूरमानात्तु द्विसहस्रगुणाम्भसा ।
द्रवोऽयमेवं निर्दिष्टो यथायोगं प्रयोजयेत् ॥६७॥

प्रकारान्तरेण रसकर्पूरद्रवस्य निर्माणप्रकारः ।

द्वात्रिंशद्गुञ्जकमितं रसं कर्पूरसंज्ञकम् ।
सार्द्धद्वितोलकमिते सारे कोहलपूर्वके ॥९८॥

निम्बूकाम्लनिर्माणे—आदिपदेन तज्जातीनां जम्बीरबीजपूरप्रभृतीनां ग्रहणम् । एषां रसं सारकपत्रगालितम् । काचलिप्तमृत्पात्रग्रहणं रसनैर्मल्य-रक्षार्थम् । हसन्त्यां अङ्गारधानिकायां । यत्किंचिन्मलापसारणपर्य्यन्तं क्वाथः । तलस्थं सुधागन्धकं भवति । उपरिस्थं निर्मलं जलं घनवस्त्रेण सारयेत्, वस्त्रावशिष्ट त्यजेत् पृथक्कुर्यादिति । तच्च सारितं जलं काचपात्रस्थमग्नौ पुनः शोषयेत् । तच्छुष्कं निम्बूकाम्लं भवति, स चायं स्वजातिगुणः निम्बुजम्बीरादिकारणगुण इत्यर्थः ॥६०–६५॥

अथ रसकर्पूरद्रवनिर्माणप्रकारः—१०० तोलकमिते निर्मले जले भूतघ्न-चक्रिकामेकां द्रावयेत् । अत्रच गणनया रसकर्पूरमानाज्जलं द्विसहस्रगुणमस्ति ॥ रसकर्पूरद्रवनिर्माणे काचपात्रस्यैव प्रयोग कार्यः ॥६६–६७॥

अथ प्रकारान्तरम्—रसकर्पूरस्य द्वात्रिंशद्गुञ्जाः, कोहलो यवकृता सुरा 'एल्कोहल' इति आंग्लभाषायाम्, तस्य सारः जलांशोज्झितं भागं सार्धद्वितोलके

द्रावयेद्रसतन्त्रज्ञः कुप्यामथ निधापयेत्।
द्रवस्यास्य समादाय त्वष्टमांशमितं द्रवम् ॥९९॥
मेलयेत्सलिले शुद्धे शततोलकसंमिते।
द्रवोऽयमपि संवृत्तो द्विसहस्रगुणाम्भसा ॥१००॥

रसकर्पूरद्रवस्य गुणाः।

फिरङ्गस्फोटविषहृत् सपूयव्रणशोधनः।
हस्तपादस्मरागारगेहादिगतभूतनुत् ॥१०१॥
संक्रामकगदोत्थानभूतघ्नस्तु विशेषतः।
रसज्ञैस्तु समाख्यातो रसकर्पूरजो द्रवः ॥१०२॥

रसकर्पूरद्रवस्य प्रयोगः।

फिरङ्गजानां स्फोटानां व्रणानां विविधात्मनाम्।
क्षालनार्थं विशेषेण सहस्रगुणिताम्भसा ॥१०३॥
व्रणेषु तु चिरोत्थेषु दिक्सहस्रगुणाम्भसा।
कृतं द्रवं प्रयुञ्जीत शल्यतन्त्ररहस्यवित् ॥१०४॥
हस्तपादादिकाङ्गानां गेहादीनाञ्च धावने।
कृतं द्रवं प्रयुञ्जीत सहस्रगुणिताम्भसा ॥१०५॥
योन्यादिकोमलाङ्गानां क्षालनार्थं प्रयोजयेत्।
सहस्रपञ्चकगुणनीरनिष्पादितं द्रवम् ॥१०६॥

मानेनादाय द्रावो विधेयः। अस्याष्टमांशः शततोलकमिते जले क्षेप्यः। एवञ्च द्रवोऽयमपि रसकर्पूरापेक्षया द्विसहस्रगुणजलो जातः। आंग्लमानेन—रसकर्पूरं १ ड्रामपरिमितं १ औन्सपरिमिते कोहलसारे सन्द्राव्यास्य द्रवस्य षष्टिविन्दून् (१ ड्रामम्) २ पाइण्ट परिमिते (सपादसेरकमिते) जले विनिक्षिपेत्। एवञ्चास्मिन् रसकर्पूरद्रवे रसकर्पूरमानाद् द्विसहस्रगुणं जलं भवति ॥९८–१००॥

अथ रसकर्पूरद्रवस्य गुणाः—अयं प्रक्षालनद्वारा फिरङ्गस्फोटविषं हरति पूययुक्तान् व्रणान् शोधयति च। तथा हस्तपादयोनिस्थानगृहभित्त्यादिगतजीवाणुनाशकश्च। विशेषतश्च सङ्क्रामकरोगनिदानजीवाणुहन्ता रसायनज्ञैरुदाहृतः ॥१०१–१०२॥

अथास्य प्रयोगक्रमः—फिरङ्गजस्फोटानां तथा नानाकृतीनां नवीनदुष्ट व्रणानां क्षालनाय सहस्रगुणजलद्रवयोग.। पुरातनव्रणक्षालनाय च दशसहस्रगुणजलद्रवः। हस्तपादादिशरीराङ्गानां तथा जीवाणुदुष्टवस्त्रादीनां क्षालने सहस्रगुणजलद्रवः। योन्यादिकोमलाङ्गक्षालनाय पञ्चसहस्रगुणजलद्रावः। उपलक्षणञ्चैतद् योग्यतावोधाय ॥१०३–१०६॥

अथ कज्जलिकायाः स्वरूपम् ।

अर्द्धसमानद्विगुणमिताद्या गन्धकचूर्णात् पारदकस्य ।
मर्दनजन्या मसृणकाया कज्जलरूपा कज्जलिका सा ॥१०७॥

कज्जलिकायाः प्रयोगेषु विधानम् ।

योगेषु यत्र निर्दिष्टौ समौ गन्धकपारदौ ।
तन्मानां कज्जलीं तत्र योजयेद्भिषजां वरः ॥१०८॥
उक्ते पारदमात्रे तु प्रयोगेषु सुनिश्चितम् ।
योजयेद्रससिन्दूरं रसतन्त्रविशारदः ॥१०९॥
गन्धः स्यादधिकः सूताद्यावान् योगेषु मानतः ।
गन्धं तावन्तमेवेह विधानशो विनिक्षिपेत् ॥११०॥
रसोऽधिको भवेद्यत्र गन्धकस्य प्रमाणतः ।
आदावेव विदध्यात्तु तन्मानात्तत्र कज्जलीम् ॥१११॥

कज्जलिकाया गुणाः ।

सहपानानुपानानां वैशिष्ट्यादिह कज्जली ।
सर्वामयहरा वृष्या मता दोषत्रयापहा ॥११२॥

तस्या आमयिकप्रयोगः ।

कज्जली समसुगन्धनिर्मिता द्राविडीमरिचचन्द्रतोयदैः ।
देवपुष्पवदरास्थिसंयुतैश्चूर्णितैश्च मधुना वमिं हरेत् ॥११३॥

अथ कज्जलिकापरिचयः—समासतस्त्रिविधा कज्जली गन्धकमानभेदात् । तत्र पारदापेक्षया अर्धगन्धका यथा—गण्डमालाकण्डनरसे—"कर्षं सूतं शुद्धमस्य गन्धकस्त्वर्धमुत्तमम्" इति । समानगन्धा यथा—स्वच्छन्दभैरवे—"शुद्धसूतं तथा गन्धं"……"तुल्यांशम्मर्दयेत्" इति । द्विगुणगन्धा यथा अर्शःकुठारे—"भागः शुद्धरसस्य भागयुगलं गन्धस्य" इत्यादि । उपलक्षणञ्चैतत्—त्रिगुणचतुर्गुणगन्धनिर्मितादीनामप्युपलम्भात् । यथा त्रिगुणगन्धा ज्वरघ्नीगुटिकायाम्—"भागैकं स्याद्रसाच्छुद्धाद् द्वौ पिप्पल्यास्ततस्त्रयः । आकारकरभाद् गन्धाद्" इति । चतुर्गुणगन्धा यथा गुञ्जागर्भरसे—"निष्कत्रयं शुद्धसूतं निष्कद्वादश गन्धकम्" इति । क्वचित्तु पारदाच्चतुर्थांशगन्धयुतापि यथा—आमवातविध्वंसनरसे—"प्रक्षिप्य गन्धं रसपादभागम्" इति । क्वचित्तृतीयांशगन्धयुतापि यथा हेमगर्भपोट्टल्याम्—"शुद्धसूतं त्रिभाग स्यात् तत्सम शुल्वभस्म च । भागैकं गन्धकं दद्यात्" इति । क्वचित् "पलानि चत्वारि रसस्य पञ्च गन्धस्य" इति त्रैलोक्यनाथरस इति । मसृणकाया कोमला, कज्जलरूपा पारदचाकचक्यरहिताऽतीव कृष्णा ॥१०७-१११॥

कज्जलिकाया गुणाः—सहपानं यत्रौषधं मिश्रयित्वा खाद्यते, अनुपानं नाम औषधभक्षणात् पश्चात् सेवनीयम् इत्यनयोर्भेदः ॥११२॥

आमयिकप्रयोगे—द्राविडी एला, चन्द्रः कर्पूरः, तोयदो मुस्ता । वरुणादिकषायः सुश्रुतनिर्दिष्टः । मधुश्चैत्राख्यो मासस्तज्जातेन मधुना क्षौद्रेण समेतेत्यर्थः ।

कज्जली द्विगुणगन्धनिर्मिता चन्द्रबालकमरीचशैलजैः ।
चूर्णितैस्तु ससितैश्च भक्षिता दारुणामपि तृषां वमिं हरेत् ॥११४॥

वरुणादिकषायेण कज्जली परिशीलिता ।
बाह्यान्तर्विद्रधिं घोरां विनिवारयति द्रुतम् ॥११५॥

द्विभागगन्धककृता कज्जली खलु भक्षिता ।
कारवेल्लीदलरसैर्वीसर्पं दारुणं हरेत् ॥११६॥

द्विगुणितबलियोगा कज्जली श्लक्ष्णचूर्णा
सततमिह हि लीढा शिग्रुजत्वग्रसेन ।
मधुजमधुसमेता विद्रधिं हन्ति बाह्यां
स्वपनयति तथान्तर्विद्रधिञ्चातिघोराम् ॥११७॥

कज्जली द्विगुणगन्धनिर्मिता यष्टिकावृषकणाभयाक्षकैः ।
बर्बरीस्वरसभाविता भृशं श्वासकासतमकामयापहा ॥११८॥

समानगन्धनिर्मिता सनिम्बुकाम्लनागरा ।
कणान्विता तु कज्जली हरेदजीर्णमुद्धतम् ॥११९॥

एलाहिफेनकर्पूरजातीफललवङ्गकैः ।
समैः सुचूर्णिता ख्याता कज्जली स्वप्नमेहनुत् ॥१२०॥

शिंशपासारतैलेन नवनीतेन वानिशम् ।
लिप्ता कज्जलिका शीघ्रं जीर्णं चर्मदलं हरेत् ॥१२१॥

द्विभागधूर्तपत्राढ्या कज्जली मन्थजान्विता ।
चित्रकद्रवसंपिष्टा कण्डूपामादिकं हरेत् ॥१२२॥

कज्जली सैन्धवोपेता रविदुग्धेन पेषिता ।
गण्डेषु लेपनादेव नाशयेद् गण्डमालिकाम् ॥१२३॥

वराकौशिकचूर्णेन समुपेता तु कज्जली ।
वातारितैलसंयुक्ता सर्वामयविनाशिनी ॥१२४॥

कज्जली द्विगुणगन्धनिर्मिता गव्यमन्थजयुता निषेविता ।
नाशयेत्तु ह्युदपंशमुद्धतं पथ्यमत्र लवणोज्झितं मतम् ॥१२५॥

समगन्धकयोगेन कृता कज्जलिका खलु ।
लेपनान्नवनीतेन गजचर्महरा मता ॥१२६॥

अथवा मधुर्वसन्तः तत्र जातेन निष्कासितेन इति यावत्। वासन्तिकेन मधुना समेता इति योज्यम्। अभया हरीतकी, अक्षकः विभीतकः, बर्बरी वनतुलसी, अहिफेनादीनां ग्राहित्वात् स्वप्नमेहव्यपोहः। शिंशपासारः तदीयं कृष्णादारु तत्समुत्थं तैलम्।

कज्जली सितयोपेता धात्रीस्वरससंयुता ।
शीलिता नाशयत्याशु सर्वानेव मदात्ययान् ॥१२७॥
धत्तूरबीजस्वरसपेषिता खलु कज्जली ।
सव्योषा नस्ययोगेन सन्निपातं निपातयेत् ॥१२८॥

अथ कज्जलिकोदयमलहरः ।

वस्वब्धितोलकमितं सिक्थतैलं तु निर्मलम् ।
श्लक्ष्णपिष्टा कज्जलिका तोलकद्वयसंमिता ॥१२९॥
शुद्धं मृद्दारश्रृङ्गं तु युगतोलकसंमितम् ।
कम्पिल्लकञ्च विमलं वसुतोलकसंमितम् ॥१३०॥
माषत्रयोन्मितं चैव तुत्थकं निर्मलीकृतम् ।
आदाय खल्वे विन्यस्य पेषयेदतियत्नतः ॥१३१॥
ततो विशालवक्त्रायां काचकुप्यां तु विन्यसेत् ।
मतो मलहरोऽयं तु नाम्ना कज्जलिकोदयः ॥१३२॥
शोधनो रोपणश्चायं व्रणानां तु विशेषतः ।
नाडीव्रणहरश्चापि विविधव्रणनाशनः ॥१३३॥
व्रणा ये न प्रशाम्यन्ति भेषजानां शतैरपि ।
अचिरादेव शाम्यन्ति भृशमस्य प्रयोगतः ॥१३४॥

अथ रसपर्पटिकाया निर्माणप्रकारः ।

सूतं हिङ्गुलसम्भवं हृतमलं मोटोरुबूकार्द्रकैः
दैत्येन्द्रं कचरञ्जनोद्भवजलैः प्राक् सप्तधा भावितम् ।
अग्नौ कोलककोकिलोज्ज्वलशिखे सम्यग्विलाप्य द्रुतं
भृङ्गोत्थे सलिले निषिच्य विमलं तुल्यं ततः पेषयेत् ॥१३५॥
युक्त्या कज्जलिकां विधाय विबुधस्तां लोहदर्व्यां क्षिपेत्
निर्दिष्टैः खलु कोकिलैश्च दहनं प्रज्वाल्य दर्वीं न्यसेत् ।
सूतं पङ्कसमं विलाप्य रुचिरं पाकक्रियाकोविदः
शीघ्रं गोमयसंस्थिते तु कदलीपत्रे ततो निक्षिपेत् ॥१३६॥
निक्षिप्तमात्रं कदलीपलाशैराच्छादयेद्वै सुचिरं रसज्ञः ।
यस्मादियं पर्पटतुल्यरूपा तस्मान्मता पर्पटिकाभिधेया ॥१३७॥

मन्थजं नवनीतम् । वरा त्रिफला, कौशिकं गुग्गुलुः । गजचर्म कुष्ठविशेष ॥११२-१२८॥

वस्वब्धितोलकं ४८ तोलकाः । मृद्दारश्रृङ्गशुद्धिर्जलपेषणाद् वक्ष्यते ॥

अथ रसपर्पटिका—मोटा जयन्ती, उरुबूक एरण्डः, दैत्येन्द्रो गन्धकः, कच रञ्जनं भृङ्गराजः । कोलककोकिलाः बदराङ्गाराः ॥१३५-१३७॥

पर्पटिकापाकस्य त्रैविध्यम्।

मृदुर्मध्यः खरश्चेति पाकोऽत्र त्रिविधः स्मृतः।
आद्यौ प्रयोजयेद्वैद्यः खरन्तु विषवत्त्यजेत् ॥१३८॥

त्रिविधपाकानां स्वरूपाणि।

मृदुपाके न भङ्गः स्यात्तत्सारल्यञ्च मध्यमे।
द्वयोः सचन्द्रिकं कार्ण्यं खरे चूर्णञ्च लोहितम् ॥१३९॥

पर्पटिकाया गुणाः।

ग्रहणीगजमर्दनदक्षतरा क्षयकासजलोदरगुल्महरा।
अतिसारमतिभ्रमदाहहरा ज्वरशोथहरा रसपर्पटिका ॥१४०॥

अर्शोरोगं हरति सुतरां कामलां शूलकोपं
पाण्डुव्याधिं श्वयथुसहितं भस्मकञ्चातिभीषमम्।
कुष्ठान्यष्टादश भृशमथोत्सेधकं सर्वरूपं
प्लीहानञ्च प्रविततरुजं त्वामवातानशेषान् ॥१४१॥

अम्लपित्तशमनी हरणीया वृद्धदोषदमनी रमणीया।
कामशुक्रजननी मदनीया पर्पटी क्व न भवेत्कमनीया ॥१४२॥

पर्पटीमात्रा।

गुञ्जाद्वितयमेवादौ मात्रामस्य प्रकल्पयेत्।
क्रमवृद्ध्या च वितरेद् गुञ्जादशकमन्ततः ॥१४३॥

रसपर्पटिकाया आमयिक. प्रयोगः।

नाकुलीमूलरजसा गुञ्जाष्टकमिताशिता।
रसपर्पटिका साज्यमुन्मादमिह नाशयेत् ॥१४४॥
ब्राह्मीरससमायुक्ता गुञ्जाष्टकमिताशिता।
रसपर्पटिका काममपस्मारं निवारयेत् ॥१४५॥
रामठेनार्धगुञ्जेन सगुञ्जाष्टकजीरका।
रसपर्पटिका भुक्ता ग्रहणीं हन्ति दारुणाम् ॥१४६॥
व्योषनिम्बुदलोपेता भक्षिता रसपर्पटी।
सप्ताहद्वितयेनैव त्वपस्मारं विनाशयेत् ॥१४७॥
वर्धमानकबीजोत्थतैलेन परिशीलिता।
शूलं, गुग्गुलुना पाण्डुशोफं हन्यात्तु पर्पटी ॥१४८॥

खरपाकस्य त्यागो गन्धकदाहात् ॥१३८-१३९॥
उत्सेधकं शोथम्। मदनीया हर्षकरी ॥१४०-१४२॥
नाकुली रास्ना, रामठं हिङ्गु, वर्धमानक एरण्डः। निम्बपञ्चकं निम्बपञ्चाङ्गम् ॥१४४-१५३॥

धूर्तबीजसमायुक्ता रसपर्पटिकाशिता ।
गुञ्जापञ्चकमात्रन्तु हन्त्युन्मादं विशेषतः ॥१४९॥
गोमूत्रेण समायुक्ता रसपर्पटिकाशिता ।
मासमात्रप्रयोगेण नाशयेद्गुदजामयम् ॥१५०॥
निम्बपञ्चकभल्लातवाकुचीभृङ्गसंयुता ।
निहन्ति सर्वकुष्ठानि रसपर्पटिकाशिता ॥१५१॥
दशमूलकषायेण शीलिता रसपर्पटी ।
विनाशयेद्विशेषेण दारुणं वातिकं ज्वरम् ॥१५२॥
त्र्यूषणक्षौद्रसंयुक्ता रसपर्पटिकाशिता ।
विनिहन्त्यचिरादेव कासं खलु कफोत्थितम् ॥१५३॥

पर्पटिकाभक्षणसमनन्तरं जलपाननिषेधः ।

रसवलिपर्पटिकाया भक्षणसमकालमेव दोषज्ञैः ।
नादेयं वा कौपं पानीयं नैव पानीयम् ॥१५४॥

पर्पटिकायाः पथ्यानि ।

काकाह्वा च पटोलकं सुविशदं पूगीफलञ्चार्द्रकं
वास्तूकं कदलीप्रसूनममलं कूष्माण्डञ्च वातिङ्गनम् ।
सूक्ष्माश्चाथ पुरातनाः कृमिगणैर्हीनास्तथा शालयः
पानं गोपयसः सशर्करमलं पथ्यं बुधैः कीर्तितम् ॥१५५॥

प्रकारान्तरेण पथ्यानि ।

पुराणाः शालयः शाके वृन्ताकं वा पटोलकम् ।
गवां दुग्धन्तु सततं पथ्यमेतच्चतुष्टयम् ॥१५६॥
प्रथमायामवस्थायां दुग्धं सात्म्यं न चेद्भवेत् ।
अतीसारप्रवृत्तिः स्यात्तदा तत्रैव योजयेत् ॥१५७॥
लावतित्तिरिकादीनां रसं तत्र नियोजयेत् ।
अतीसारनिरोधे तु दुग्धमेव प्रदापयेत् ॥१५८॥
शोथे विशेषतो देयं पानीयं लवणन्तथा ।
तृषायां वितरेदल्पं नारिकेलोदकं भिषक् ॥१५९॥
उष्णप्रधानदेशे तु रोगिमङ्गलकाम्यया ।
सशोथेऽपि भिषङ् नीरं जातु नैव विवर्जयेत् ॥१६०॥

जलपाननिषेधो विकारहेतुत्वात् । कौपं कूपभवम्, नादेयं नदीजातम् ।
काकाह्वा काकमाची, वातिङ्गनं वृन्ताकम् ॥१५४-१५५॥

रसपर्पटिकाया अपथ्यानि ।

नाम्लं स्नानं शिशिरसलिलैर्नापि वातादिसेवां
कोपं चिन्तामहितमतुलं नैव सेवेत चोष्णम् ।
तिक्तं निम्बादिकमिह गुडानूपमांसादिकञ्च
स्त्रीणां सम्भाषणमपि बुधैर्नैव कार्यं कदाचित् ॥१६१॥

अथ रससिन्दूरस्य निर्माणप्रकारः ।

तोलकाष्टकमितं रसेश्वरं तन्मितञ्च विमलं बलिं हरेत् ।
खल्वके खलु विमर्द्य कज्जलीं भावयेदथ वटाङ्कुराम्बुभिः ॥१६२॥
मषीपात्रसमाकारां सुकृष्णां काचकूपिकाम् ।
सतूलकुट्टितमृदा लेपयेत् खलु यत्नतः ॥१६३॥
स्थापयेत्कज्जलीं काचकुप्यां ततो यत्नतः पाचयेद्वालुकायन्त्रगाम् ।
अग्निवृद्धिक्रमैर्जीर्णगन्धे रसे रोधयेद्युक्तितः काचकूपीमुखम् ॥१६४॥
वालुकायन्त्रके काचकूपीमुखात् रोचनासन्निभो नैति धूमो यदा ।
सूतपाकक्रियाज्ञानदक्षैर्बुधैर्वेदितव्यस्तदा जीर्णगन्धो रसः ॥१६५॥
निवेश्य कुप्यां खटिकापिधानं जलेन सम्पेषितया प्रकामम् ।
प्रलेपयेद्वै गुडचूर्णपिष्ट्या ततः पचेद्यामयुगं रसज्ञः ॥१६६॥
अवबुध्य तदङ्गशीततां खलु बालारुणसूर्यसन्निभम् ।
गलदेशविलग्नमुज्ज्वलं रससिन्दूरमिहाहरेद् बुधः ॥१६७॥

रससिन्दूरस्य निर्माणप्रकारः ।
[ गीतिका ]

वसुतोलकप्रमाणं विमलीकृतं रसेशम् ।
विनिधाय खल्वमध्ये रससंमितञ्च गन्धम् ॥१६८॥
दिवसद्वयं प्रयत्नादिह पेषयेद्विधिज्ञः ।
नवनीलनीरदाभां खलु कज्जलीं विदध्यात् ॥१६९॥
अथ भावयेद्विधानात्तु वटाङ्कुरोत्थवारा ।
लघुशाल्मलीशिफोत्थैः सलिलैस्तु वा त्रिवारम् ॥१७०॥

अतीसारनिरोधे अतीसारे निवृत्ते सति ॥१५६-१६१॥

अथ रससिन्दूरनिर्माणप्रकारः—रसः ८ तो०, गन्धकः ८ तोलकाः, कज्जलीकृत्य वटाङ्कुरजलैर्भावयेत् । रोचनासन्निभः पीतवर्ण इत्यर्थः । अयञ्च बहिर्धूमजारणप्रकारः । अन्तर्धूमनिर्माणप्रकारोपयोगि वालुकायन्त्रन्तु पूर्वमवोचाम, तेन रससिन्दूरस्य तलस्थतापि भवति ॥१६२-१६७॥

प्रकारान्तरेण रससिन्दूरनिर्माणं शिष्यमतिवैशद्यार्थम् । मलिनामिति कृष्णां नतु मलयुताम् । विधानविज्ञः पीतधूमाद्यालोकननिपुणतयेत्यर्थः ॥

मसिधानकोपमाङ्गीं मलिनां तु काचकूपीम् ।
जलतूलमृत्तिकाभिः परिलेपयेत्रिकामम् ॥१७१॥
विनिधाय तां तु कूप्यामथ वालुकाख्ययन्त्रे ।
क्रमवृद्धवह्नियोगाद्विपचेद्रसं रसज्ञः ॥१७२॥
मृदुवह्निना च पूर्वं विबुधो द्वियाममात्रम् ।
विधिना विधानविज्ञः खलु जारयेत्तु गन्धम् ॥१७३॥
अवलोक्य जीर्णगन्धं रसपाकविद्रसेशम् ।
पिदधीत काचकूपीवदनं पिधानकेन ॥१७४॥
गुडचूर्णवारिपिष्टया सुविधाय वक्त्ररोधम् ।
अथ तीव्रवह्नियोगाद्विपचेद् द्वियाममात्रम् ॥१७५॥
स्वत एव शीतलाङ्गीं तु विभिद्य काचकूपीम् ।
अरुणोत्पलप्रकाशं रसमाहरेद्रसज्ञः ॥१७६॥

तलस्थरससिन्दूरस्य निर्माणप्रकारः ।

रसगन्धौ समौ कृत्वा तयोः कुर्याच्च कज्जलीम् ।
तां क्षिपेत्काचकूप्यन्तर्मुखे मुद्रां च दापयेत् ॥१७७॥
विस्तारे च तथायामे निम्नतायां भिषग्वरः ।
हस्तैकप्रमितं गर्तं कृत्वा कूपीं तु विन्यसेत् ॥१७८॥
चतुरङ्गुलमुत्सेधे वालुकाभिः प्रपूरयेत् ।
स्याच्च शिष्टः कूपिकायाः कायस्तद्वदनावृतः ॥१७९॥
वन्योपलैस्तु तद्गर्तं पूरयित्वा पुटेत्खलु ।
स्वाङ्गशीतां कूपिकाञ्च तस्मादपहरेद्भिषक् ॥१८०॥
तलस्थं रससिन्दूरं शोणवर्णं प्रजायते ।
नाम्नाधःसैकतं यन्त्रं खल्वेतत्परिकीर्तितम् ॥१८१॥
नरेन्द्रनाथमित्राख्यैरयं पन्था निदर्शितः ।
अनुभूतश्च सुगमः प्रकारः सम्प्रकीर्तितः ॥१८२॥

अथ अर्द्धगन्धकजीर्णं रससिन्दूरम् ।

तोलकाष्टकमितो रसेश्वरः कर्षकद्वयमितश्च गन्धकः ।
नव्यसार इह कर्षसंमितः पेषयेदथ च लुङ्गवारिभिः ॥१८३॥
कूपिकागतमथ प्रवुद्धधीः सम्पचेत् सिकतयन्त्रके भिषक् ।

अनावृत इति वालुकाभिः । इष्टकर्मणा वैद्येनायं विधिः सम्पाद्यः । चतुरङ्गुलमित्युपलक्षणं तेन कज्जलीपूर्णं भाग यावद्वालुका देया । स्पष्टमन्यत् ॥१७७-१८२॥

शास्त्रवित्खलु विभिद्य कूपिकां हिङ्गुलाभमिह सूतमाहरेत् ॥१८४॥

अथ समानगन्धकजीर्णं रससिन्दूरम्।

पामारिं खलु निर्मलं पलमितं तत्तुल्यमानं रसं
तत्पादप्रमितं नृसारममलं दत्वाऽथ सम्पेषयेत्।
कूपीमध्यगतं विधाय सिकतायन्त्रे पचेद्युक्तितः
राजीवोपममूर्ध्वभागगरसं कूपीं विभिद्याहरेत् ॥१८५॥

अथ द्विगुणगन्धकजीर्णं रससिन्दूरम्।

पामारिं विमलं पलद्वयमितं सूतं पलैकोन्मितं
सम्मर्द्याथ विभावयेद्धि कुसुमैः रक्ताभकार्पासजैः।
कूपीमध्यगतं पचेच्च सिकतायन्त्रे त्वहोरात्रकम्
राजीवोपममूर्ध्वभागनिचितं सिन्दूरकञ्चाहरेत् ॥१८६॥

अथ त्रिगुणादिगन्धकजीर्णस्य रससिन्दूरस्य विधानम्।

अनेनैव विधानेन गन्धकं वर्द्धयन् क्रमात्।
रसकर्मविशेषज्ञो रससिन्दूरमुद्धरेत् ॥१८७॥
जीर्णगन्धे रसे जाते क्रमागतदिनक्रमैः।
यामद्वयं ततः प्राज्ञै रसपाको विधीयते ॥१८८॥

अथ षड्गुणगन्धकजीर्णं रससिन्दूरम्।

पामारिर्विमलोऽङ्कसङ्ख्यकपलः सूतस्य चैकं पलं
सम्पेष्याथ विभावयेद् बुधवरो यामं कुमारीरसैः।
कूपीमध्यगतं विधाय सिकतायन्त्रे ततः सम्पचेत्
गाढं वासरसप्तकञ्च विधिना सिन्दूरकञ्चाहरेत् ॥१८९॥

अथ रससिन्दूरस्य गुणाः।

प्रमेहकरिकेशरी प्रबलशूलकालानलो
भगन्दरहरः परं खलु महाज्वरेभाङ्कुशः।

अर्धगन्धजीर्णं रससिन्दूरम्—नव्यसारः नवसादरः। शास्त्रवित् पूर्वोक्तपाकक्रमज्ञाता ॥१८३-१८४॥

पामारिः गन्धकः। नृसारः नवसादरः ॥१८५-१८६॥

क्रमागतदिनक्रमैरिति यावन्ति दिनानि गन्धको जीर्णः स्यात् तावन्ति दिनानि तस्य जारणेत्यर्थः। गन्धकजरणोत्तरं कूपीमुखमुद्रां विधाय यामद्वयमेव तीव्राग्निदानेन रसपाकः ॥१८७-१८८॥

अङ्कसंख्यकपल इति गन्धस्य षट्पलानि। षड्गुणगन्धस्य सप्तभिर्दिनैः पाकः ॥१८९॥

समस्तगदतस्करः सकलशोषसंशोषको
रसोऽतुलविलासदो विजयते हि सिन्दूरकः ॥१६०॥
अलं मलयजानिलैः किमिह भेषजानां कुलैः
वृथैव घनशीतलैः सरसचन्दनालेपनैः ।
सखे मदनजीवनं रतिविलासलीलागृहं
प्रकामचलकान्तिदं भज रसं ससिन्दूरकम् ॥१६१॥
गुल्मप्लीहहरो रतिप्रियकरो यक्ष्मेभपञ्चाननः
पाण्डुस्थौल्यविधूननो व्रणहरो रौक्ष्याग्निमान्द्यापहः ।
कुष्ठव्याधिनिषूदनो रतिकलाप्रौढाङ्गनारञ्जनः
कान्तामस्तकभूषणो रसपतिर्भूयात्सदा श्रेयसे ॥१६२॥
नियमयति रसेशः पञ्चवाताश्रितान्तं
प्रसरति धमनीनां स्वक्रिया वातसाम्ये ।
द्रढयति भृशमादौ जालकं नाडिकानां
रमयति च ततोऽसौ मानसं सेवकानाम् ॥१६३॥
वहिर्गमनशीला ये स्वेदविण्मूत्रमारुताः ।
निरायासं विनिर्यान्ति रसस्यास्य निषेवणात् ॥१६४॥
पित्तं निःसारयत्येष न रेचयति कर्हिचित् ।
न च पित्ताशयं कोष्ठं विक्षोभयति भक्षितः ॥१६५॥
स्फीततां दन्तवेष्टानां मुखपाकं क्षतादिकम् ।
लालास्रावं प्रदाहञ्च न सूते चिरसेवितः ॥१६६॥
विकारनीदृशानन्यान् दारुणान् पारदोत्थितान् ।
न जातु प्रकरोत्येष रसः सिन्दूरसंज्ञकः ॥१६७॥

अथास्य गुणाः—महाज्वरेभाङ्कुश इति महाज्वर एव हस्ती तस्मै अङ्कुश इव । अलं मलयजानिलैरित्यनेनास्य कामोद्दीपकत्वं सूच्यते । कान्तामस्तकभूषणं सिन्दूरम् । नियमयतीति—रससिन्दूरं साधुसेवितं नितान्तं शारीरान् पञ्चवातानुद्रिक्तान् नियमयति प्रकृतावानयति । ततश्च वातसाम्ये सति धमनीनां स्वक्रिया रुधिरधमनरूपा जायमाना प्रसरति । अपि चायमादौ संज्ञावहानां चेष्टावहानाञ्च नाडिकानां जालकं तत्तत्कर्मक्षमतासम्पादनद्वारा द्रढयति । ततोऽसौ स्वसेवकानां मानसं रमयति इति शरीरप्रक्रियापादनद्वारा साधीयसी कर्मण्यता भवत्येनेनेत्याशयः । तथाचायं स्वाशयादधिकं पित्तं निःसारयति न च रेचयति, पित्ताशय कोष्ठञ्चामपक्वाशयरूपं न विक्षोभयति । तथा रसकर्पूरादिवत् दन्तवेष्टानां स्फीतता शोथं मुखपाकं तालुक्षतादिकं लालास्रावं प्रदाहञ्च चिरसेवितोऽपि न जनयति अन्यानपि पारदोत्थितान् दारुणान् भ्रममोहादीन् विकारान् रससिन्दूरो न

दोषत्रितयमत्यर्थप्रवृद्धं शमयत्यलम् ।
प्रकृतिं गमयत्यत्र करणानि विशेषतः ॥१९८॥

अथ सहपानस्य लक्षणम् ।

यद्योगेन रसादीनां विभक्ताः परमाणवः ।
द्रुतमङ्गेषु सर्पन्ति सहपानं तदुच्यते ॥१९९॥

अथ अनुपानस्य लक्षणम् ।

तत्तद्रोगघ्नभैषज्यं भेषजस्यानुपीयते ।
यच्च साहाय्यकारि स्यादनुपानं तदुच्यते ॥२००॥
सहपानानुपानाभ्यां भेषजं परिबृंहयेत् ।
येन रोगहरा शक्तिर्भवेद् गुणवती सदा ॥२०१॥
अलाभेऽत्यर्थमेवात्र सहपानानुपानयोः ।
मधुना वा जलेनैव भैषज्यं वितरेद् भिषक् ॥२०२॥

अथ रससिन्दूरस्य आमयिकः प्रयोगः ।

जातपुष्पतुलसीदलद्रवैः शृङ्गवेरजरसेन वा सदा ।
नागिनीस्वरसकेन वा भिषक् योजयेद्रसमिमं नवज्वरे ॥२०३॥
छिन्नोद्भवापर्पटधान्यकानां क्वाथेन तुर्यांशसमाहितेन ।
कान्ताललाटाभरणं रसेशं जीर्णज्वरे वैद्यवरः प्रदद्यात् ॥२०४॥
मेहे गुडूचीस्वरसेन दद्यात् योषित्प्रियामूलजतोयकैर्वा ।
असृग्दरेऽशोकबलादिकानां क्वाथेन सिन्दूररसः प्रयोज्यः ॥२०५॥

करोतीति सर्वथा भिरापदमस्य सेवनमित्याशयः। रोगापनयनावशिष्टोऽस्याप्यंशो-धिकः स्वेदादिद्वारा स्वतः शरीराद् बहिर्विनिर्यातीति नायं रसकर्पूरवत् पारद-निःसारकौषधान्तरापेक्षः इति प्राचामभिप्रायः। सचायं रससिन्दूरः स्वप्रमाणा-तिरिक्तं दोषत्रयं शमयति। तथा सर्वाणीन्द्रियाणि स्वां स्वां प्रकृतिं स्वस्वविषयाणां यथावद्ग्रहणरूपां गमयति इति ॥१९०-१९८॥

प्रसङ्गात् सहपानानुपानलक्षणम्—सर्पन्ति व्याप्नुवन्ति। सहपानं यथा मधुप्रभृति ॥१९९॥

भेषजस्य अनु पश्चात्, साहाय्यकारि इति भेषजस्यैव । अत्यर्थं यथा शक्ति यत्ने कृतेऽपि चेदलाभः सहपानानुपानयोस्तर्हि मधुना जलेनैव वा भैषज्यं वितरेत् ॥२००-२०२॥

अथ प्रसङ्गात् रोगयोग्यः प्रयोगोऽस्य वर्ण्यते जातपुष्पेति—पुष्पितवृक्षस्य पत्राणामापूर्णवीर्यत्वात् जातपुष्पायाः तुलस्याः पत्ररसो ग्राह्यः, नागिनी ताम्बूलवल्ली। छिन्नोद्भवा गुडूची, कान्ताललाटाभरणं रससिन्दूरम् । योषित्प्रिया हरिद्रा। बालाभया क्षुद्रहरीतकी । दार्वी दारुहरिद्रा । शिलाजं शिलाजतु। पुरुहूतफलं इन्द्रयवः, चन्द्रः कर्पूरम्, चातुर्जातकं त्वगेलापत्रकेसरम्। तमस्तति-

वालाभयायाः क्राथेन वुधोऽर्शसि नियोजयेत् ।
वचारसेन तच्चूर्णं वापस्मारे प्रयुज्यते ॥२०६॥
कूष्माण्डस्वरसेनेह दद्यादुन्मादसंज्ञके ।
श्वासे विभीतकक्राथैर्वासायाः स्वरसेन वा ॥२०७॥
कामलायां वुधो दद्याद् दार्वीक्राथेन संयुतम् ।
पाण्डुरोगे प्रयुञ्जीत रसज्ञो लोहभस्मना ॥२०८॥
सितोपला च सूक्ष्मैला शिलाजञ्च समं समम् ।
एतत्त्रितयचूर्णेन मूत्रकृच्छ्रकुलान्तकः ॥२०९॥
अजीर्णे मधुना वापि मुस्तकक्राथजैर्द्रवैः ।
शूले वैद्यवरो दद्यात् त्रिफलाक्राथसंयुतम् ॥२१०॥
कणाचूर्णयुतः सूतो मधुना रक्तिकोन्मितः ।
सेवितो नाशयेन्मूर्च्छां पथ्यं तोयावगाहनम् ॥२११॥
वमने वृहदेलायाः क्राथेन मधुनापि वा ।
शोथे पुनर्नवायास्तु कषायेण प्रयोजयेत् ॥२१२॥
गुडूचीनिम्बखदिरपुरुहूतफलद्रवैः ।
क्राथैर्वा संयुतश्चन्द्रचातुर्जातकमिश्रितः ॥२१३॥
रसः सिन्दूरसंज्ञोऽयं प्रयुक्तो रक्तिकोन्मितः ।
विस्फोटं दारुणं हन्याद्यथा सूर्यस्तमस्ततिम् ॥२१४॥
काकोलीचूर्णसंयुक्तं नारिकेलोत्थतैलयुग् ।
सेवितं रससिन्दूरं हरेद्रोगं जरायुजम् ॥२१५॥
मृतवङ्गसमायुक्तो रसः सिन्दूरसंज्ञकः ।
क्षौद्रेण भक्षितो हन्ति प्रमेहं त्वतिकालजम् ॥२१६॥
सक्षौद्रैस्त्र्यूषणोपेतैर्धान्यजीरकनागरैः ।
सेवितो रससिन्दूरो वान्तिं जयति दारुणाम् ॥२१७॥
ब्राह्मीवचाशङ्खपुष्पीकुष्ठैलाक्राथसंयुतम् ।
रक्तिकाद्वितयं खादेदपस्मारहरं परम् ॥२१८॥

धात्रीवयस्याकलिपादपानां क्राथेन वा जन्तुरिपोः समेतः ।
नित्यं तु सिन्दूररसो रसज्ञैः भगन्दरेऽयं विनियोजनीयः ॥२१९॥

मन्धकारपटलानि । वयस्या हरीतकी, कलिपादपः विभीतकः, जन्तुरिपुः विडङ्गः । मिशिः शतपुष्पा । नीरं वालकम् । रसा रास्ना । अब्दं मुस्ता । गुडूच्यादीनां मिश्रितानां मानं २ तो०, जल ३२ तो०, शेषः क्राथः ८ तो० इति परिभाषा । विदार्य्यादिगणः सुश्रुतनिर्दिष्टः । गगनं अभ्रकम् । देवपुष्पं लवङ्गम् । जरणं जीरकम्, धाने-

मिशिबालाभयाक्वाथैर्यवानीचूर्णकेन वा।
बिडाख्यलवणेनैव गुल्मे वा विनियोजयेत् ॥२२०॥
क्वाथेन दशमूलस्य शिरःशूले प्रयोजयेत्।
व्रणेषु बृहतीनीरगुडूचीविश्वभेषजैः ॥२२१॥
गुडूचिकाशतावरीकणारसाभयान्वितैः।
वचाब्दविश्वभेषजैः कषायकं प्रकल्पयेत् ॥२२२॥
रसोऽत्र तेन संयुतो यथाविधि प्रयोजितः।
निहन्ति वै चिरोत्थितं प्रकाममामवातकम् ॥२२३॥
शाल्मलीमूलचूर्णेन विदार्यादिगणेन वा।
प्रयुक्तो रससिन्दूरो वाजीकरण उत्तमः ॥२२४॥
भस्मना गगनस्येह काञ्चनेन मृतेन वा।
उभाभ्यामेव वा युक्तो धातुवृद्धिकरो मतः ॥२२५॥
जातीफलं देवपुष्पं कर्पूरञ्चाहिफेनकम्।
एषां चूर्णेन सहितो स्वप्नमेहहरो मतः ॥२२६॥
बलाक्वथिततोयेन सिन्दूररससेवनात्।
विनश्यति चिरोद्भूतं शीर्षकम्पनमुद्धतम् ॥२२७॥
जरणत्र्यूषणक्षुद्रापथ्याधानेयकैः समम्।
निषेवितोऽयं सिन्दूरो वान्तिशान्तिकरो मतः ॥२२८॥
हिङ्गुदीप्यकशुण्ठीभिश्चव्यधान्यकरुच्यकैः।
प्रयुक्तो रससिन्दूरो द्रुतं पानात्ययं जयेत् ॥२२९॥
यव्यटङ्कणसंयुक्तः शीलितो दिनसप्तकम्।
रसः सिन्दूरसंज्ञोऽयं पक्तिशूलं विनाशयेत् ॥२३०॥
वासाकषायसहितो लोध्रक्वाथान्वितोऽथवा।
शीलितो रससिन्दूरो रक्तप्रदरमुद्धरेत् ॥२३१॥
वराक्वाथेन वा गेहनीरेण तु ससैन्धवम्।
शीलितो रससिन्दूरो बस्तिकुण्डलमुद्धरेत् ॥२३२॥
नवज्वरे प्रतिश्याये शिशूनां सुरसारसैः।
कासे श्वासे च वितरेत् कण्टकारीरसेन च ॥२३३॥

यकं धान्यकम्। दीप्यकं यवानी, रुच्यकं सौवर्चलम्। पानात्ययं मदात्ययम्। यव्यः यवक्षारः, पक्तिशूलं परिणामशूलम्। गेहनीरं काञ्जिकम्। बस्तिकुण्डलं तदाख्यं मूत्राशयरोगम्। सुरसा तुलसी। उपलक्षणमात्रञ्चैतत् वस्तुतस्तु सहपाना-

परिच्छेदो न विज्ञेयः सहपानानुपानयोः ।
प्रकल्पयेद् यथारोगं सिद्धहस्तो भिषग्वरः ॥२३४॥

अथ रससिन्दूरस्य मात्रा ।

एकहायनदेशीयं बालकं वीक्ष्य रोगिणम् ।
गुञ्जायाः षोडशो भागस्तत्र मात्रा प्रकल्प्यते ॥२३५॥
तथा द्विवर्षदेशीये सप्तमो भाग इष्यते ।
रसहायनदेशीये तृतीयं भागमाहरेत् ॥२३६॥
द्वादशाब्दकदेशीये गुञ्जार्धं परिकल्पयेत् ।
गुञ्जामात्रमिता चास्य पूर्णमात्रा प्रशस्यते ॥२३७॥

अथ मकरध्वजस्य निर्माणप्रकारः ।

स्वर्णं तोलकसंमितं मृदुदलं युक्त्या विशुद्धीकृतं
स्वर्णादष्टगुणोन्मितं रसवरं जीर्णाच्छसौगन्धिकम् ।
संस्कारैर्बहुभिर्विशोधितमथो सम्मेल्य सम्पेषयेत्
गन्धं षोडशतोलकं सुविमलं कुर्यात्ततः कज्जलीम् ॥२३८॥
शोणैः कार्पासपुष्पैरथ मृदुविशदाङ्कोटमूलत्वचाद्भिः
कन्यानीरैश्च घस्रं रसविधिचतुरो भावयेदामयज्ञः ।
सम्यक्पिष्टं सुशुष्कं त्वपि च रसवरं काचकुप्यां निदध्यात्
बिल्वादीनाञ्च काष्ठैः सलिलविरहितैस्तापयेच्चाथ विद्वान् ॥२३९॥
पूर्वं यामद्वयं प्राज्ञः पचेन्मृद्वग्निना रसम् ।
मध्यमानलयोगाच्च ततो यामद्वयं पचेत् ॥२४०॥
प्रखरेणानलेनाथ पचेद्यामद्वयं भिषक् ।
अवशिष्टद्वियामञ्च पुनस्तीव्राग्निना पचेत् ॥२४१॥
यन्त्रे सिकतसंज्ञे च स्वाङ्गशीतमथोद्धरेत् ।
काचकूपीं विभिद्याथ सहकारसमप्रभम् ॥२४२॥

नुपानयोर्नास्ति नियमः, किन्तु यथारोगं देशकालव्यवस्थानुसारं सिद्धहस्तः क्रियाकुशलो वैद्यः कल्पयेदनुपानसहपाने ॥२०३-२३४॥

अथास्य मात्रानिरूपणम्—एकहायनदेशीयमिति प्रकारे देशीयर् प्रत्ययः। एकवर्षकल्पमित्यर्थः। रसहायनदेशीये षड्वर्षवयस्के, अस्य च तरुणपुरुषयोग्या पूर्णमात्रा गुञ्जैकमिता ॥२३५-२३७॥

अथ मकरध्वजनिर्माणप्रकारः स्वर्णमिति—मृदुदलं अत्यन्तमृदुदलमिति भावः यथा पारदे सम्यङ्मेलनं स्यात् तथा पक्वं सत् स्थूलकणं नावशिष्येत इत्यभिप्रायः। युक्त्या शोधनं स्वर्णप्रकरणे वक्ष्यते। जीर्णाच्छसौगन्धिकं कच्छप यन्त्रादिना जातगन्धकजारणम्। संस्कारैर्बहुभिः पूर्वोक्तैरष्टाभिरधिकैर्वा यथासम्प्र-

भङ्गे रक्तप्रतीकाशं पिष्टे रक्तोत्पलोपमम् ।
सौवर्णं मूर्च्छितं सूतं गृह्णीयाद्भिषजां वरः ॥२४३॥
नानेन जायते यस्मान्मकरध्वजसन्निभः ।
रसज्ञैः ख्यापितस्तस्मान्नाम्नायं मकरध्वजः ॥२४४॥

श्री सिद्धमकरध्वजः ।

पूर्वोक्तनिजमानाच्च कनकं चेच्चतुर्गुणम् ।
निर्दिष्टमानप्रमितौ भवतो रसगन्धकौ ॥२४५॥
पूर्ववद्भावयित्वापि पचेत्सिकतयन्त्रके ।
एवन्तु षड्गुणं गन्धं जारयेत्क्रमशो भिषक् ॥२४६॥
समर्पितो यतश्चायं सिद्धेभ्यः शूलपाणिना ।
ख्यातस्ततोऽयं जगति श्रीसिद्धमकरध्वजः ॥२४७॥

अथास्य गुणाः ।

क्षयक्षयकरः परं प्रबलकासकालानलः
प्रमेहकुलकण्डनः प्रविततान्त्रशोषान्तकः ।
समस्तगदभञ्जनः प्रमदकामिनीरञ्जनः
सदैव मकरध्वजो विजयते रसाधीश्वरः ॥२४८॥

दायम् । शोणैः रक्तैः, घस्रम् दिवसमेकम् । बिल्वादीनाञ्च काष्ठैरिति बिल्वादिकाष्ठग्रहणं समुचिततापदानाय । सलिलविरहितैरिति सुशुष्कैः, अवशिष्टद्वियामं पाकस्तीव्रानलेन, जीर्णगन्धकाचकूपीमुखमुद्रणोत्तरमिति द्योत्यते पुनः शब्देन । सिकतायन्त्रं बालुकायन्त्रं पूर्वोक्तम् । इदञ्च बहिर्धूमजारणप्रकाराभिप्रायेण । अन्तर्धूमजारणायै तु वालुकायन्त्रप्रकारान्तरं पूर्वमवोचाम । अधःसैकतयन्त्रेण तलस्थरससिन्दूरोक्तविधिनापि मकरध्वजः साध्यते । षड्गुणबलिजारणार्थं षड् वारं सप्तवारं वा पाकः कार्यः । प्रतिपुटं गन्धकः सम एव देयः । षड्वारं पुटनेन यदि सम्यक् पाको न स्यात्तदा सप्तमे पाके गन्धकमदत्त्वैव मृदुः पुटो देयः । गन्धकोऽत्र सर्पिर्गन्धिरपि न स्यात् । अनेन विधिना सम्पादितो मकरध्वजः सुवर्णगर्भो भवति । "सहकारसमप्रभं भङ्गे रक्तप्रतीकाश पिष्टे रक्तोत्पलोपमं सौवर्णं मूर्च्छितं सूतम्" इति तस्य लक्षणं ज्ञेयम् । सहकारः आम्रः । मूर्च्छितमिति रसस्य बन्धभेदः पूर्वोक्तलक्षणः । ना अनेन इति छेदः । ना पुरुषः । मकरध्वजसन्निभः कामदेवतुल्यसुन्दरः, इति निरुक्तिः । स्पष्टमन्यत् ॥२३८–२४४॥

अथ श्रीसिद्धमकरध्वजनिर्माणप्रकारः पूर्वोक्तेति—पूर्वोक्तं स्वर्णपरिमाणं स्वर्णं तोलकसम्मितमिति तस्माच्चतुर्गुणम् । अर्थात् स्वर्णं ४ तो० पारदन्तु ८ तो०, गन्धः १६ तो०, पूर्ववद् भावनं पाचनञ्च । एवं षड्गुणगन्धकस्य ४८ तो० मितस्य जारणेन निष्पन्नो मकरध्वजः सिद्धमकरध्वजनाम्ना व्यवह्रियते । मकरध्वजगुणवर्णनं स्पष्टम् ॥२४५–२४८॥

अथ सर्वाङ्गसुन्दरो रसः ।

रसेश्वरः पलमितो गन्धकश्चापि तन्मितः ।
भूधात्रिकाहस्तिशुण्डीद्रवेणाथ निरन्तरम् ॥२४६॥
रसतन्त्रविशेषज्ञः पेषयेद्दिनसप्तकम् ।
संस्थाप्य संपुटे सूतं वालुकायन्त्रगं भृशम् ॥२५०॥
मन्दानलेन सुपचेदहोरात्रं भिषग्वरः ।
जाते पाके स्वाङ्गशीतं सम्पुटं त्ववतारयेत् ॥२५१॥
सम्पुटान्तश्च संलग्नं पीतं भस्म समुद्धरेत् ।
पूर्वाचार्य्यैः कीर्तितोऽयं नाम्ना सर्वाङ्गसुन्दरः ॥२५२॥

अथास्य गुणाः ।

हृदयप्रीतिजननो जठरामयनाशनः ।
बलवर्णप्रदाता च ज्वरद्विरदकेशरी ॥२५३॥
वातव्याधिहरश्चैव जाठराग्निप्रदीपनः ।
शूलद्विपाङ्कुशः शीघ्रं प्रकामं कामवर्द्धनः ॥२५४॥
सहपानादिकञ्चास्य यथारोगं भिषग्वरः ।
रससिन्दूरवच्चित्यं वीक्ष्य दोषं प्रकल्पयेत् ॥२५५॥

इति मूर्च्छनाविज्ञानीयो नाम षष्ठस्तरङ्गः ।

---

## अथ पारदमारणविज्ञानीयः सप्तमस्तरङ्गः ।

सामान्येन मारणस्य लक्षणम् ।

विविधक्रमयोगेन गन्धकाद्यौषधैः सह ।
रसादीनाञ्च धातूनां रोगापनयनक्षमम् ॥१॥
गन्धकादियुतं वापि यदम्बरसुधान्वितम् ।
भस्मत्वापादनं यत्तु मारणं तदिहोच्यते ॥२॥

अथ सर्वाङ्गसुन्दरः (पीतभस्माख्यः)—भूधात्रिका तामलकी । स्पष्टमन्यत् । मात्रादिकं रससिन्दूरवत् ॥२४९-२५५॥

तत्रादौ मारणलक्षणं पूर्वाचार्य्यैरनिर्दिष्टप्रायं नव्यपरिभाषासम्मतमाह विविधेति—विविधक्रमाः प्रकारभेदेन तत्र तत्रोक्ताः, रोगापनयनक्षमं सूक्ष्मतापत्त्या शरीरावयवव्याप्तिद्वारा तत्तद्व्याधिघातसमर्थम् । गन्धकाद्यौषधैरित्यादिना रसभस्मादीनामपि ग्रहणम् । तथाहि—"मारणं सर्वलोहानामुत्तमं रसभस्मना । मध्यमं मूलिभिः प्रोक्तमधमं गन्धकादिभिः ।" अम्बरसुधा विष्णुपदामृतं "औक्सीजन" इत्याख्यम् ॥१-२॥

अथ मृतपारदस्य लक्षणम् ।

निर्धूमस्तेजसा हीनो गौरवेण समन्वितः ।
अङ्गारस्थापितो यश्च न प्रयाति विरूपताम् ॥३॥
न च लाघवमायाति चापल्यं विजहाति च ।
आधिव्याधिहरो यश्च मृतः सूतः स उच्यते ॥४॥

अथ पारदमारणस्य प्रथमः प्रकारः ।

सूतः पलद्वयमितः सुतरां विशुद्धः
स्याद्गन्धकश्च विशदः पलसम्मितोऽत्र ।
द्रावेण मारकगणोक्तमहौषधानां
सम्पेषयेद्दिवसमेकमिहामयज्ञः ॥५॥
मूषापुटे रसवरं विनिधाय युक्त्या
सन्धिं विलिप्य खलु वह्निमृदा च कामम् ।
मूषां निधाय विपचेत् खलु भूधराख्ये
यन्त्रे रसोऽथ नियतं मृतिमेति शीघ्रम् ॥६॥

अथ वह्निमृत्स्नालक्षणम् ।

खटी लवणकिट्टाढ्या महिषीदुग्धमर्दिता ।
वह्नितापसहात्यन्तं वह्निमृत्स्ना प्रकीर्तिता ॥७॥
मूषादीनां सन्धिलेपे वह्निमृत्स्ना प्रशस्यते ।
न गन्तुं क्षमते सूतो निरुद्धो वह्निमृत्स्नया ॥८॥

अथ पारदस्य मारको गणः ।

विष्णुक्रान्ता देवदाली सर्पाक्षी सहदेविका ।
लाक्षा पुनर्नवा सूर्यः सूर्यभक्ता च लाङ्गली ॥९॥
चाण्डालिनीकन्दसंज्ञः काकमाची विदारिका ।
बला समन्तदुग्धा च जयन्ती हस्तिशुण्डिका ॥१०॥
रम्भा कोषातकी शुण्ठी शशिलेखा निशाद्वयम् ।
काकजङ्घा काकनासा सुरसा बहुपुत्रिका ॥११॥

अथ मृतपारदलक्षणं निर्धूम इति—तेजसा हीनः चाकचक्यरहितः॥३-४॥

अथ मारणप्रकारः प्रथमः—सुतरां अत्यर्थम्, मारकगणो वक्ष्यमाणः । द्रवेण स्वरसेन क्वाथेन वा, नियतं अवश्यम् ॥५-६॥

वह्निमृत्स्नालक्षण खटीति—खटी तदाख्या गौरमृत्स्ना, लवणं सैन्धवं, किट्टं मण्डूरम् । मर्दनं श्लक्ष्णतापर्यन्तम् । शिष्टं सुगमम् ॥७-८॥

अथ पारदमारकगणः—सूर्यः अर्कः, सूर्यभक्ता "हुरहुर" इति ख्याता, समन्तदुग्धा सुधा, रम्भा कदली, शशिलेखा बाकुची, बहुपुत्रिका शतावरी, नीपं

आखुकर्णी ब्रह्मदण्डी दूर्वा च शरपुङ्खिका ।
चक्रमर्दो नीपकणा वर्षाभूः कटुतुम्बिका ॥१२॥
इन्द्रवारुणिका हंसपादी च शङ्खपुष्पिका ।
जाती मूर्व्वा च लज्जालुः सर्पपस्तिलपर्णिका ॥१३॥
वन्ध्याकर्कोटकी धूर्तो गुडूची गिरिकर्णिका ।
प्रसारणी भृङ्गराजो रामठं सोमवल्लरी ॥१४॥
शोभाञ्जनः पलाशश्च मत्स्याक्षी यमाचिञ्चिका ।
मण्डूकपर्णी ज्वलनः शेफाली मुसली वचा ॥१५॥
पूर्वाचार्यैः कीर्तितोऽयं रसस्य मारको गणः ।
तत्तद्विधिप्रभेदेन सूतमारणसाधकः ॥१६॥

अथ पारदस्य द्वितीयो मारणप्रकारः ।

विष्णुकान्तां देवदालीमारनालेन मर्दयेत् ।
तयोरेव द्रवेणाथ भावयेत् सप्तधा रसम् ॥१७॥
मूर्च्छितञ्च सुविज्ञाय पारदं खर्परे न्यसेत् ।
दीप्तानलायां चुल्ल्याञ्च स्थापयेदथ खर्परम् ॥१८॥
वारं वारं तयोस्तत्र द्रवं शीघ्रं विनिक्षिपेत् ।
एवं रसो दिनैकेन समुपैति हि पञ्चताम् ॥१९॥

अथ पारदमारणस्य तृतीयः प्रकारः ।

अङ्कोलमूलसलिलैः सूतं खल्वे विमर्दयेत् ।
सूतमानोन्मितं गन्धं शुद्धं तत्र विनिक्षिपेत् ॥२०॥
संस्थाप्य सूतं मूषायां विदध्याद् वह्निमृत्स्नया ।
सन्धिलेपं, ततः प्राज्ञः प्रदीप्तोपलपावके ॥२१॥
यन्त्रे भूधरसंज्ञे च पचेद्यामचतुष्टयम् ।
एवं रसेश्वरः शीघ्रं नियतं याति भस्मताम् ॥२२॥

अथ पारदमारणस्य चतुर्थः प्रकारः ।

अपामार्गस्य बीजानि नूतनानि विचूर्णयेत् ।

कदम्बः, कणा पिप्पली, वर्षाभूः पुनर्नवा, तिलपर्णी तिलसदृशपत्रा, गिरिकर्णिका श्वेतापराजिता, रामठं हिङ्गु, ज्वलनः चित्रकः, शेफाली निर्गुण्डी ॥६-१६॥

शीघ्रं क्षेपः पारदोड्डयनरोधाय । शिष्टं सुगमम् ॥१७-१९॥

पूर्वं कज्जली कार्या पश्चादङ्कोलमूलसलिलैर्मर्दनम् ॥२०-२२॥

कल्कीकृत्य पुनस्तेन मूषायुग्मं प्रकल्पयेत् ॥२३॥
अरिमेदः कृमिरिपुः द्रोणपुष्पीसुमं समम् ।
सञ्चूर्ण्य चूर्णमेतेषां मूषामध्ये निधापयेत् ॥२४॥
काकोदुम्बरिकादुग्धे सूतं यत्नेन मर्दितम् ।
चूर्णोपरि तु संस्थाप्य पुनश्चूर्णं प्रदापयेत् ॥२५॥
प्रलिप्य रसगोलञ्च मूषायां स्थापयेत्ततः ।
सन्धिलेपं ततः कुर्यादवश्यं वह्निमृत्स्नया ॥२६॥
संशोष्य चातपे मूषां पुटेद् गजपुटे भिषक् ।
एकेनैव पुटेनैवं रसो यातीह भस्मताम् ॥२७॥

पारदमारणस्य पञ्चमः प्रकारः ।

भुजङ्गवल्लरीरसै रसेश्वरं विमर्दयेत् ।
ततश्च कर्कटीभवं सुपेषयेत्तु कन्दकम् ॥२८॥
विधाय कल्कमुत्तमं क्षिपेद्रसं तदन्तरे ।
निधाय सम्पुटे पुटेत्पुटे तु वारणाह्वये ॥२९॥

अथ पारदस्य (अनुभूतः) षष्ठो मारणप्रकारः ।

काकोदुम्बरिकादुग्धैर्भावयेद्रामठं भिषक् ।
तत्कल्केन पुनः प्राज्ञो मूषायुग्मं प्रकल्पयेत् ॥३०॥
तद्दुग्धमर्दितञ्चैव सूतं तत्र विनिक्षिपेत् ।
मुद्रां कृत्वा सूतगोलं मृण्मूषायां निधापयेत् ॥३१॥
सन्धिं विलेपयेद्वह्निमृत्स्नया चाथ शोषयेत् ।
पचेल्लघुपुटे सूतं स्वाङ्गशीतं समुद्धरेत् ॥३२॥
मूषासन्धिं विलिख्याथ कालाञ्जनसमप्रभम् ।
लाघवादिगुणोपेतं गृह्णीयाद् भस्मसूतकम् ॥३३॥

अथ पारदमारणस्य (अनुभूतः) सप्तमः प्रकारः ।

सूतं हिङ्गुलसम्भवं पलमितं तुल्यं बलिञ्चाहरेद्

अरिमेदो विट्खदिरः, कृमिरिपुः विडङ्गः । अत्र च सर्वत्र रसभस्मनिर्माणे यथायोग्यं मारकौषधक्षेपणमातन्वते रसविदः ॥२३-२७॥

भुजङ्गवल्लरी ताम्बूलवल्ली, कर्कटी वन्ध्याकर्कोटी, यदाहुः—"नागवल्लीरसैर्घृष्टः कर्कोटीकन्दमध्यगः । मृण्मूषासम्पुटे पक्वः सूतो यात्येव भस्मताम्" इति ॥२८-२९॥

तद्दुग्धमर्दितम् काकोदुम्बरिकादुग्धमर्दितम्, उक्तं हि—काकोदुम्बरदुग्धैर्यैर्लाद्विभावितो हिङ्गु । मर्दनपुटनविधानात्सूतं भस्मीकरोत्येव ।" इति । लाघवादिगुणोपेतं अगुरुरतेजाः वह्निस्थायी स्थिरोऽधूमः इत्युक्तगुणमिति यावत् ॥३०-३३॥

युक्त्या कज्जलिकां विधाय वटजक्षीरैस्ततः पेषयेत् ।
मृद्भाण्डे विनिधाय तत्र नवभूदण्डेन संचालितो
मृद्वग्नौ दिनपाचितो रसवरो याति ध्रुवं भस्मताम् ॥३४॥

रसेश्वरं सुमसृणं कृष्णाञ्जनसमप्रभम् ।
निर्धूमादिगुणोपेतं गृह्णीयाद् भस्मतां गतम् ॥३५॥

अथ मृतपारदस्य गुणाः ।

ग्रहणीगजकर्षणदक्षतरं त्वतिसारहरं क्षयशोषहरम् ।
जठरानलमान्द्यविनाशकरं परिशीलय सूतभवं भसितम् ॥३६॥
प्रमदामदमर्दनगर्वधरं बलवीर्यविलाससमृद्धिकरम् ।
निजसेवकरक्षणदक्षतरं परिशीलय सूतभवं भसितम् ॥३७॥

क्षयं क्षीणक्षेत्रे क्षपयति च दीप्तिं वितनुते
स्मृतिं सूते कामं द्रढयति च देहं द्रुततरम् ।
जरां वर्षैकेन त्वपनयति संशीलितमिदं
गुणान् को वा वक्तुं प्रभवति रसेशस्य नियतम् ॥३८॥

रतिकेलिकलां भृशमुज्ज्वलयेल्ललितं ललनाकुलमाकुलयेत् ।
हृदि चोत्कलिकां कलयेत् कलितो रतिरागवतामयमेव सखा ॥३९॥

शृङ्गारस्य हि सर्वस्वं सुरतस्याधिदैवतम् ।
वशीकरणमन्त्रश्च प्रमदानां मृतो रसः ॥४०॥

अथ मृतसूतस्य आमयिकः प्रयोगः ।

पांशुमुस्तकषायेण सुरसाक्कथितेन वा ।
कणाक्काथेन वा युक्तो मृतः सूतो हरेज्ज्वरम् ॥४१॥

तुल्यं पलमितमेव, बलिं गन्धकम्, नवभूर्वटपादपः तस्यार्द्रदण्डेनेति भावः । अत्रादौ अत्यन्तमन्दाग्निना कार्पासशुष्कदण्डादिकाष्ठैर्दाहो विधेयो-ऽन्यथा पारदनाश इत्यवधेयम् ॥३४-३५॥

अथ गुणाः—भसितं भस्म, क्षीणं क्षेत्रं शरीरं यत्र एवम्भूतं क्षयं तदाख्यरोगं क्षपयतीति सम्बन्धः । उत्कलिकां उत्कण्ठां कामविषयाम् । स्पष्टमन्यत् ॥३६-४०॥

"रसायनं त्रिदोषघ्नो योगवाह्यतिशुक्रलः । भस्मसूतोऽखिलातङ्कनाशनस्त्वनुपानतः" इति हि प्राञ्च आहुः, तस्मादनुपानविशेषानुदाहरति दिङ्मात्रं पांशुरिति-

पांशुः पर्पटम्, सुरसा तुलसी, सिंहिका बृहती, क्षीरिवृक्षा न्यग्रोधोदुम्बराश्वत्थप्लक्ष-वेतसपादपाः, पञ्चपल्लवं आम्रजम्बूकपित्थबीजपूरबिल्वानां पत्राणि, रसालः आम्रः, कणा पिप्पली, जलं वालकम्, वैदेही पिप्पली, शम्बूकः क्षुद्रशङ्खः तस्य क्षारः भस्मेति यावत्, कटुः कटुकी, तिक्तकं पटोलं निम्बो वा, कटुतिक्तकं वा भूनिम्बः, विश्वं शुण्ठी,

लाक्षया वा हरीतक्या तथा सिंहिकयान्वितः ।
माक्षिकेणापि वा युक्तो रक्तपित्तं व्यपोहति ॥४२॥
व्याघ्रीक्काथेन कणया चापि कासकुलान्तकः ।
वरानिशाकषायेण पाण्डुरोगं विनाशयेत् ॥४३॥
क्षीरिवृक्षकषायेण पञ्चपल्लवजेन वा ।
क्काथेन शृतशीतेन हन्त्यतीसारमुद्धतम् ॥४४॥
रसालजम्बूदलजद्रवेण गुडान्वितेनाथ सुपाचितेन ।
बालेन बिल्वेन सनागरेण प्रवाहिकां हन्ति मृतो रसेशः ॥४५॥
हिङ्गुना सकणेनेह विषूचीं हन्ति दारुणाम् ।
पथ्यया काञ्जिकेनापि त्वजीर्णं हरति क्षणात् ॥४६॥
तैलसैन्धवसंयुक्तपुटपाचितसूरणैः ।
अर्शांसि नाशयत्याशु दीर्घकालोद्भवान्यपि ॥४७॥
वीजपूराम्लरुचकैः हिक्कापञ्चकनाशनः ।
सितालाजजलक्षौद्रैश्छर्दिं दाहञ्च नाशयेत् ॥४८॥
अजादुग्धविपक्केन वैदेहीपाचितेन च ।
घृतेन गन्धकेनापि सक्षतं क्षपयेत् क्षयम् ॥४९॥
गोक्षुरादिकषायेण मसूरक्कथितेन वा ।
क्षौद्रेणापि युतः सूतो मूत्रकृच्छ्रं व्यपोहति ॥५०॥
सव्योषेण तिलक्काथेनामशूलं व्यपोहति ।
शम्बूकक्षारसहितः पक्तिशूलनिबर्हणः ॥५१॥
मूत्रयुतः कटुतिक्तकविश्वक्काथयुतो हरतीह हि शोफम् ।
दारुनिशात्रिफलाकथिताढ्यः कामलिनां खलु मङ्गलकारी ॥५२॥
नवोद्धृतस्नुहीक्षारद्रवभावितया भृशम् ।
हरीतक्या युतः सूतो जठरामयनाशनः ॥५३॥
त्रिकटुत्रिफलामरिचप्रमितस्त्रिपुटीफलतैलयुतः पुरकः ।
मृतसूतयुतो नियतं त्वचिरात् चिरजां विनिहन्ति हि तुन्दिलताम् ॥५४॥
रसोनसिद्धेन तिलोद्भवेन तैलेन सार्द्धन्तु रसो निपीतः ।
वातोद्भवानत्र बहून् विकारान् निहन्ति घोरानपि वा चिरोत्थान् ॥५५॥
हरीतकी गुडूचिका जलं गुडः समं समम् ।
विचूर्णितेन योजितो हरेत्समीरशोणितम् ॥५६॥

त्रिपुटीफलतैलं एरण्डस्य तैलम्, पुरकः गुग्गुलुः, समीरशोणितं वातरक्तम्, रुवूक एरण्डः, शशाङ्कलेखा सोमराजी, मार्कवो भृङ्गराजः, किलासं श्वित्रम् ।

विश्वभेषजरुवूकसंस्कृतक्षीरकेण विनियोजितो रसः।
गृध्रसीं हरति दीर्घकालजामन्धकारपटलीं यथा रविः ॥५७॥
शशाङ्कलेखया तथा फलत्रिकेण संयुतः।
समार्कवो मृतो रसो निहन्ति वै किलासकम् ॥५८॥
कृमिघ्ननिम्बदाडिमात्रिपर्णचूर्णसंयुतः।
समाक्षिकस्तु पारदो मृतो हरेत्कृमीन् द्रुतम् ॥५९॥
राजिकानलरसोननीलिकाभृङ्गराजमृदुपल्लवैः समम्।
वीरवृक्षफलसंयुतं पचेत्तैलमत्र पयसा समन्वितम् ॥६०॥
अनेन तैलेन युतो रसेशः कुष्ठान्यशेषाणि निहन्ति शीघ्रम्।
यथा मृगेन्द्रो वनमध्यचारी मृगानुपेतानिह निर्विशङ्कः ॥६१॥
वरीबलावाजिगन्धामोचामूलकषायकैः।
रसेश्वरो हरेत्कार्श्यं मासद्वयनिषेवितः ॥६२॥
सौवर्चलत्र्यूषणहिङ्गुमूत्रैर्विपाचितेनेह घृतेन युक्तः।
रसेश्वरः सप्तदिनप्रयोगात् सर्वानपस्मारगदान्निहन्ति ॥६३॥
मधूकपारावतविड्युतेन मनःशिलायाः खलु चूर्णकेन।
रसोऽञ्जनाद्दारुणलक्षणाढ्यानुन्मादरोगान्विनिहन्ति शीघ्रम् ॥६४॥
मृतं रसेशं मधुना विलिह्य क्षौद्रान्वितं कोष्णजलं पिबेद्यः।
स्थौल्यात्तु मेदःप्रभवान्नितान्तं चिरोत्थिताच्चापि विमुच्यतेऽसौ॥६५॥
वरागिरिजतुव्योषैः भृङ्गस्वरसभावितैः।
मृतः सूतो हरेत्सत्यं प्रमेहान् सकलानपि ॥६६॥
मूर्वास्वरससंयुक्तो मृतः सूतोऽतिदारुणाम्।
मसूरिकां निहन्त्येव लेपनाद् भक्षणादपि ॥६७॥
कन्यामूलरसेनाथ तण्डुलीयजलेन वा।
मृतः सूतो द्रुतं हन्याद् विषं स्थावरजङ्गमम् ॥६८॥
तण्डुलोदकसंयुक्तो यथाविधि मृतो रसः।
नस्ये पाने विशेषेण विषार्तस्य प्रशस्यते ॥६९॥
गोपुरीषसलिलेन भावयेत् सप्तधेह घनसारमुत्तमम्।
तद्युतः खलु मृतो रसेश्वरः स्थावरादिविषभेदनाशनः ॥७०॥
नृमूत्रपिष्टेन पुनर्नवायाः बीजेन मूलेन रसान्वितेन।

कृमिघ्नो विडङ्गः, त्रिपर्णं पलाशस्तस्य बीजानि ग्राह्याणि, माक्षिकं मधु। वीरवृक्षो भल्लातकः, वरी शतावरी, मोचामूलं कदलीकन्दः, अञ्जनादक्ष्णोरिति शेषः।

मृतो रसेशः खलु लेपनेन विषं सदा वृश्चिकजं निहन्ति ॥७१॥
वन्ध्याककोंटकीमूलफलेनापि समन्वितः ।
सूतः सुदारुणं हन्ति विषं स्थावरजङ्गमम् ॥७२॥
कपित्थफलसंयुतोऽथ खलु देवदालीयुतः
सधूममदनोऽथवा तु शरपुङ्खबीजान्वितः ।
मृतः खलु रसेश्वरो ह्यविरतं प्रलेपादिना
निहन्ति भृशदारुणं प्रमदमूषिकाणां विषम् ॥७३॥
नागिनीरसपिष्टेन नागरेणेह कांस्यके ।
समन्वितो रसो हन्याद् वृश्चिकार्तिं सुदारुणाम् ॥७४॥

अथ रसायनादौ पारदसेवनविधिः ।

यदाधिव्याधिविध्वंसि वयसः स्थापकन्तथा ।
मेध्यं वृष्यं तथा नेत्र्यं भैषज्यं तद्रसायनम् ॥७५॥
क्षेत्रीकृत्य निजं देहं सेवेतेह रसायनम् ।
विधिना मितपथ्याशी देहसिद्धिं हि विन्दति ॥७६॥
रसायनं यः कुरुते क्षेत्रीकरणमन्तरा ।
देहसिद्धिर्न तस्य स्यात् प्रत्युत क्लेशकृद्भवेत् ॥७७॥
सुबीजमपि संस्कृतं कृषिविधानदक्षैरिह
प्ररोहति न कर्हिचित् सुविततोषरोप्तं यथा ।
तथैव सुभिषग्वरैरकृतपञ्चकर्मक्रमे
नरे हि न रसायनं फलति जातु संयोजितम् ॥७८॥

क्षेत्रीकरणस्य स्वरूपम् ।

सञ्जातपञ्चकृत्यस्य जैत्रैर्यद् गदनाशनम् ।
रसायनादौ तत्प्राज्ञैः क्षेत्रीकरणमुच्यते ॥७९॥

क्षेत्रीकरणप्रक्रिया ।

आदौ तु पञ्चकर्माणि कारयित्वा भिषग्वरः ।

घनसारं कर्पूरम्, पुनर्नवायाः बीजं मूलं रसश्च गृह्यते । नागिनीरसद्वारा कांस्यके पिष्टेन नागरेण समन्वित इति योजना ॥७१-७४॥

रसायनलक्षणं यदिति—प्रायो रसायनं मेधां बलं नेत्रशक्तिं चापि वर्धयति, यथा त्रिफला ॥७५॥

क्षेत्रीकृत्येति—यथा बीजवापयोग्यं विधाय क्षेत्रं पश्चादुप्तं बीजं साधु फलतीति तथा शरीरमपि रसायनोपयोगि भवति विरेकादिशुद्धमिति दर्शयति । अन्यथा तु हानिर्वर्ण्यते—देहसिद्धिर्न तस्य स्यात् इति । तदेतदुक्तं सुबीजमपीति ॥

क्षेत्रीकरणलक्षणम्—जैत्रैर्भेषजैः ॥७९॥

पश्चात्सिद्धौषधैर्यत्नाद्रोगशान्तिं प्रकल्पयेत् ॥८०॥
यदि बालः कृशः क्षीणः स्याद्रसायनसेवकः ।
तदा तु पञ्चकर्माणि कारयेन्न भिषग्वरः ॥८१॥
समयज्ञस्तदा युक्त्या रेचनं कारयेन्न वा ।
ततस्तु सिद्धभैषज्यैर्नीरुजञ्चापि कारयेत् ॥८२॥
सिद्धौषधप्रयोगाच्च रोगशान्तिर्यदा भवेत् ।
मृताभ्रमुख्ययोगांश्च तदा संयोजयेद्भिषक् ॥८३॥
क्षेत्रीकृतनिजकायः कामं शाल्योदनादिपथ्याशी ।
लब्धबलो रसभोक्ता विदधीत रसायनं प्राज्ञः ॥८४॥

रसायनोचितो रसः ।

हिरण्यजीर्णो घनसत्वजीर्णो वज्रादिजीर्णोऽप्यथवा मृतश्च ।
रसायनार्थं हि रसो नितान्तं प्रशस्यते ह्यत्र रसागमज्ञैः ॥८५॥

रसभक्षणकालः ।

प्रत्यूषे भक्षयेत्सूतं पथ्यं यामे तथादिमे ।
द्वितीययामे मतिमानश्नीयाद् भोजनं हितम् ॥८६॥

अथ मात्राभेदः ।

हिरण्यजीर्णसूतस्य गुञ्जार्धं वितरेद्भिषक् ।
जीर्णवैक्रान्तकस्यापि तथा मात्रां प्रकल्पयेत् ॥८७॥
जीर्णवज्ररसेशस्य गुञ्जापादः प्रशस्यते ।
गुञ्जैकां तु तदन्येषां मात्रां प्राज्ञः प्रकल्पयेत् ॥८८॥

अथ रसायनसेवनेऽपथ्यानि ।

मिथ्याहारविहारपानसलिलक्रीडातिनिद्रादिकं
कोपं दुःखमतिस्पृहामतिमुदं स्नानं तथोद्वर्तनम् ।

तदेतदाह—पश्चात् सिद्धौषधैर्यत्नाद्रोगशान्तिं प्रकल्पयेत्, यदाहुः—"स्निग्ध-स्विन्नविरिक्तं यन्नीरुजं सिद्धभेषजैः । एतत्क्षेत्रं समासेन रसबीजार्पणक्षमम्" इति । अथ पञ्चकर्मापवादो देशकालादियोग्यतावशात् यदीति—"पञ्चकर्मभय-त्रस्तैः सुकुमारैर्नरैरिह । रेचनान्ते इदं सेव्यं सर्वदोषापनुत्तये ॥" इत्यपि कश्चिदाहुः। समयज्ञः कालविशेषयोग्यताज्ञाता सिद्धान्तज्ञाता वा । तथा चाहुः—"मृताभ्रं भक्षयेन्मासमेकमादौ विचक्षणः। पश्चात्तं योजयेद्देहे क्षेत्रीकरणमिच्छतः॥' इति, तदेतदाह मृताभ्रमुख्ययोगांश्चेत्यादि ॥८०-८४॥

रससेवनकालक्रमः प्रत्यूष इति—हितमिति वक्ष्यमाणपथ्यानुसारि ॥८६॥

तथा इति गुञ्जार्धकमेव ॥८७-८८॥

अतिस्पृहां अतिकामनाम् । तथा चाहुः प्राज्ञाः—"अतिपानं चात्यशनमति-

स्त्रीणां नित्यमतिप्रसङ्गमनिशं चिन्तामसूयां तृषां
क्षुत्क्रोधञ्च मदं रसायनसुधासेवी सदा वर्जयेत् ॥८९॥

रससेवने पथ्यम् ।

शृङ्गवेराज्यधान्येयजीरकैः परिसंस्कृतम् ।
वार्तिङ्गनं पटोलञ्च तण्डुलीयं च वास्तुकम् ॥९०॥
शाकं पौनर्नवञ्चापि पञ्चमूलादिकन्तथा ।
पुराणाः शालयो गव्यं दुग्धं दधि घृतन्तथा ॥९१॥
गोधूमो मुद्गसूपश्च तथा हंसोदकं हिमम् ।
रसेन्द्रस्य बुधैः प्रोक्तं पथ्यमेतत्समासतः ॥९२॥

अथ रससेवनेऽपथ्यम् ।

कूष्माण्डं कमठः कलिङ्गकफलं कोलं कुलत्थास्तथा
कर्कोटी कतकं कपित्थकफलं वै काञ्चनीयं सुमम् ।
कङ्कुः काञ्जिककारवेल्लकमलं कर्कोटकः कर्कटी
कौसुम्भश्च कपोतकः खलु गणः प्रोक्तः ककारादिकः ॥९३॥
ककारादिगणोक्तानि भेषजानि कदाचन ।
रसायनफलाकाङ्क्षी रससेवी न भक्षयेत् ॥९४॥
माषं मसूरकं तैलं कलायञ्च सुरासवान् ।
नारङ्गं नारिकेलञ्च धान्याम्लं निम्बुकादिकम् ॥९५॥
आनूपमांसं वेत्राग्रं नाश्नीयात्कुक्कुटांस्तथा ।
रम्भादले भोजनञ्च तक्रभक्तं सुवर्चलम् ॥९६॥
कांस्यपात्रे न चाश्नीयाद् गुरु विष्टम्भि भोजनम् ।
कट्वम्लतिक्तं तीक्ष्णोष्णं भोजनन्तु भृशं त्यजेत् ॥९७॥
कुङ्कुमालेपनं जह्यात् घनसारञ्च सर्वथा ।
मध्याह्ने पर्यटन्नैव न कुर्याद् वादजल्पनम् ॥९८॥

निद्रातिजागरम् । स्त्रीणामतिप्रसङ्गञ्च आध्मानञ्च विवर्जयेत् ॥ अतिकोपञ्चातिहर्षमतिदुःखमतिस्पृहाम् । शुष्कवाद जलक्रीडामतिचिन्ताञ्च वर्जयेत्" इति ॥८९॥

रससेवने च पथ्यं शृङ्गवेरेति—तथा च रसार्णवे "दिवारात्र जपेन्मन्त्रं नासत्यवचनं वदेत् । हितं दुग्धान्नमुद्गाज्यशाल्यन्नानि सदा ततः ॥ शाकं पौनर्नवं देवि मेघनादं सवास्तुकम् । सैन्धवं नागरं मुस्तां पञ्चमूलानि भक्षयेत् ॥ आत्मज्ञानं कथा पूजा शिवस्य च विशेषतः ॥" इत्यादि ॥९०-९२॥

अथापथ्यं ककारादिगणः कूष्माण्डमिति—ककाराष्टकादिवर्जनं रसेन्द्रस्य शरीरात्स्रावरक्षार्थम् । यथोक्तम्—"स्रवति न यथा रसेन्द्रो न च नश्यति

केषाञ्चिन्मते ककाराष्टकनिषेधः।

कलिङ्गं कारवेल्लञ्च कदली काकमाचिका।
कुसुम्भिका च कर्कोटी कूष्माण्डं कर्कटी तथा ॥९९॥
ककाराष्टकमेतद्धि प्रोक्तं रसविशारदैः।
वर्जयेद्रससेवी च नित्यमेतत्प्रयत्नतः ॥१००॥

अथ रसवैकृतौ सुखाचारः।

शिशिरसलिलसेकस्तापसन्तप्तकाये
मलयजघनलेपश्चोत्तमाङ्गे निकामम्।
सुरभिहिमसमीरे मन्दमन्दप्रचारो
हिमकरकरसङ्गः काव्यगाथाप्रसङ्गः ॥१०१॥
उरसि भवति तापे शीततोयावगाहो
मनसि मलिनतायामासवारिष्टपानम्।
अनिशमिह तृषायां नारिकेलीयनीरं
त्वपि हि झटिति सेव्यं शीतलं यच्च पथ्यम्॥१०२॥
गुडूचिकोशीरकधान्यकानां मधुस्रवापर्पटचन्दनानाम्।
तुगासिताचूर्णयुतः कषायो रसोद्भवं तापगदं निहन्यात् ॥१०३॥
विद्रुमो रङ्गकं तुल्यमेतद् द्वयं रङ्गपादोन्मितं काञ्चनं मौक्तिकम्।
वंशजातन्त्रिकासत्वयुक्तं समं भक्षयेद्वारिभिस्तत्र कूष्माण्डजैः॥१०४॥

अमूर्च्छितामृतसूतभक्षणजन्यक्लेशे गन्धकविधानम्।

आज्यदुग्धौषधैः शोधितं गन्धकं मात्रया, युक्तितो नागवल्लीरसैः।
पारदक्लेशितो भक्षयेत्सन्ततं यान्ति दोषा द्रुतं शान्तिमेकान्ततः॥१०५॥

कूष्माण्डादिगणः।

कूष्माण्डस्तुलसी लाक्षा खण्डश्च शतपुष्पिका।
लवङ्गं वत्सनागश्च तण्डुलीयस्य मूलकम् ॥१०६॥

जाठरो वह्निः" इति। कमठः कच्छपः। कलिङ्गकफलं 'तरबूज' इति प्रसिद्धम्, काञ्चनीयं सुमं काञ्चनारपुष्पम्। धान्याम्लं काञ्जिकम्, तक्रेण सहितं भक्तं तक्रभक्तं तत्, सुवर्चलं सौवर्चललवणम् ॥९३-१००॥

रसविकारे चिकित्सामाह शिशिरेति—मलयजश्चन्दनम्, हिमकरकरसङ्गः चन्द्रकिरणसंपर्कः, मधुस्रवा मधुयष्टिः, वंशजा वंशलोचना, तन्त्रिकासत्व गुडूचीसत्वम् ॥१०१-१०४॥

औषधैः भृङ्गराजादिभिः, मात्रया यथोचितया ॥१०५॥

कूष्माण्डादिगणः—शरीरात् पारदावशेषांशपातनोपयोगी निर्दिष्टः। खण्ड सितशर्करा, वत्सनागो विषविशेषः। एतद्गणसेवनप्रकारः कूष्माण्डादिगणो-

कूष्माण्डादिगणो ह्येषः पूर्वाचार्यैर्निरूपितः ।
अमूर्च्छितामृतरसविकारकुलकण्डनः ॥१०७॥
कूष्माण्डादिगणोद्दिष्टैजैत्रेणैकेन गन्धकम् ।
माषद्वयं भक्षयित्वा ततो गव्यं पयः पिबेत् ॥१०८॥
पारदस्य विकारा ये भेषजानां शतैरपि ।
शान्तिं न यान्ति तत्रेमं योगं दद्याद्भिषग्वरः ॥१०९॥
काकमाचीरसः पीतः प्रत्यहं तोलकोन्मितः ।
निहन्ति मासमात्रेण विकारान् दुष्टसूतजान् ॥११०॥
नागिनीदलकल्केन युक्तेन सुरसाद्रवैः ।
गात्रलेपाय वितरेद् गन्धं रसचिकित्सकः ॥१११॥

इति पारदमारणविज्ञानीयो नाम सप्तमस्तरङ्गः ।

---

## अथ गन्धकविज्ञानीयोऽष्टमस्तरङ्गः ।

### अथ गन्धकनामानि ।

गन्धको गन्धपाषाणः गन्धी च रसगन्धकः ।
सुगन्धिको गन्धिकश्च गन्धः सौगन्धिकस्तथा ॥१॥
पूतिगन्धोऽतिगन्धश्च पामारिः कीटनाशनः ।
बालेर्बलिवसाख्यश्च कुष्ठारिः शरभूमिजः ॥२॥
शुल्बारिर्नवनीतश्च दैत्येन्द्रो गन्धमादनः ।
कीटघ्नः क्रूरगन्धश्च स एव परिकीर्तितः ॥३॥

### अथ गन्धकस्वरूपम् ।

निर्मलस्तु रजनीसमप्रभो दीप्तिमांश्च नवनीतकोमलः ।
कीर्तितो ह्यमलसारसंज्ञको गन्धको रसरसायने वरः ॥४॥

### अशोधितगन्धकदोषनिरूपणम् ।

अशोधितः सुगन्धिकस्तनौ तनोति तापकम् ।

दिष्टेति—जैत्रेणैकेन अन्यतमौषधेन । स्पष्टमन्यत् । "यद्यज्ञानात्कथमपि नागादिकलङ्कितो रसो भुक्तः । तत्स्रावणाय विज्ञः पिबेच्छिफां कारवेल्लिभवाम् ।" इत्यप्याहुः ॥१०६-१११॥

तत्रादौ गन्धकनामानि रसतन्त्रव्यवह्रियमाणानि व्याख्यासमानि ॥१-३॥

रजनीसमप्रभः पीतवर्णः । अत्र हि चतुर्धा प्राग्भिर्निर्दिष्टो गन्धको न व्यवहृतः भेदान्तराणामप्राप्यत्वात् । "पीतगन्धक" भेदस्तु रसायनानुपयुक्तत्वान्नोक्त इति ज्ञेयम् । श्वेतगन्धस्तु खटिकारूप आयुर्वेदप्रकाशकारोक्तो निर्गन्ध एवेति नासौ गन्धक इति विभावयन्तु विज्ञाः ॥४॥

भृशञ्च चित्तविभ्रमं करोति रक्तजान् गदान् ॥५॥
प्रसन्नतां सुरूपतां शरीरबन्धचारुताम् ।
प्रभां बलञ्च नाशयत्यतो विशोधयेत्तु तम् ॥६॥

अथ गन्धकशोधनस्य प्रथमः प्रकारः ।

दीप्तानलायां सुचिरं हसन्त्यां संस्थापयेन्निर्मललोहपात्रम् ।
आज्यं विशुद्धं त्वथ गन्धतुल्यं विनिक्षिपेत्तापयितुं रसज्ञः ॥७॥
आज्यं सुतप्तं तु विलोक्य तस्मिन् क्षिपेत्समानं खलु गन्धचूर्णम् ।
मन्दानलेनाथ विपच्यमानं विद्रावयेद् गन्धकमामयज्ञः ॥८॥
दुग्धपूर्णोदरं पात्रं तनुवस्त्रेण रोधयेत् ।
विद्रुतं गन्धकञ्चाथ तनुवस्त्रोपरि क्षिपेत् ॥९॥
सारयेद्विधिना गन्धं दुग्धमध्ये यथा पतेत् ।
दुग्धमध्यगतं गन्धं सम्यक् प्रक्षालयेत्ततः ॥१०॥
एवं वारद्वयं पक्त्वा दुग्धेऽन्यस्मिन् पुनः क्षिपेत् ।
एवं त्रिवारं सशुद्धो गन्धको विमलो भवेत् ॥११॥
अनेनैव विधानेन शतवारं विशोधितः ।
गन्धको निजगन्धन्तु जहातीह न संशयः ॥१२॥

द्वितीयः शोधनप्रकारः ।

दुग्धपूर्णोदरार्द्धे तु घृतं पात्रे विनिक्षिपेत् ।
तन्मुखं तनुवस्त्रेण त्वहतेनाथ रोधयेत् ॥१३॥
चूर्णीकृतं गन्धकञ्च वसनोपरि विन्यसेत् ।
आच्छादयेच्च विधिना खर्परेणाथ गन्धकम् ॥१४॥
सवस्त्रकुट्टितमृदा तयोः सन्धिं निरोधयेत् ।
आकण्ठं भाजनं गर्ते निधाय भिषजाग्रणीः ॥१५॥
वन्योपलैस्तु ज्वलनं ज्वालयेद् भाण्डमूर्धनि ।
एवं तु विद्रुतो गन्धो दुग्धे पतति तत्क्षणात् ॥१६

अशुद्धगन्धस्य सविषत्वात् तत्सेवनाद् विकारास्तनुतापादय स्पष्टाः ॥५-६॥

हसन्त्यां अङ्गारधानिकायाम् । अत्र दुग्धमत्यन्ततप्तं ग्राह्यमन्यथा शीतदुग्धे निर्वापणेन ससुषिरं आज्यदुग्धान्वितं गन्धं जायते । अत्युष्णे क्षिप्तन्तु कठिनबन्धमसुषिरं आज्यदुग्धरहितञ्चेति विशेषः । अत्र च गन्धकवर्णरक्षा मन्दानलपाकाद्विधेया, अन्यथा खरपाके गुणवर्णहानी भवतः इति ॥७-१२॥

अथ द्वितीयः शोधनप्रकारः दुग्धपूर्णोदरार्धे तु इत्यादिना—अहतेन नवीनेन स्वच्छेन च । सलिलैरिति उष्णसलिलैः क्षालनं दुग्धादिगन्धनाशाय

गन्धं शीतं सुविज्ञाय क्षालयेत्सलिलैः भृशम् ।
एवमेकेन वारेण गन्धको निर्मलो भवेत् ॥१७॥

तृतीयः शोधनप्रकारः ।

सार्षपं तिलजं वापि कौसुम्भं तैलमुत्तमम् ।
कटाहे निक्षिपेद्युक्त्या वह्निं प्रज्वालयेदधः ॥१८॥
तैलं सुतप्तं विज्ञाय तत्समं गन्धचूर्णकम् ।
तैले विनिक्षिपेत्प्राज्ञः पचेन्मन्दाग्निना बलिम् ॥१९॥
विद्रुतं तु बलिं ज्ञात्वा द्रुतं क्षीरे विनिक्षिपेत् ।
प्रक्षालयेत्ततस्तोयैर्विशुद्धो जायते बलिः ॥२०॥

चतुर्थः शोधनप्रकारः ।

विधाय चूर्णं गन्धस्य द्रावयेल्लोहभाजने ।
भृङ्गराजरसे क्षिप्त्वा क्षालयेच्चाथ वारिभिः ॥२१॥
अनेनैव विधानेन सप्तवारं विशोधयेत् ।
भोक्तुं पृथक् त्रिवारन्तु योगार्थं भिषजां वरः ॥२२॥

पञ्चमः शोधनप्रकारः ।

खल्वे सौगन्धिकं क्षिप्त्वा दृढं सम्पेषयेत्ततः ।
श्लक्ष्णचूर्णं ततो ज्ञात्वा चतुष्पलमितं बलिम् ॥२३॥
यन्त्रे डमरुसंज्ञे च पचेद्यामचतुष्टयम् ।
ऊर्ध्वलग्नं बलिं पीतं यत्नतो ह्यवतारयेत् ॥२४॥
एवं संशोधितो गन्धः शुद्धिमायात्यनुत्तमाम् ।
पाषाणादिकदोषांश्च सर्वथा विजहात्ययम् ॥२५॥

षष्ठः शोधनप्रकारः ।

दग्धचूर्णोपलस्येह भागमेकं समाहरेत् ।
त्रिगुणे सलिले चाथ युक्त्या निर्वापयेद् भिषक् ॥२६॥
भागद्वयं गन्धकस्य त्रयोदश जलस्य च ।
भागान् संगृह्य चुल्ल्याञ्च निधाय द्रावयेद्भृशम् ॥२७॥

नैर्मल्याय च इति। एवं शोधनफलञ्च—"एवं विशोधितो गन्धः पाषाणानम्बरे त्यजेत्। घृते विषं तुपाकारं दुग्धे शुद्धिमुपैति च" इत्याहुः प्राज्ञाः ॥१३-१७॥

अथ तृतीयः—तैलद्वारा गन्धशोधनं तत्तद्विशेषयोगयोग्यतार्थम् ॥१८-२०॥

चतुर्थः शोधनप्रकारो भृङ्गरसादिना पर्पट्याद्युपयोगी व्याख्यास्यमः॥२१-२२॥

पञ्चमः शोधनप्रकारः—निःस्नेहोज्ज्वलः स्वर्णवङ्गान्तर्धूममकरध्वजादिनिर्माणोपयोगी। अत्र मध्याग्निना पाकः प्रायः, यतो मन्दाग्निना नोर्ध्वं लगति गन्धः ॥२३-२५॥

कपिलाभं ततो ज्ञात्वा सारयेत्पृथुवाससा ।
मृत्पात्रे काचलिप्ते वा काचपात्रे निधापयेत् ॥२८॥
शीतलञ्चाथ विज्ञाय लवणद्रावकं भिषक् ।
शनैः शनैः क्षिपेद्यावद् गन्धकस्तु पतत्यधः ॥२९॥
अधःस्थं गन्धकं ज्ञात्वा जलांशमन्यभाजने ।
स्थापयित्वा ततो गन्धं क्षालयेत्सलिलैर्भृशम् ॥३०॥
सौगन्धिकं विशोष्याथ श्लक्ष्णचूर्णं तु कारयेत् ।
एवं संशोधितं गन्धं वीतशङ्कः प्रयोजयेत् ॥३१॥

अथ सुधालवणम् ।

पृथक्कृतं जलांशन्तु संशोष्याथ विचूर्णयेत् ।
सुधालवणमित्युक्तं रक्तस्रुतिहरं परम् ॥३२॥

अथ गन्धकस्य गन्धनाशनप्रकारः ।

सुगन्धिकं विचूर्णितं पचेत्तु दुग्धमध्यगम् ।
यदा घनत्वमाप्नुयात्तदा सुवर्चलारसम् ॥३३॥
क्षिपेदथो पुनः पचेच्छनैः शनैर्भिषग्वरः ।
जले फलत्रिकोद्भवे विनिक्षिपेत्ततो बुधः ॥३४॥
स्वगन्धमत्र गन्धको जहात्यशेषतो द्रुतम् ।
चिराशनार्थमीदृशं वलिं नियोजयेद्भिषक् ॥३५॥

अथ विशुद्धगन्धकस्य गुणाः ।

गन्धः शुद्धो गरविषहरः क्षुद्रकुष्ठेभसिंहः
कासं श्वासं हरति नितरां दद्रुदावानलश्च ।
आधिव्याधिप्रशमनपटुः काममामं निहन्यात्
दिव्यां दृष्टिं वितरतितरां जाठराग्निं प्रसूते ॥३६॥
सुगन्धिकः सुनिर्मलः सरो रसायनोत्तमः ।
कटूष्णवीर्यपाचनो रसेन्द्रवीर्यवर्द्धनः ॥३७॥

एष शोधनप्रकारो मध्यपरिभाषासम्मतः दग्धेति—चूर्णोपलं सुधापाषाणम्, जलस्य चूर्णोदकस्य, लवणद्रावकं वक्ष्यमाणनिर्माणप्रकारम्, स्पष्टमन्यत् ॥

सुधालवणम्—सुगमम् ॥३२॥

गन्धकगन्धनाशनप्रकारः सफल'—सुवर्चला सूर्यभक्ता "हुरहुर" इति ख्याता, चिराशनार्थमेतादृशवलिं प्रयोजयेत् ॥३३-३५॥

अथ विशुद्धगन्धकगुणाः—गरं कृत्रिमं विषम् । आमं अपक्वरसम् । सरः मलसारकः, दुष्टाहिभक्षणं अशुद्धसीसकसेवन तत्समुत्थान् शिरोदाहप्रभृतीन् ॥

विकारान्नाशयत्याशु दुष्टसूताशनोत्थितान् ।
दुष्टाहिभक्षणोत्थांश्च शिरोदाहादिकानपि ॥३८॥

अथ शुद्धगन्धकस्य मात्रा ।

रक्तिकातः समारभ्य रक्तिकाष्टकसंमितम् ।
प्राणाचार्यः प्रयुञ्जीत गन्धकं तु विशोधितम् ॥३९॥

अथ शुद्धगन्धकस्य आमयिकः प्रयोगः ।

विशोधितः सुगन्धिको निहन्ति बाह्यलेपतः ।
प्रकाममामवातकं चिरोत्थिताञ्च गृध्रसीम् ॥४०॥
सुगन्धिकः सुनिर्मलो वराकषायसंयुतः ।
हरेदिहोर्ध्वगान् गदान् तथाग्निमान्द्यनाशनः ॥४१॥
सिंहपर्णीकषायेण क्षयं हन्ति नवोत्थितम् ।
क्वाथेन कण्टकार्याश्च कासं श्वासं व्यपोहति ॥४२॥
रम्भापक्कफलेनेह चर्मदोषं विनाशयेत् ।
वह्निचूर्णेन सहितो निहन्ति बलहीनताम् ॥४३॥
विशोधितं गन्धकं तु तिलचूर्णेन शीलितम् ।
गुदामयोत्थं पायुस्थं विदरं नाशयत्यलम् ॥४४॥
यष्टी खण्डः स्वर्णपत्री मिश्रेया च समं समम् ।
चूर्णेनानेन वा युक्तः पायुस्थविद्रान्तकः ॥४५॥
सकौशिकः सुगन्धिकः फलत्रिकेण संयुतः ।
द्विमासमात्रसेवितः कफोत्थरोगनाशनः ॥४६॥

अथास्य मात्रा गुञ्जातो माषकं यावत् । मात्राधिक्येन सेवितस्तु पित्तकोपादिकरोऽयमिति ध्येयम् ॥३९॥

अथास्य रोगयोग्यः प्रयोगः—एवं शुद्धो गन्धः लेपाद् आमवातगृध्रसीनाशकः । ऊर्ध्वगान् ऊर्ध्वजत्रूत्थान् । सिंहपर्णी आटरूषकः । वह्निश्चित्रकः । कौशिकः गुग्गुलुः । ज्योतिष्का ज्योतिष्मती, दधिभवं नवीनमाज्यं हैयङ्गवीनं, पामारिः गन्धकः । वज्रमुष्टिः दृढमुष्टिः । मृद्दारश्रृङ्गादि चतुर्द्रव्याणां सुश्लक्ष्णं चूर्णमीषन्नारिकेलतैलेन सह लेपात् पामां नाशयति । शालनिर्यासः रालः । सौभाग्यादीनां निम्बूकरसैः सह लेपाद् दद्रुनाशः । अथात्र प्रसङ्गात् प्राचीनतमरसतन्त्रनिर्दिष्टान् गन्धयोगान् उदाहरामः सतां लाभाय—"वरातोये भृङ्गरसे घृते दुग्धे त्रिधा त्रिधा । एरण्डतैलेनैकेन सप्तधा शोधयेद्भिषक् ॥ शुक्रदोषं विदित्वाथ सेवयेच्च निरन्तरम् । तस्यानुपानं वक्ष्यामि रहस्यं महदादरात् ॥ त्रिफलाशर्करायुक्तो हन्ति रक्तसमुद्भवान् । तथा च कुरुते दीप्तिमनलस्य तु केवलम् ॥ भृङ्गचूर्णेन संयुक्तः क्षेमायुर्बलवर्धनः । विजयाधूर्तसंयुक्तः स्तम्भकृद्रतिवर्धनः ॥ सितया नवनीतेन वयःस्थापन उच्यते ।

ज्योतिष्कावीजतैलं खलु विधिविहितं श्लक्ष्णचूर्णं वचायाः
गव्यञ्चाज्यं नवीनं दधिभवममलं तुल्यमेतत्त्रयं स्यात् ।
पामारिर्नष्टगन्धस्त्रितयपरिमितः सेवितो मासमात्रं
यक्ष्माणञ्चान्त्रशोषं हरति हि चपलं गण्डमालाञ्च भीष्माम् ॥४७॥
दिव्या दृष्टिः सन्ततं वीर्यवृष्टिश्चित्ते तुष्टिर्निर्भरं देहपुष्टिः ।
शौर्योत्कर्षो जायते वज्रमुष्टिर्नष्टातङ्को मासमात्रप्रयोगात् ॥४८॥

कोलैकप्रमितं गन्धमूर्ध्वपातनशोधितम् ।
नवकोलप्रमितया स्वच्छया सितया सह ॥४९॥
श्लक्ष्णं पिष्ट्वा निर्मलायां काचकुप्यां भिषग्वरः ।
न्यस्य काचापिधानेन मुखं त्वस्याः प्ररोधयेत् ॥५०॥
गुञ्जैकप्रमिता मात्रा शीतलेन जलेन वै ।
काले संसेविता तूर्णं शुक्रदोषं विनाशयेत् ॥५१॥
जलवत्प्रद्रवं शुक्रं नष्टगन्धं तथैव च ।
विशुद्धं फलवत्सान्द्रं मधुगन्धि करोति हि ॥५२॥
मृद्दारशृङ्गं सौभाग्यं कर्पूरं गन्धकन्तथा ।
सर्वमेतत्समं ग्राह्यं चूर्णमेषां प्रकल्पयेत् ॥५३॥
नारिकेलस्य तैलेन परिलिप्ता ह्यनारतम् ।
पामा नश्यति सप्ताहाच्चिरजापि सुदारुणा ॥५४॥
सौभाग्यं शालनिर्यासः स्फुटिका च सुगन्धिकः ।
सर्वं समं समादाय चूर्णयेद्द्विपजाग्रणीः ॥५५॥
निम्बूकस्वरसेनाथ सततं परिलेपनात् ।
विद्रावयति दद्रूणि द्रुतं नास्तीह संशयः ॥५६॥

विश्वाग्निसहितं खादेद् ग्रहणीप्लीहनाशन. ॥ शोथे वृश्चीरया कुष्ठं सोमराज्या च संयुतः । मोचाफलेन संयुक्तः भोमरोगहरः परः । खर्जूरीफलसंयुक्तो वातक्षय निवारणः । हरिद्रात्रिफलायुक्तो मेहमूलनिवारण ॥ मुण्डीचूर्णेन संयुक्तो वृष्य योगकरः परः । शुण्ठीगर्दभशाकाभ्यां कासश्वासहरः परः ॥ सदेवपुष्प मरिच गन्धकं त्वग्निवर्द्धनम् । निम्बूतोयेन संपिष्टो विषूचीशूलनाशनः ॥ गन्धकवटी– गन्धकं रसराजश्च मृताभ्रं स्वर्णमाक्षिकम् । अहिफेनश्च दरद कस्तूरी विजया मधु ॥ नागवल्लीरसेनैव भृङ्गराजरसे तथा । मर्दयित्वा दिनं सर्वं घर्मे संशोष्य यत्नत ॥ कर्कन्धुमात्रां वटिकां भक्षयेत्पयसा सह । शुक्रक्षय न लभते नारीश्चेद्दश वेश्मनि ॥ अशीतिं वातजान् रोगान् सर्वान् हन्ति न संशयः । यो भुङ्क्ते सर्वरोगेभ्यो मुक्तो भूयान्न संशयः ॥ अतीव गुणकृज्ज्ञेयः सदा सेव्यो विजानता । इह जन्मन्यरोगत्वं परे ब्रह्मपदं व्रजेत् ॥ तिलतैलं राजिकाञ्च काञ्जिमापञ्च मूलकम् । सर्षपं कारवेल्लञ्च

शाल्मलीलघुमूलस्य चूर्णेन विमलं बलिम् ।
भक्षयेन्मासमेकन्तु शौर्यं वीर्यं विवर्धयेत् ॥५७॥
विशोधितं गन्धकं तु मधुना परिशीलितम् ।
धात्रीरसानुपानेन गलत्कुष्ठं निहन्त्यलम् ॥५८॥

दद्रुविद्रावणमलहरः ।

सिक्थतैलं तु विमलं भानुतोलकसंमितम् ।
विशोधितं गन्धकं च तोलकैकमितं शुभम् ॥५९॥
सुपुष्पितं तु सौभाग्यं चक्रमर्दस्य बीजकम् ।
वृक्षामयरजः स्वच्छं तोलकार्द्धमितं पृथक् ॥६०॥
अतिमन्दाग्निना पक्वं शीतं कुप्यां तु विन्यसेत् ।
मतो मलहरोऽयं तु दद्रुविद्रावणाह्वयः ॥६१॥
प्रलिप्तोऽयं मलहरो दिनसप्तकमात्रतः ।
उन्मूलयति दद्रूणि समूलं नेह संशयः ॥६२॥

गन्धकाद्यमलहरः ।

सिक्थतैलं सुविमलं रसतोलकसंमितम् ।
गन्धकं गिरिसिन्दूरं तोलकार्द्धमितं पृथक् ॥६३॥
टङ्कणं घनसारं च पृथक् माषद्वयोन्मितम् ।
दत्वा सम्मेल्य यत्नेन काचकुप्यां निधापयेत् ॥६४॥
मतो मलहरोऽयं तु गन्धकाद्यसमाह्वयः ।
विनाशयत्याशु भृशं पामामत्यर्थदुःखदाम् ॥६५॥

प्रथमो गन्धककल्पः ।

विशोधितः सुगन्धिको वराज्यभृङ्गसंयुतः ।

त्यजेद् गन्धकसेवकः॥ गन्धकरसायनम्—धत्तूरं केतकी भृङ्गं कुमारी च पुनर्नवा । मेघनादश्च गोक्षीरं घृतञ्च श्रीफलं मधु ॥ एवं दशविधं प्रोक्तं गन्धकस्य तु शोधनम् । षट्पलं गन्धकं शुद्धं त्रिफला चापि तत्समा ॥ त्रिकटु त्रिसुगन्धञ्च कणा भल्लातबीजकम् । एकैकं निष्कमात्रन्तु चूर्णितं वस्त्रगालितम् ॥ दिवादौ मधुना पेष्य नवनीतेन लेहयेत् । कदलीफलसारेण सितया शर्करेण वा ॥ तैलाम्लं लवणञ्चैव वर्जयेत्सर्षपं तथा । सर्वरोगहरञ्चैतद् गन्धकाख्यं रसायनम् ॥" इति ॥

भानुतोलकसंमितमिति द्वादशतोलकपरिमितम् । वृक्षामयः लाक्षा तस्य रजश्चूर्णम् ॥५९-६२॥

रसतोलकसम्मितमिति षट्तोलकाः सिक्थतैलस्य । घनसारं कर्पूरम् ॥

समाक्षिको विधानतस्त्रिमासमात्रसेवितः ॥६६॥
निहन्ति दारुणान् गदान् चिरोत्थितानपि द्रुतम् ।
करोति लोचनद्वयं विकाशि गृध्रनेत्रवत् ॥६७॥
दुग्धं सशर्करं कोष्णं त्वोदनं षष्टिकोद्भवम् ।
शीतवीर्यं भवेद्यच्च पथ्यमेतत्समासतः ॥६८॥

द्वितीयो गन्धककल्पः ।

नवनीताह्वयः शुद्धश्चूर्णमामलकोद्भवम् ।
तुल्यमेतद्द्वयं ग्राह्यं सप्तवारं विधानतः ॥६६॥
रसेन् भावयेद् धात्र्याः शाल्मल्याश्च द्रवैस्तथा ।
शर्करामधुसंयुक्तं लिहेदनु पयः पिबेत् ॥७०॥
गगनानलमासनिषेवणतः स्थविरोऽपि मनोजशराभिहतः ।
सुरतेऽविरतं खलु विह्वलयन् रमयेद्रमणीशतकं सरसः ॥७१॥

तृतीयो गन्धककल्पः ।

माषार्द्धं विमलं गन्धं कोष्णेन पयसा पुमान् ।
भक्षयेत्प्रत्यहं मासं वीर्यवृद्धिः प्रजायते ॥७२॥
षण्माससेवनाच्चास्य दिव्यां दृष्टिन्तु विन्दति ।
सुवर्णवर्णसंकाशां दीप्तिं संतनुते तनौ ॥७३॥

चतुर्थो गन्धककल्पः ।

माषार्द्धं गन्धकं शुद्धं तिलतैलेन भक्षयेत् ।
नित्यं चोष्णजलेनेह पामादीनवसेचयेत् ॥७४॥
सप्ताहान्नितयादेव पामाद्याः सकला रुजः ।
हरेत् सुवर्णवर्णाभः कायः संजायते नृणाम् ॥७५॥

पञ्चमो गन्धककल्पः ।

गन्धकं निर्मलं मागधीगर्भितं पथ्यया संयुतं तुल्यमेतत् त्रयम् ।
सर्पिषा माक्षिकेणेह माषद्वयं भक्षयेद् यत्नतस्तत्र मासत्रयम् ॥७६॥
भोजनादौ सदा यन्त्रणावर्जितः शीलयेत्प्रत्यहं ब्रह्मचारी नरः ।
तप्तचामीकरोद्भासिरम्याननः शौर्यवीर्यान्वितो दिव्यदृष्टिर्भवेत् ॥७७॥

गन्धककल्प इति रसायनप्रायः प्रयोगः कल्प इत्युच्यते । गगनानलमासाः त्रिंशन् ( ३० ) मासाः ॥६६-७१॥

गन्धकस्य तैलेन सेवनं त्वग्दोषनाशाय ॥७२-७५॥

तप्तचामीकरोद्भासिरम्यानन इति तप्तसुवर्णवच्छोभमानसुन्दरमुखः ॥

षष्ठो गन्धककल्पः।

तैलसंशोधितं गन्धकं चूर्णितं माषकार्द्धं लिहेत्क्षौद्रमध्यस्थितम्।
नाशयेत्सत्वरं क्षुद्रकुष्ठोत्थितां वेदनां दारुणां दीर्घकालोत्थिताम् ॥७८॥

मरिचं गन्धकं पश्चात्तैलेनेह सुपेषयेत्।
अपामार्गजलेनापि ततो देहं प्रलेपयेत् ॥७९॥
घर्मे संशोषयित्वाथ स्नानं कुर्यात् सुभेषजैः।
सप्ताहद्वितयेनैव क्षुद्रकुष्ठं व्यपोहति ॥८०॥

सप्तमो गन्धककल्पः।

सौगन्धिकं तु विमलं गृह्णीयाद् भिषजां वरः।
ततो गव्येन पयसा त्रिवारं खलु भावयेत् ॥८१॥
ततः फलत्रिकेणाथ चतुर्जातद्रवैस्तथा।
गुडूच्या भृङ्गनीरेण शृङ्गवेररसेन च ॥८२॥
अष्टवारं पृथग् युक्त्या भावयेद् रसकोविदः।
सिद्धे रसायने तुल्यां सितां संयोज्य योजयेत् ॥८३॥
प्रत्यहं सेवितो गन्धो माषमात्रप्रमाणतः।
मासमात्रप्रयोगेण निहन्ति विविधान् गदान् ॥८४॥
धातुत्रयोत्थितान् रोगान् तथा कोष्ठसमाश्रितान्।
प्रमेहान् शीर्षजान् रोगान् शूलं कुष्ठादिकानपि ॥८५॥
क्षाराम्ललवणादीनि कोपादीन् वनितासुखम्।
द्विदलानि च शाकानि गन्धसेवी विवर्जयेत् ॥८६॥

अष्टमो गन्धककल्पः।

विशुद्धसौगन्धिकचूर्णमादौ विभावयेद् भृङ्गरसैस्त्रिवारम्।
ततो घृतक्षौद्रहरीतकीभिः सेवेत नित्यं खलु माषमात्रम् ॥८७॥

विधिना मितपथ्याशी मासद्वयनिषेवणात्।
स्थविरोऽपि स्मराक्रान्तो निर्भरं तरुणायते ॥८८॥

मरिचगन्धतैलानां पिष्टं विधाय अपामार्गजलेन सम्मेल्य शरीरे लेपो विधेयः क्षुद्रकुष्ठनाशाय। अयमत्र क्रमः—प्राक् तैलेन गन्धकः पेयः, पश्चादपामार्गतोयेन तैलमरिचेन सह गन्धकं पेषयित्वा सकलदेहं विलिप्य घर्मे तिष्ठेत्। ततो मध्याह्ने तक्रभक्तं भुञ्जीत, रात्रौ वह्निसेवा प्रातर्महिषीछगणलेपः, शीतलेन जलेन स्नानम्। एवं पामाकुष्ठनाश इति ॥७८-८०॥

त्रिफलादिशृङ्गवेरान्तैः पृथक् अष्टवारं भावना देया। तुल्यां भावितगन्धकतुल्याम्। वनितासुखं स्त्रीसंसर्गमित्यर्थः ॥८१-८६॥

स्थविरो वृद्धः, स्मराक्रान्तः कामाक्रान्तः, निर्भरं अत्यर्थम् ॥८७-८८॥

नवमो गन्धककल्पः।

रुवूकतैलसंयुतः सकौशिको वरान्वितः।
विशुद्धपारदान्वितः सुगन्धिको निषेवितः ॥८९॥
निहन्ति मासमात्रतो भृशं कफोत्थितान् गदान्।
समीरजांश्च पैत्तिकान् चिरोत्थितानपि द्रुतम् ॥९०॥
दृशा खगेश्वरोपमो बलेन भीमसन्निभः।
रविप्रभस्तु तेजसा भवेत् स वज्रविग्रहः ॥९१॥

दशमो गन्धककल्पः।

फलत्रिकं भृङ्गराजो विमलश्च सुगन्धिकः।
त्रयमेतत्समं ग्राह्यं श्लक्ष्णचूर्णं प्रकल्पयेत् ॥९२॥
दिव्यदृष्टिर्वज्रकायो मासेनैकेन जायते।
षण्मासमात्रयोगाच्च वलीपलितनाशनः ॥९३॥

अथ गन्धकतैलम्।

आवर्तमाने पयसि क्षिपेद्वै विशुद्धसौगन्धिकजं हि चूर्णम्।
तदुद्भवक्षीरसमुत्थमाज्यं गन्धस्य तैलं वितरेत्प्रतप्तम् ॥९४॥
सुगन्धतैलं विनिहन्ति शीघ्रं क्षुद्राणि कुष्ठानि विशेषतो वै।
हरेद्विसर्पादिकरोगसङ्घं विलेपनाद्वाशनतः प्रकामम् ॥९५॥

गन्धकतैलस्य द्वितीयो निर्माणप्रकारः।

सप्तधा लेपयेदर्कदुग्धेन वै वस्त्रमच्छं पुनर्वज्रिदुग्धेन च।
पेषयेद् गन्धकं मन्थजेन त्वथो वस्त्रमालेपयेत्तेन युक्त्या भिषक् ॥९६॥
गन्धलिप्तं पुनर्वस्त्रमापीडयन् वर्तिकाकारतामानयेत्कोविदः।
दंशयन्त्रस्थितां निम्नपात्रोन्मुखीं ज्वालयेद्वर्तिकां युक्तितो वैद्यराट् ॥९७॥
हरेत्सुगन्धतैलन्तु पतितं काचभाजने।
क्षुद्रकुष्ठादिरोगेषु मतिमान् सम्प्रयोजयेत् ॥९८॥

गन्धकतैलस्य तृतीयो निर्माणप्रकारः।

कलांशत्र्यूषणोपेतं विमलं चूर्णितं वलिम्।
विप्रकीर्योचितं वस्त्रे ततः सूत्रेण वेष्टयेत् ॥९९॥

रुवूकतैलमेरण्डतैलम्। खगेश्वरो गरुडः। वज्रविग्रह इति कठिनदेहः॥
आवर्तमाने उत्क्वथ्यमाने। विलेपनाद् अशनतो वा इति सम्बन्धः॥९४-९५॥
वज्रिदुग्धेन स्नुहीक्षीरेण, मन्थजेन नवनीतेन। एतत्तैलस्य लेपादेव प्रयोग इति ग्राह्यः॥९६-९८॥

यामं निमज्जयेत्तैले ततः सन्दंशयन्त्रगाम् ।
वर्तिं निम्नमुखीं कृत्वा काचपात्रमधो न्यसेत् ॥१००॥
ततः प्रज्वालयेद् शुक्त्या गन्धो द्रवति बिन्दुशः ।
इदं सौगन्धिकं तैलं बुधैः श्रेष्ठतरं मतम् ॥१०१॥
बिन्दुत्रयमितं तैलं ताम्बूलीदलसंस्थितम् ।
तत्समं विमलं सूतं संमर्द्याथ प्रयोजयेत् ॥१०२॥
दिनत्रयप्रयोगेण दीपयत्युदरानलम् ।
आमं निवारयत्येव दिनैकमपि योजितम् ॥१०३॥
कासश्वासहरः कामं ग्रहणीगजकेशरी ।
आमवातादिरोगघ्नः स्नेहोऽयं गन्धसम्भवः ॥१०४॥

गन्धकतैलस्य चतुर्थो निर्माणप्रकारः ।

ब्रह्मबीजोद्भवं श्लक्ष्णचूर्णं क्षिपेच्छागदुग्धे ततः शोषयेद्युक्तितः ।
षोडशांशं बलिं तत्र सम्मेलयेत्काचकुप्यां ततो विन्यसेत्कोविदः॥१०५॥
ततः पातालयन्त्रेण तैलं ग्राह्यं भिषग्वरैः ।
सत्वभूतं गन्धकस्य गन्धतैलं महोत्तमम् ॥१०६॥
रक्तिद्वयं गन्धतैलं ताम्बूलीदलमध्यगम् ।
तैलार्द्धं रसराजन्तु शुद्धं तत्र विमिश्रयेत् ॥१०७॥
अङ्गुल्यग्रेण सम्मर्द्य कृत्वा कज्जलिकां चरेत् ।
ताम्बूलं शीलयेत्पश्चाद् गन्धतैलस्य सेवकः ॥१०८॥
अम्लं शाकादिकञ्चैव ककाराष्टकभेषजम् ।
उष्णवीर्यं यदन्यच्च तदपथ्यमिह स्मृतम् ॥१०९॥
योगेनानेन पुरुषो वृद्धोऽपि तरुणायते ।
अपूर्ववत् प्रतिदिनं रमयेत् रमणीशतम् ॥११०॥
कासश्वासहरो बल्यो वलीपलितनाशनः ।
शोषसंशोषकः कामं क्षयकुञ्जरकेशरी ॥१११॥
शूलकालानलः सत्यं मेहवर्गनिषूदनः ।
एतत्तैलसमं लोके नान्यदस्ति रसायनम् ॥११२॥

कलाः षोडश । कलांशं षोडशांशम् । सूतसंमर्दनात्कज्जली भवति, ततः प्रयोज्यम् ॥९९-१०४॥

ब्रह्मबीजं पलाशबीजम् । स्पष्टमन्यत् । योगोऽयमेव योगरत्नाकरे महाराजवटीरसनाम्ना व्यवहृतः । सद्यःफलश्चेति ॥१०५-११२॥

अथ गन्धकद्रावकस्य निर्माणप्रकारः।

एकस्मिंल्लोहपात्रे तु बलिं शतपलोन्मितम्।
निक्षिप्य चुल्लिकायाञ्च निधायाग्निं प्रदीपयेत्॥११३॥
अपरस्मिन् सोरकञ्च सार्द्धषट्कपलोन्मितम्।
निधाय चुल्ल्यामारोप्य वह्निं सन्धुक्षयेत्ततः॥११४॥
पिधानेनानयोर्युक्त्या भृशं संरोधयेन्मुखम्।
नलिकाद्वितयं दीर्घं पात्रयोर्योजयेत् पृथक्॥११५॥
कोष्ठाकारेऽहिपात्रे च मुखं नलिकयोर्न्यसेत्।
बलिसोरकयोरेवं धूमं सम्मिश्रयेद् बुधः॥११६॥
दशाधिकद्विशतकपलं सलिलमाहरेत्।
पात्रेऽन्यस्मिंश्च संस्थाप्य वह्नौ सन्तापयेद् भृशम्॥११७॥
नलिकामुखतो बाष्पं नागपात्रेऽथ मेलयेत्।
बाष्पसंयोगतश्चैव शतत्रयपलोन्मितः॥११८॥
जायते गन्धकद्रावः पीताभोऽतिमनोहरः।

गन्धकद्रावस्य नामानि।

गन्धद्रावो बलिद्रावो गन्धाम्लश्च स कीर्तितः॥११९॥

अशुद्धगन्धकद्रावस्य दोषाः।

विशुद्धो गन्धकद्रावः सुधाधिकफलप्रदः।
अविशुद्धो दोषकारी तस्मात्तं शोधयेद् बुधः॥१२०॥

अथ गन्धकद्रावकस्य शोधनप्रकारः।

गन्धकद्रावकं प्राज्ञः काचकुप्यां निधापयेत्।
अस्यां संयोज्य नलिकां मुखमस्या नियोजयेत्॥१२१॥
अन्यस्यां काचकुप्यान्तु पचेन्मृद्वग्निना भिषक्।
तस्य तृतीयमंशन्तु जलांशमधिकं भवेत्॥१२२॥
तस्मात्तं प्रथमं यत्नादस्मादपनयेद् भिषक्।
विशुद्धं गन्धकद्रावं ततः कुप्यां निपातयेत्॥१२३॥
पात्रजं नागदोषं यज्जलांशमधिकञ्च यत्।
गन्धद्रावो जहात्येवं निर्मलश्च परं भवेत्॥१२४॥

अथ नव्यपरिभाषासम्मतो बलिद्रावः एकस्मिन्निति—पात्रयोः बलिपात्रे सोरकपात्रे च। कोष्ठाकारे इति कक्ष्याकारे, अहिपात्रे सीसकनिर्मिते पात्रे। स्पष्टमन्यत्॥११३-१२०॥

अथास्यापि शोधनावश्यकतेति तच्छोधनप्रकारमाह गन्धकद्रावकमिति—अत्र च बलिद्रावेऽधिकांशजलशोषः नागसंपर्कजन्यदोषक्षयश्च भवतीति। स्पष्टमन्यत्॥१२१-१२४॥

पानार्थं सजलगन्धकद्रावस्य निर्माणप्रकारः ।

शीतांशुभागिकं शुद्धं गन्धकद्रावकं शुभम् ।
परिस्रुते तु सलिले रविभागमिते क्षिपेत् ॥१२५॥
निधाय काचकुप्याञ्च विमलायां भिषग्वरः ।
दृढेनाथ पिधानेन रोधयेत् कूपिकामुखम् ॥१२६॥
ततो निर्दिष्टरोगेषु मात्रयाऽतिप्रयत्नतः ।
गन्धद्रावं प्रयुञ्जीत रसतन्त्रविशारदः ॥१२७॥

सजलगन्धकद्रावस्य मात्रा ।

आरभ्य शरबिन्दुभ्यः खाक्षिबिन्दुमितं परम् ।
सजलं गन्धकद्रावं वीतशङ्कः प्रयोजयेत् ॥१२८॥

सजलगन्धद्रावस्य सहपानम् ।

पलं सार्द्धपलं वापि पलद्वयमितं जलम् ।
सनीरगन्धद्रावस्य सहपाने प्रयोजयेत् ॥१२९॥
यवान्याः शतपुष्पायास्त्वचो देवसुमस्य च ।
पृथक् परिस्रुतं तोयं सहपाने प्रदीयते ॥१३०॥

अथ गन्धद्रावस्य गुणाः ।

गुल्मप्लीहगजाङ्कुशः क्रिमिहरः सर्वोदरातङ्कहृत्
वीर्योष्णस्तु विसूचिकामयहरः सङ्कोचको निर्भरम् ।
आध्मानज्वरवेगरोधनपटू रक्तातिसारान्तकः
रक्तस्रावहरोऽग्निदीप्तिजननो गन्धोद्भवो द्रावकः ॥१३१॥
तृषां विसूचिकोद्भवां हरत्ययं विशेषतः ।
तथातिघर्मरोधकः सदातिसारनाशनः ॥१३२॥
विकारान् दारुणान् नित्यं दुष्टनागाशनोत्थितान् ।
नाशयत्यचिरादेव तिमिरन्तु यथा रविः ॥१३३॥

इति गन्धकविज्ञानीयो नाम अष्टमस्तरङ्गः ।

शीतांशुश्चन्द्रः स चैकस्तस्मादेकभागिकमित्यर्थः । रवयो द्वादशाख्याताः, ततश्च द्वादशभागमितम् । पिधानेनेति काचपिधानेन ॥१२५-१२७॥

शरबिन्दवः पञ्चबिन्दवः । खाक्षिबिन्दवः विंशतिबिन्दव इत्यर्थः ॥१२८॥

तोलकैकतः तोलकद्वयपर्य्यन्तं यवान्याद्यर्कस्य सहपानेन बलिद्रावस्य प्रयोगः कर्तव्यः । अर्केष्वपि पलार्द्धसम्मितं जलं मिश्रणीयम् । त्वक् गुडत्वक्, देवसुमस्य लवङ्गस्य ॥१२९-१३०॥

निर्भरं अत्यर्थम् । सङ्कोचकः मलस्तम्भक इत्यर्थः । अतिघर्मरोधकः प्रभूतस्वेदहन्ता । सदा इति नियमेनेत्यर्थः सङ्कोचकत्वादिति यावत् । दुष्टनागाशनं अशुद्धामृतसीसकभक्षणं तदुत्थान् पक्षवधादीन् ॥१३१-१३३॥

## अथ हिङ्गुलविज्ञानीयो नवमस्तरङ्गः

हिङ्गुलस्य नामानि ।

हिङ्गुलो हिङ्गुलश्चैव हिङ्गूलं चेङ्गुलाह्वयम् ।
म्लेच्छं रक्तं सुरक्तञ्च चित्राङ्गं चूर्णपारदम् ॥१॥
रसोद्भवो रसस्थानं रञ्जनं कपिशीर्षकम् ।
रक्तकायो हंसपादो दरदश्च प्रकीर्तितम् ॥२॥

हिङ्गुलस्य स्वरूपम् ।

जपाकुसुमवर्णाभः पेषणे सुमनोहरः ।
महोज्ज्वलो भारपूर्णो हिङ्गुलः श्रेष्ठ इष्यते ॥३॥

हिङ्गुलस्य द्वौ भेदौ ।

प्रथमः खनिजोऽन्यस्तु कृत्रिमो हिङ्गुलो मतः ।
खनिजः खनितो जातः कृत्रिमो रसगन्धजः ॥४॥

कृत्रिमहिङ्गुलस्य निर्माणप्रकारः ।

चतुर्भागमितं गन्धं सूतं नेत्रयुगोन्मितम् ।
मृदङ्गयन्त्रे संस्थाप्य वारङ्कं भ्रामयेत्ततः ॥५॥
तस्य सम्भ्रामणादेव श्लक्ष्णचूर्णं प्रजायते ।
व्यावर्तनपिधानञ्च सम्भ्राम्य ह्यवतारयेत् ॥६॥
चूर्णं धूसरवर्णाभं यन्त्रान्निष्कासयेत्ततः ।
सुदृढायां ततः स्थाल्यां चूर्णमेतन्निधापयेत् ॥७॥
रेखान्वितमुखी स्थाली बुधैरत्र प्रशस्यते ।
व्यावर्तनमुखीमन्यां स्थालीं तस्यां निधापयेत् ॥८॥

पर्यायभेदविवरणं शास्त्रे व्यवहारार्थम् ॥१-३॥

खनिजः कृत्रिमश्चेति हिङ्गुलस्य द्वौ भेदौ । प्राञ्चस्तु—"दरदस्त्रिविधः प्रोक्तश्चर्मारः शुकतुण्डकः । हंसपादस्तृतीयः स्याद् गुणवानुत्तरोत्तरः ॥" इत्याहुः । आचार्यैस्तु यथोपलब्धिव्यवस्थानमाचरितमिति विशेषः । वस्तुतस्तु—"चर्मारः शुकवर्णः स्यात् सपीतः शुकतुण्डकः । जपाकुसुमसङ्काशो हंसपादो महोत्तमः ॥" इत्यनुविधानात् खनिजस्यैव विधात्रयमित्याहुः । कृत्रिमस्तु कठिनमसृण-भेदाद्द्विविध इति निर्माणप्रकारे वक्ष्यते ॥४॥

कृत्रिमहिङ्गुलनिर्माणप्रकारः—गन्धकस्याष्टौ भागाः, पारदस्य द्वाचत्वारिंशद् भागाः । मृदङ्गयन्त्रं प्रागुक्तम् । वारङ्कं हस्तकम् । अधःस्थालीकण्ठलग्नं गन्धकस्याल्पत्वात् मृदुतरम् । ऊर्ध्वस्थालीतलस्थं तु गन्धकस्य प्राचुर्यात्कठिनतरम् ।

स्थालीं सम्भ्राम्य परितो यत्नतो रोधयेन्मुखम् ।
ततः संस्थापयेच्चुल्ल्यां वह्निं दद्याच्छनैः शनैः ॥९॥
अधःस्थालीकण्ठसंस्थं हिङ्गुलं तु समाहरेत् ।
ऊर्ध्वस्थालीतलस्थञ्च पुनः पक्त्वा समाहरेत् ॥१०॥

अशुद्धहिङ्गुलस्य दोषाः ।

अशुद्धो हिङ्गुलो मोहं प्रमेहं चित्तविभ्रमम् ।
आन्ध्यं क्लमं तथा क्लैब्यं कुर्यात्तस्माद्विशोधयेत् ॥११॥

अथ हिङ्गुलशोधनस्य प्रथमः प्रकारः ।

हिङ्गुलं चूर्णितं खल्वे शृङ्गवेराम्भसा ततः ।
सप्तधा भावयेत्प्राज्ञो निर्मलो हिङ्गुलो भवेत् ॥१२॥

द्वितीयः शोधनप्रकारः ।

हिङ्गुलं चूर्णितं खल्वे लकुचस्याम्भसा ततः ।
विभाव्य शोषयेद्वैद्यो हिङ्गुलः शुद्धिमाप्नुयात् ॥१३॥

तृतीयः शोधनप्रकारः ।

सुचूर्णितं हिङ्गुलन्तु मेषीदुग्धेन भावयेत् ।
सप्तवारं प्रयत्नेन शुद्धिमा यात्यनुत्तमाम् ॥१४॥
अम्लवर्गोक्तभैषज्यैर्भावितः सप्तधा पुनः ।
हिङ्गुलः परमां शुद्धिमाप्नोतीति किमद्भुतम् ॥१५॥

तस्मात्तस्य पुनः पाकावश्यकता अवशिष्टगन्धकजरणद्वारा मार्दवसम्पादनाय । सोऽयं हिङ्गुलनिर्माणप्रकारः साम्प्रतं प्रचलितः । प्राञ्चस्तु वालुकायन्त्रद्वारा हिङ्गुल-निर्माणमाहुः, तत्तु बहुलायाससाध्यत्वाद्दुष्करमिति स प्रकार उपेक्षित आचार्यैः ॥ ५-१० ॥

अथाशुद्धहिङ्गुलदोषाः—मोहं धीविभ्रमम् । चित्तविभ्रमं तमस उद्रेकात् चित्तभ्रान्तिम् । क्लमः अनायासजातः श्रमो देहेन्द्रियम्लानताहेतुः । क्लैब्यं दुर्बल-तामिति यावत् ॥ तस्मात् उक्तव्याधिहेतुत्वादित्यर्थः ॥११॥

शृङ्गवेरं आर्द्रकम् । तत्तद्रसभावनया च संयोगजविजातीयगुणान्तरोत्पत्त्या पूर्वदोषप्रध्वंसः । स चानुभवसाध्य इति प्राञ्चः । औषधबलाबलापेक्षया च एकधा-नेकधा वा भावनम् । लकुचस्याम्भसाऽपि सप्तधा भावनमनुवर्तनीयम् । मेषीदुग्ध-भावितस्य पुनरम्लवर्गभावनया स्नेहापनयो गुणवृद्धिश्च भवतीति । तदेतदाहुः—
"मेषीक्षीरेण दरदमम्लवर्गैश्च भावितम् । सप्तवारं प्रयत्नेन शुद्धिमायाति निश्चि-

चतुर्थः शोधनप्रकारः।

निम्बूकस्वरसेनेह हिङ्गुलं श्लक्ष्णचूर्णितम्।
विभावयेत्सप्तवारं क्षालयेद्बहुशोऽम्भसा ॥१६॥
ततः संशोषयेद् घर्मे रसतन्त्रविधानवित्।
एवं विशोधितं रक्तं वीतशङ्कः प्रयोजयेत् ॥१७॥

शोधितहिङ्गुलस्य गुणाः।

लोचनामयहरः कफापहः पित्तजामयनिषूदनः परम्।
मोहकुष्ठगरकामलाहरो जाठराग्निजननोऽथ पाचनः ॥१८॥
मेहवर्गपरितापनाशनो देहकान्तिबलबुद्धिवर्द्धनः।
आमवातगजदर्पखण्डनो हिङ्गुलो विजयते ज्वरापहः ॥१९॥

शुद्धहिङ्गुलस्य प्रयोगाः।

बलिजातीफलाफूककणाविश्वसमन्वितम्।
दरदं विनिहन्त्याशु वातं शुक्रसमाश्रितम् ॥२०॥
पिप्पलीविषसंयुक्तं दरदं परिशीलितम्।
मध्वार्द्रकरसेनेह हन्ति वातज्वरं द्रुतम् ॥२१॥
भयोत्थितं ज्वरं वापि पित्तश्लेष्मोद्भवं ज्वरम्।
नवज्वरायमाणं च त्वामवातोद्भवं ज्वरम् ॥२२॥
जातीफलाफूकमुस्तचन्द्रेन्द्रयवसंयुतम्।
दरदं शीलितं हन्ति ह्यामातीसारमुल्बणम् ॥२३॥
जातीफललवङ्गेन्द्रयवटङ्कणेन्दुसंयुतम्।
दरदं विनिहन्त्याशु रुजमामातिसारजाम् ॥२४॥

तम्"। इति। चतुर्थे "शोधनप्रकारे निम्बूकस्वरसेन पेषणाद् दरदस्थः स्वतन्त्रः पारदः विश्लिष्टो भवत्यातपे शोषणाच्चोड्डीयत इति सोऽयं प्रकारः साधीयान् सिद्धौ। स्पष्टमन्यत् ॥१२-१७॥

शोधितहिङ्गुलस्य गुणाः—लोचनामयाः नेत्ररोगाः। पित्तजामयाः दाहादयः। गरं कृत्रिमविषम्। मेहवर्गपरितापनाशन इति प्रमेहसमूहजनितदुःखविनाशी ॥१८-१९॥

अथास्य रोगयोग्याः प्रयोगाः—बलिः गन्धः, आफूकम् अहिफेनम्, कणा पिप्पली, विश्वं शुण्ठी, चन्द्रः कर्पूरम्। आमातिसारे पाचनौषधैः आमं सम्पाच्य पश्चात् जातीफलाफूकादियोगस्य प्रयोगः कार्यः ॥२०-२४॥

हिङ्गुलाद्यमलहरः ।

सिक्थतैलं सुविमलं भानुतोलकसंमितम् ।
सिन्दूरं दरदश्चैव तोलकार्द्धमितं क्षिपेत् ॥२५॥
विमर्द्य मसृणे खल्वे काचकुप्यां तु विन्यसेत् ।
हिङ्गुलाद्यो मलहरः फिरङ्गव्रणरोपणः ॥२६॥

हिङ्गुलामृतमलहरः ।

सिक्थतैलं सुविमलं सूर्यतोलकसंमितम् ।
तोलकार्द्धमितं चैव दरदं सुविचूर्णितम् ॥२७॥
मृद्दारश्रृङ्गं सौभाग्यं कर्पूरं रसपुष्पकम् ।
स्फटिका गिरिसिन्दूरं पृथक् माषद्वयोन्मितम् ॥२८॥
सम्मेल्य मसृणे खल्वे काचकुप्यां तु विन्यसेत् ।
मतो मलहरोऽयं तु हिङ्गुलामृतसंज्ञकः ॥२९॥
हिङ्गुलामृतसंज्ञोऽयं पूयनिर्हरणः परम् ।
शोधनो रोपणश्चैव विविधव्रणरोपणः ॥३०॥
व्रणपूरणयोगेन नाडीव्रणनिषूदनः ।
भगन्दरहरश्चापि समाख्यातो विशेषतः ॥३१॥

अथ हिङ्गुलाद्रससिन्दूरस्य निर्माणप्रकारः ।

निम्बूकद्रवसंशुद्धं क्षालितञ्चाथ वारिणा ।
पलोन्मितं तु दरदं शुद्धं गन्धञ्च तत्समम् ॥३२॥
श्लक्ष्णचूर्णं ततः कृत्वा काचकुप्यां निधापयेत् ।
रससिन्दूरविधिना वालुकायन्त्रगं पचेत् ॥३३॥
स्वाङ्गशीतं ततो ज्ञात्वा जपाकुसुमसमप्रभम् ।
आहरेद्रससिन्दूरं रसागमविशारदः ॥३४॥

अस्य गुणादिनिरूपणम् ।

गुणा मात्राप्रभेदश्च प्रयोगश्चानुपानकम् ।
पथ्यापथ्यादिकञ्चापि रससिन्दूरवन्मतम् ॥३५॥

हिङ्गुलाद्ये हिङ्गुलामृताख्ये च मलहरे सिक्थतैलं द्वादशतोलकम् । स्पष्टमन्यत् ॥२५-३१॥

हिङ्गुलाद्रससिन्दूरनिर्माणप्रकारः—निम्बूकरसशुद्धस्य जलक्षालितस्य च दरदस्य ग्रहणमुज्ज्वलवर्णत्वात् निःस्नेहत्वात् निरम्लत्वाच्चौषधयोग्यताहेतुत्वात् । सर्वमन्यत्समानं रससिन्दूरेण ॥३२-३४॥

श्री सिद्धदरदामृतः ।

कर्षद्वयमितं खण्डं हिङ्गुलस्य समाहरेत् ।
भृशं कार्पाससूत्रेण वेष्टयेत्परितो भिषक् ॥३६॥
निधापयेदम्बरीषे चुल्लिकाधिष्ठिते ततः ।
पलद्वयोन्मितं तत्र पलाण्डुस्वरसं क्षिपेत् ॥३७॥
कर्षैकञ्च वटक्षीरं ततोऽग्निं दीपयेद् भृशम् ।
शुष्के जलांशे चुल्लीतोऽम्बरीषमवतारयेत् ॥३८॥
स्वाङ्गशीतं ततो ज्ञात्वा रक्तखण्डं समाहरेत् ।
अम्बरीषं प्रमृज्याथ चुल्लिकायां निधापयेत् ॥३९॥
कर्षोन्मितं देवपुष्पचूर्णं तत्र प्रसारयेत् ।
ततो दरदखण्डञ्च निदध्याद् युक्तितो भिषक् ॥४०॥
भल्लातकफलानाञ्च सार्द्धद्वादशकर्षकम् ।
स्तूपाकारतया तस्मिन् निदध्यात्परितो भिषक् ॥४१॥
देवपुष्पस्य चूर्णेन छिद्राण्यत्र प्रपूरयेत् ।
ततः प्रज्वालयेद्वह्निं रसतन्त्रविशारदः ॥४२॥
दग्धान् भल्लातकान् प्राज्ञो मध्यतश्चापसारयेत् ।
घृतं दशगुणं रक्तात् क्रमशो निक्षिपेत्ततः ॥४३॥
दग्धं चापि घृतं प्राज्ञो हिङ्गुलं त्ववतारयेत् ।
कार्पाससूत्रभस्माथ संमृज्यापनयेद्भिषक् ॥४४॥
समर्पितो हि सिद्धेभ्यो यतोऽयं त्रिपुरद्विषा ।
भुवनेऽसौ ततः ख्यातः श्रीसिद्धदरदामृतः ॥४५॥

अथास्य गुणाः ।

ऊरुस्तम्भं त्वामवातं तथा पक्षवधाह्वयम् ।
शीताङ्गसंज्ञकञ्चापि सन्निपातं सुदारुणम् ॥४६॥
प्लीहोदरं दीर्घकालजातं दोषत्रयोत्थितम् ।
क्लैब्यञ्च नाशयत्याशु श्रीसिद्धदरदामृतः ॥४७॥

अथ श्रीसिद्धदरदामृतः—कर्षद्वयमितं चतुस्तोलकम् । एकमेवैतादृशं खण्ड ग्राह्यं पाकयोग्यत्वात् न चूर्णितम् । अम्बरीषं घटादिखर्परं पक्वकपालं क्षुद्रकटाहम्वा । उपर्युपरि चयनं स्तूपाकारतया । देवपुष्पं लवङ्गम् । दह्यमानेषु भल्लातकेषु साधकस्तत्र न तिष्ठेदन्यथा भल्लातकधूमस्पर्शान्मुखादिशोथाशङ्का । ऊरुस्तम्भ-पक्षवधसन्निपातशीताङ्गसन्निपातेषु मल्लस्य द्विशततमोऽशः रक्तिकायाः मात्रायामे

वैशिष्ट्यादनुपानानां करोति विविधान् गुणान् ।
मात्रयोचितया दत्तो रोगसङ्घञ्च नाशयेत् ॥४८॥

अस्य मात्रा ।

गुञ्जार्धसंमिता त्वस्य पूर्णमात्रा प्रशस्यते ।
बलाबलादिकं वीक्ष्य ह्रासयेच्चाथ वर्द्धयेत् ॥४९॥

हिङ्गुलीयो माणिक्यरसः ।

विशोधितं हिङ्गुलञ्च तोलकाष्टकसंमितम् ।
सौगन्धिकञ्च तत्तुल्यं तथा शैलूषभूषणम् ॥५०॥
पलाशपुष्पस्वरसैः पेषयेद्दिनसप्तकम् ।
शोषयित्वा रसञ्चाथ विदध्यात् श्लक्ष्णचूर्णकम् ॥५१॥
काचकूप्यां निधायाथ वालुकायन्त्रमध्यगम् ।
क्रमवृद्ध्यानलेनात्र पचेद्वै दिवसत्रयम् ॥५२॥
स्वतः शीतं ततो ज्ञात्वा कूपिकाकण्ठसंस्थितम् ।
रससिन्दूरसङ्काशं माणिक्यरसमाहरेत् ॥५३॥

हिङ्गुलीयमाणिक्यरसस्य गुणाः ।

ग्रहणीगदवारणदर्पहरस्त्वतिसारनिवारणदक्षतरः ।
रुधिरोत्थितरोगविनाशकरो बलवीर्यशरीरसमृद्धिकरः ॥५४॥
क्षुद्रकुष्ठहरः कामं वयःस्थापनकारकः ।
माणिक्यरससंज्ञोऽयं सर्वामयहरो मतः ॥५५॥

अस्य मात्रा ।

यवैकतः समारभ्य यवत्रितयसंमितम् ।
युञ्जीत रसमाणिक्यं बलकालाद्यपेक्षया ॥५६॥

श्रीसिद्धहिङ्गुलेश्वरः ।

विशोधितं हिङ्गुलञ्च धत्तूरमूलजद्रवैः ।
विभावयेत्सप्तवारं ततः संशोषयेद् बुधः ॥५७॥

कस्यां सम्मिश्र्य गव्यपयोऽनुपानेन दातव्यः । आमवाते पुराणेन गुडेन सह पयोऽनुपानेन । क्लैब्ये ताम्बूलदलादिभिः सह विविच्य । स्पष्टमन्यत् ॥३६-४९॥

हिङ्गुलीयो माणिक्यरसः—शुद्धं हिङ्गुलं ८ तो०, गन्धकं ८ तो०, हरितालं ८ तो० । माणिक्यमिति कान्तिमत्तया संज्ञा । वारणो हस्ती, रुधिरोत्थितरोगाः पिडकादयः । मात्राल्पत्वं हरितालसत्वसंयोगात् । स्पष्टमन्यत् ॥५०-५६॥

श्रीसिद्धहिङ्गुलेश्वरः—धत्तूरमूलरसैः सप्तवारं सम्यग्भावनं दरदस्य विशेष-

तत्तुल्यं टङ्कणं क्षिप्त्वा श्लक्ष्णचूर्णं प्रकल्पयेत् ।
रसज्ञैः कीर्तितो नाम्ना श्रीसिद्धहिङ्गुलेश्वरः ॥५८॥
विश्वमोचरसोपेतं पुरुहूतयवान्वितम् ।
गुञ्जार्द्धप्रमितं दद्याद्रसतन्त्रविशारदः ॥५९॥
ततोऽनुपाययेच्छीघ्रं धान्यशीतकषायकम् ।
दाहमूर्च्छापिपासादीन् नाशयेद्वै ह्युपद्रवान् ॥६०॥
पाचनो दीपनश्चायं नाडीगतिनियामकः ।
ज्वरघ्नः कृमिसंहारी कफघ्नो मृदुधारकः ॥६१॥
कोष्ठवातप्रशमनो भृशं वातानुलोमनः ।
नैतत्समो रसो लोके ज्वरातीसारनाशनः ॥६२॥

इति हिङ्गुलविज्ञानीयो नाम नवमस्तरङ्गः ।

---

## अथ अभ्रकविज्ञानीयो दशमस्तरङ्गः

अभ्रकस्य नामानि ।

अभ्रकं गगनं भृङ्गमभ्रं खं व्योमनामकम् ।
वज्रं घनञ्च गिरिजं बहुपत्रमनन्तकम् ॥१॥
आकाशमम्बरं शुभ्रं त्वमलं गरजध्वजम् ।
मेघाख्यमन्तरीक्षञ्च तदेव परिकीर्तितम् ॥२॥

अभ्रकस्य चातुर्विध्यम् ।

अभ्रं सितारुणश्यामपीतवर्णविभेदतः ।
चतुर्विधं समाख्यातं कृष्णं तत्र गदापहम् ॥३॥

कृष्णाभ्रकस्य भेदाः ।

पिनाकनागमण्डूकवज्राह्वयविभेदतः ।
चतुर्विधन्तु कृष्णाभ्रं मतं रसविशारदैः ॥४॥

गुणाधानकरम् । विश्वं शुण्ठी, पुरुहूतयवाः इन्द्रयवाः । शीघ्रं धान्यशीतकषायपानं योगजनितपित्तोद्रेकानुत्पत्त्यर्थम् । तत्फलं प्राह—दाहेत्यादि । स्पष्टमन्यत् ॥५७-६२॥

अभ्रकनामानि—अभ्रकमित्यादिना ॥१-२॥

अभ्रभेदाः—"कृष्णं तत्र गदापहम्" इत्यनेन कृष्णस्यैव रोगप्रयोगयोग्यता सूचिता । दाक्षिणात्यास्तु श्वेताभ्रमपि पित्तज्वरादिषु योजयन्ति, तत्तु स्वल्पगुणत्वात्प्राचीनाचार्यैः प्रायश उपेक्षितमासीदिति ज्ञेयम् ॥३॥

कृष्णाभ्रकस्यैव चत्वारो भेदाः पिनाकादयः । तेषां लक्षणानि दोषाश्च

पिनाकाभ्रकस्य लक्षणम् ।

अग्नौ सन्तापितं यत्तु दलानि परिमुञ्चति
रसतन्त्ररहस्यज्ञैस्तत् पिनाकं प्रकीर्तितम् ॥५॥

तस्य दोषाः ।

पिनाकाभ्रं मलं रुद्‌ध्वा कुरुते मरणं ध्रुवम् ।
कुष्ठादिकान्महारोगान् जनयत्यपि निश्चितम् ॥६॥

नागाभ्रकस्य लक्षणम् ।

पावकोत्तापितं यत्तु फूत्कारं परिमुञ्चति ।
क्रुद्धाहिश्वासवच्छीघ्रं नागाभ्रं तदिहोच्यते ॥७॥

तस्य दोषाः ।

नागाभ्रं सेवितं कुर्यान्महाघोरं भगन्दरम् ।
मण्डलं वा महाकुष्ठं तद्द्वयं वा न संशयः ॥८॥

मण्डूकाभ्रस्य लक्षणम् ।

अग्नौ सन्तापितं यत्तु भेकवत्कुरुते रवम् ।
उत्प्लुत्योत्प्लुत्य च पतेन्मण्डूकं तदिहोच्यते ॥९॥

तस्य दोषाः ।

मण्डूकसंज्ञकं त्वभ्रं सततं परिशीलितम् ।
अश्मरीं जनयत्याशु शस्त्रसाध्यमसंशयम् ॥१०॥

वज्राभ्रकस्य लक्षणम् ।

पावकोत्तापितं यत्तु विकृतिं नैव गच्छति ।
तिष्ठत्यग्नौ भिदुरवत् वज्राभ्रं तत्प्रकीर्तितम् ॥११॥

तस्य गुणाः ।

सर्वश्रेष्ठं तु वज्राभ्रं महाव्याधिहरं परम् ।
देहसिद्धिकरञ्चापि जरावैरूप्यनाशनम् ॥१२॥

जात्याभ्रकस्य स्वरूपम् ।

नीलाञ्जनोपमं स्निग्धं भारपूर्णं महोज्ज्वलम् ।
निर्मोच्यपत्रं मृदुलं त्वभ्रं श्रेष्ठमिहोच्यते ॥१३॥

व्याख्यासमाः ॥४-१०॥

वज्राभ्रकलक्षणे—भिदुरवत् वज्रवत् ॥११-१२॥

जात्याभ्रस्वरूपे—निर्मोच्यपत्रं सुखेन विभागयोग्यपत्रसञ्चयम् ॥१३-१४॥

देशभेदेनाभ्रकस्य वैशिष्ट्यम्।

अभ्रकं हिमशैलोत्थमुत्तमं परिकीर्तितम्।
मध्यमं पूर्वशैलोत्थं त्वधमं दक्षिणाद्रिजम् ॥१४॥

अभ्रकखननविधिः।

गजप्रमाणं पुरुषप्रमाणं वा खानयद्वै खनिमामयज्ञः।
ततो गुणाढ्यं खलु भारपूर्णं समाहरेदभ्रकमञ्जनाभम् ॥१५॥

अशोधिताभ्रकस्य दोषाः।

बाधां विदध्याद्विविधां शरीरे हृत्पार्श्वपीडां तनुते नितान्तम्।
शोफं क्षयं पाण्डुगदञ्च कुष्ठं त्वशोधिताभ्रं खलु मारितं यत् ॥१६॥
धान्याभ्रकरणे चैव मारणे सत्वपातने।
रसतन्त्रविशेषज्ञः शुद्धमभ्रं नियोजयेत् ॥१७॥

अभ्रकशोधनस्य प्रथमः प्रकारः।

वह्नौ सन्ताप्य गगनं काञ्जिके निक्षिपेद् बुधः।
सप्तवारं प्रयत्नेन, ततः खल्वे निधापयेत् ॥१८॥
अम्लेन केनचिद्वापि सुदृढं पेषयेत्ततः।
एवं दिनैकं संपिष्टं स्वभ्रकं शुद्धिमाप्नुयात् ॥१९॥

द्वितीयः शोधनप्रकारः।

अभ्रकं वह्निसन्तप्तं सप्तवारं निषेचितम्।
गोदुग्धे वा वराक्वाथे शुद्धिमायात्यनुत्तमाम् ॥२०॥

तृतीयः शोधनप्रकारः।

अभ्रकं दहनोत्तप्तं सप्तवारं निषेचितम्।
बदरीक्वथिते पश्चात् पेषितं शुद्धिमाप्नुयात् ॥२१॥
धान्याभ्रकमकृत्वैव घनमेवं विशोधितम्।
मारणाय प्रयुञ्जीत रसतन्त्रविचक्षणः ॥२२॥

गजप्रमाणमिति अविनष्टसत्वगगनग्रहणाय। तथाहुः—"राजहस्ताद-धस्ताद् यत् समानीतं घनं खनेः। भवेत्तद्दुःखफलदं निःसत्वं निष्फलं परम्" इति ॥१५॥

अशोधिताभ्रकदोषाः—विविधां नानाप्रकाराम्। अहितत्वात् धान्याभ्रकरणे मारणे सत्वपातने च शुद्धाभ्रविनियोगः ॥१६-१७॥

प्रथमद्वितीयौ शोधनप्रकारौ स्पष्टौ। तृतीये शोधनप्रकारे अग्नितप्तं कृत्वा सप्तवारं बदरीक्वाथे निर्वापयेत्। धान्याभ्रकमकृत्वैवेति तु गुणातिशयदर्शनार्थम्। तथा चोक्तम्—"अथवा बदरीक्वाथे ध्मातमभ्रं विनिक्षिपेत्। मर्दितं पाणिना

चतुर्थः शोधनप्रकारः ।

अभ्रकं वह्निसन्तप्तं गव्ये पयसि निक्षिपेत् ।
सप्तवारं प्रयत्नेन, लुङ्गाद्यम्लद्रवेण तु ॥२३॥
पेषयेदथ तन्त्रज्ञस्तण्डुलीयद्रवेण च ।
एवं दिनत्रयेणैव त्वभ्रं शुद्धिमुपैत्यलम् ॥२४॥

धान्याभ्रकस्वरूपम् ।

अभ्रं कम्बलमध्यस्थं सधान्यं परिमर्दनात् ।
धान्येभ्यो निर्गतं यस्मात्तस्माद्धान्याभ्रमुच्यते ॥२५॥

धान्याभ्रकस्य निर्माणप्रकारः ।

पादांशधान्यसंयुक्तं गगनं कम्बलोदरे ।
निक्षिप्य रोधयेत्सम्यक् मुखं सूत्रेण बुद्धिमान् ॥२६॥
दिनैकं स्थापयेन्नीरे क्लिन्नतां याति तद्यथा ।
सुक्लिन्नञ्चाथ यत्नेन पाणिभ्यां मर्दयेद् दृढम् ॥२७॥
तस्मिन्नेव जले त्वभ्रं यथा सर्वं परिस्रवेत् ।
संशोष्य चाथ सलिलं पुटयोगेन मारयेत् ॥२८॥

अभ्रकमारणे पुटसङ्ख्यानियमः ।

विंशत्यादिः शतान्तस्तु पुटो रोगनिवृत्तये ।
शतादिस्तु सहस्रान्तः प्रशस्तश्च रसायने ॥२९॥

अभ्रकस्य प्रथमो मारणप्रकारः ।

धान्याभ्रकं समादाय कासमर्दभवैर्द्रवैः ।
दिनैकं पेषयित्वाथ चक्रिकाकारतां नयेत् ॥३०॥
ततो गजपुटं दद्याद् दशवारं विधानतः ।
रविक्षीरैस्ततो दद्यात्तद्वदेव पुटानि तु ॥३१॥
एवं तु विंशतिपुटैरेवाभ्रस्य मृतिर्भवेत् ।
सिन्दूरसदृशं भस्म जायते नात्र संशयः ॥३२॥

शुष्कं धान्याभ्रादतिरिच्यते" इति । वस्तुतस्तु धान्याभ्रकरणं पाषाणांशनिरासाय मर्दनयोग्यतासम्पादनाय चेति ॥१८-२४॥

धान्याभ्रलक्षणं प्रकारश्च व्याख्यासमः ॥२५-२८॥

पुटसङ्ख्यानियमः गुणव्यवस्थाहेतुः विंशत्यादीति—एतेन दशपुटैकपुटितादिमारणप्रकाराणां जघन्यता सूचिता । तस्मादुपेक्षितप्रायोऽयं मार्ग आचार्यैः ॥२९॥

तत्रायं तावत् प्रथमो गगनमारणप्रकारः—कासमर्दरसैर्दश पुटानि अर्कदुग्धैश्च ततो दशेति विंशतिपुटानि । स्पष्टमन्यत् ॥३०-३२॥

द्वितीयो मारणप्रकारः ।

धान्याभ्रकं समादाय नागिनीदलजैर्द्रवैः ।
तद्वद्वासारसेनापि मीनाक्ष्याः स्वरसेन च ॥३३॥
न्यग्रोधपयसा चापि तद्वदेव पुटेद्भिषक् ।
एवं विंशतिवारेण गगनं पञ्चतां व्रजेत् ॥३४॥

तृतीयो मारणप्रकारः ।

धान्याभ्रकं समादाय तण्डुलीयोद्भवैर्द्रवैः ।
दिनत्रयं पेषयित्वा ततश्च कृतचक्रिकम् ॥३५॥
पुटेद्गजपुटेनैव दशवारं प्रयत्नतः ।
ततः पुनर्नवानीरैस्तद्वदेव पुटेद्भिषक् ॥३६॥
वटशुङ्गकषायेण तद्वदेव पुटेत्तथा ।
एवं त्रिंशत्पुटैरेव गगनस्य मृतिर्भवेत् ॥३७॥

चतुर्थो मारणप्रकारः ।

धान्याभ्रं पञ्चवारं प्रथममिह पुटेन्मुस्तकक्वाथयोगात् ।
रम्भानीरेण तद्वत्तदनु च सलिलैस्तण्डुलीयप्रसूतैः ॥३८॥
भृङ्गोत्थेनापि वारा तदनु खलु वरानीरपूरेण पिष्ट्वा ।
दत्त्वा गन्धञ्च तुल्यं सकृदिह पुटितो वारिदो याति मृत्युम् ॥३९॥

पञ्चमो मारणप्रकारः ।

धान्याभ्रकं समादाय रविक्षीरैर्विमर्दयेत् ।
रविमूलद्रवैर्वापि दिनमेकं निरन्तरम् ॥४०॥
ततः संशोषयेद् घर्मे गगनं कृतचक्रिकम् ।
रविपत्रैश्च संवेष्ट्य सप्तवारं विधानतः ॥४१॥
पुटेद् गजपुटेनैव रसतन्त्रविशारदः ।
ततो न्यग्रोधमूलोत्थैः क्वाथैर्दद्यात्पुटत्रयम् ॥४२॥
तद्वद्रम्भारसेनापि सप्तवारं पुटेद्भिषक् ।
एवं स्वल्पैः पुटैरेव गगनं मृतिमाप्नुयात् ॥४३॥

अपरः प्रकारः—नागिनीदलादीनां चतुर्णां द्रव्याणां रसैः प्रत्येकं पञ्चपुटानि एवं विंशतिपुटानि। नागिनीदलं ताम्बूलपत्रम् ॥३३-३४॥

तण्डुलीयादिभिस्त्रिभिर्द्रव्यैः प्रत्येकं दशधा पुटनात्त्रिंशद्भिः पुटैरपरः ॥३५-३७॥

मुस्तकादिभिः पञ्चभिः प्रत्येकं पञ्चधा पुटनात् पञ्चविंशतिपुटानि। गन्धकयोगादेकमिति षड्विंशतिभिः पुटैश्चतुर्थः ॥३८-३९॥

पञ्चमो मारणप्रकारः—सप्तदशपुटयोगात् सुगमः ॥४०-४३॥

षष्ठो मारणप्रकारः।

क्षीरत्रयं काकमाची गोक्षुरः खरमञ्जरी।
वटप्ररोहो गोमूत्रं तुलसी कदलीशिफा ॥४४॥
एभिरभ्रं विमर्द्याथ दशवारं पृथक् पृथक्।
पुटेत्पुटविधानज्ञः क्रमेणैव भिषग्वरः ॥४५॥
शतधा पुटनादेवं रक्तोत्पलसमप्रभम्।
निश्चन्द्रं जायते भस्म सर्वदोषविवर्जितम् ॥४६॥

सप्तमो मारणप्रकारः।

धान्याभ्रकं समादाय वस्वंशगुडसंयुतम्।
वर्धमानदलद्रावैर्मर्दयित्वा द्वियामकम् ॥४७॥
वेष्टयेद् वटपत्रैश्च गगनं कृतचक्रिकम्।
ततः कार्पाससूत्रेण पत्रप्रान्तेषु रोधयेत् ॥४८॥
ततो गजपुटं दद्याद्दशवारं विधानतः।
निश्चन्द्रिकं भवेद्भस्म गगनस्य न संशयः ॥४९॥

अष्टमो मारणप्रकारः।

धान्याभ्रकं समादायं मूलिकाया द्रवैर्दृढम्।
पेषयेद्दिनमेकन्तु द्विदिनम्वा भिषग्वरः ॥५०॥
वेष्टयेद्वटपत्रैश्च गगनं कृतचक्रिकम्।
एकविंशतिवाराणि पुटेदेवं प्रयत्नतः ॥५१॥
निश्चन्द्रिकं भवेद्भस्म निर्विकारं गुणोत्तरम्।
एवं मृतं तु गगनं वीतशङ्कः प्रयोजयेत् ॥५२॥

नवमो मारणप्रकारः।

वटप्ररोहक्काथेन धान्याभ्रं परिपेषितम्।
एरण्डपत्रैरावेष्ट्य पुटयेत्कृतचक्रिकम् ॥५३॥
दशवारं पुटित्वैवं पुटेत्क्षुद्राकषायतः।
वासया कलिवृक्षस्य क्वाथेन च तथा पुटेत् ॥५४॥
चत्वारिंशत्पुटैरेवं गगनं मृतिमाप्नुयात्।
निश्चन्द्रिकं भवेद्भस्म क्षयकासादिनाशनम् ॥५५॥

क्षीरत्रयं रविक्षीरं वटक्षीरं स्नुहीक्षीरमिति प्रागुक्तम्। खरमञ्जरी अपामार्गः। कदलीशिफा रम्भामूलम्। एवं दशद्रव्यैर्दशधा पुटनात् शतं पुटानि ॥४४-४६॥

अष्टमांशगुडक्षेपात् एरण्डपत्ररसैर्मर्दनात् च दशपुटैरेव मारणमभ्रस्य भवतीति निःसंशयं वचनम् ॥४७-४९॥

मूलिकारसैरष्टमः ॥५०-५२॥

नवमः प्रकारो मारकद्रव्यमहिम्ना क्षयकासादिनाशनः। स्पष्टमन्यत् ॥५३-५५॥

मृताभ्रकस्य लक्षणम् ।

निश्चन्द्रञ्चारुणं स्वच्छं सुसूक्ष्मं स्पर्शकोमलम् ।
अभ्रं मृतं विजानीयाद्रसतन्त्रविचक्षणः ॥५६॥

अभ्रकस्य मारको गणः ।

क्षीरत्रयं काकमाची मुस्ता घृतकुमारिका ।
वटप्ररोहो गोमूत्रं विल्वमूलदले वृषः ॥५७॥
फलत्रिकमजारक्तं कण्टकारी कदम्बकः ।
अग्निमन्थः शालिपर्णी श्रीपर्णी पाटली गुडः ॥५८॥
तिलपर्णी पृश्निपर्णी गोक्षुरः खरमञ्जरी ।
शुक्लसिद्धार्थको लोध्रः वृहती हिलमोचिका ॥५९॥
धत्तूरः कासमर्दश्च मातुलानी गुडूचिका ।
मारिषस्तुलसी दूर्वा वाजिगन्धा च तिक्तका ॥६०॥
मण्डूकपर्णी मदनः पिण्डी तगरमेव च ।
शङ्खपुष्पी नागवल्ली घोण्टा श्वेतपुनर्नवा ॥६१॥
आखुपर्णी सप्तपर्णः रम्भाकन्दरसस्तथा ।
भृङ्गराजो देवदारु तालमूली च मालती ॥६२॥
अगस्त्यपत्रं तालीशं चित्रकं जलकुम्भिका ।
दाडिमस्य दलञ्चैव तण्डुलीयकमेव च ॥६३॥
एरण्डमूलपत्राणि श्योनाको वस्त्ररञ्जनी ।
पालङ्क्या भद्रमुस्ता च मीनाक्षी कोकिलाक्षकः ॥६४॥
पूर्वाचार्यैः कीर्तितोऽयमभ्रस्य मारको गणः ।
यथारोगं यथालाभं भेषजैः पुटयेद् घनम् ॥६५॥

अभ्रकभस्मनो लोहितीकरणम् ।

गाङ्गेरुकी भद्रमुस्ता वटक्षीरन्तथैव च ।
वटमूलजलञ्चापि हरिद्राया द्रवस्तथा ॥६६॥
समङ्गाक्कथितञ्चैव घनमेभिः सुपेषयेत् ।
पुटद्वयं त्रयञ्चापि वितरेद्भिषजां वरः ॥६७॥

मृताभ्रकलक्षणे निश्चन्द्रत्वं लक्षणम् । अरुणत्वादिविशेषस्तु उत्कर्षाधान हेतुः । तथाच आरुण्यादिगुणं भस्म उत्कृष्टम् । सचन्द्रन्तु तदप्यमृतमेवेति ॥५६॥

अथाभ्रकमारकगणः—विल्वमूलं विल्वदलञ्चेत्युभयम् । वृषः वासकः, श्रीपर्णी गम्भारी, मातुलानी भङ्गा, तिक्तका कटुकी, घोण्टा बदरी, वस्त्ररंजनी मञ्जिष्ठा । स्पष्टमन्यत् ॥५७-६५॥

निश्चन्द्रिकञ्च मृदुलं रक्तोत्पलदलप्रभम् ।
गगनस्य भवेद्भस्म ततः कार्येषु योजयेत् ॥६८॥

अभ्रकभस्मनोऽमृतीकरणम् ।

मारितं त्वतियत्नेन दशभागिकमभ्रकम् ।
त्रिफलाक्वथितं चैव नवं षोडशभागिकम् ॥६९॥
नागभागिकसुस्राज्यं दत्वा लोहस्य भाजने ।
पाचनाज्जायते रम्यममृतीकरणं वरम् ॥७०॥

द्वितीयः प्रकारः ।

कन्याम्बुमेघगव्याज्यं कलादिकृतपनांशकम् ।
पचेन्मन्दानलेनैतदमृतीकरणं वरम् ॥७१॥

तृतीयः प्रकारः ।

मृताभ्रसंमितं गव्यमाज्यं दत्वाभ्रकं पचेत् ।
अमृतीकृतमेवन्तु घनं कार्येषु योजयेत् ॥७२॥

मृताभ्रकस्य गुणाः ।

अभ्रं स्निग्धं परमशिशिरं स्वादु चायुष्यमग्र्यं
केश्यं वर्ण्यं रुचिकरमलं दीपनं चातिबल्यम् ।
नेत्र्यं मेधां जनयतितरां स्तन्यसम्वर्द्धनञ्च
क्षेत्रे स्थैर्य्यं वितरति परं दीपनं पुष्पकेतोः ॥७३॥
क्षिप्रं घोरां दलयति महारोगसंघातभीतिं
स्वान्ते प्रीतिं जनयति परं नर्महासे च यूनोः ।
देहे शक्तिं वितरतितरां वह्वपत्यप्रदात्रीं
कार्यालस्यं हरति सुतरामभ्रकं सेव्यमानम् ॥७४॥

गाङ्गेरुकी नागबला । समङ्गा मञ्जिष्ठा ॥६६-६८॥

उस्राज्यं गोघृतं नागभागिकमष्टभागिकं ग्राह्यम् ॥६९-७०॥

कन्या घृतकुमारी तस्या जलं षोडशभागिकम् । मेघः अभ्रकं दशभागिकम् । गोघृतं द्वादशभागिकम् ॥ अथवा केवलं गोघृतेन पाकादमृतीकरणम् । तथाचाहुः प्राचीना.—"तुल्यं घृतं मृताभ्रेण लोहपात्रे विपाचयेत् । घृते जीर्णे ततश्चूर्णं सर्वकार्य्येषु योजयेदिति । तथा चैवं मृताभ्रकस्यामृतीकरणसंस्कार उक्तः । भस्मनस्तु पुनरमृतीकरणेन गुणवृद्धिर्भवति । इति ॥७१-७२॥

मृताभ्रकगुणाः—परमशिशिरं अतिशीतवीर्यम् । अग्र्यं प्रधानम्, तथाच विशेषत आयुषो हितकरमित्यर्थः । पुष्पकेतोः कामस्य दीपनमित्यन्वयः । महारोगाणां ज्वरराजयक्ष्मरक्तपित्तादीनां संघातः समूहस्तज्जां भीतिं परिहरति ॥७३-७४॥

अथ अभ्रकस्य आमयिकः प्रयोगः ।

रससिन्दूरसंयुक्तं मृताभ्रं नाशयेज्ज्वरान् ।
सक्षौद्रं सकणञ्चापि जीर्णज्वरविनाशनम् ॥७५॥
सक्षौद्रं सवरं व्योम दृग्विशक्तिकरं परम् ।
सव्योषं सघृतञ्चैतद् ग्रहणीं नाशयेत् क्षणात् ॥७६॥
हरीतकीगुडोपेतं शर्करैलासमन्वितम् ।
मृताभ्रं सेव्यमानन्तु रक्तपित्तहरं परम् ॥७७॥
सव्योषं सवरञ्चैव चातुर्जातकसंयुतम् ।
सक्षौद्रं क्षपयेदर्शः पाण्डुक्षयहलीमकान् ॥७८॥
मृताभ्रं रजनीयुक्तं कणया मधुनापि च ।
मासमेकं लिहेत्प्राज्ञो मेहरोगाद्विमुच्यते ॥७९॥
मृतकाञ्चनसंयुक्तं मृताभ्रं माससेवितम् ।
धातुवृद्धिकरं पुंसां विशेषात्क्षयनाशनम् ॥८०॥
गुडूचीसत्वसंयुक्तं मेहवर्गप्रणाशनम् ।
तारस्वर्णयुतं त्वभ्रं शुक्रसन्तानकारकम् ॥८१॥
भूधात्रिकागोक्षुरचन्द्रबालासितान्वितं गव्यघृतेन लीढम् ।
संसेव्यमानं गगनं तु तूर्णं विनाशयेद् दारुणमूत्रकृच्छ्रम् ॥८२॥
क्षाराष्टकयुतं त्वभ्रं मूत्राघातं विनाशयेत् ।
अश्मरीं मूत्रकृच्छ्रञ्च विशेषादग्निदीपनम् ॥८३॥
मूर्वाक्वाथसमायुक्तं मृताभ्रं व्रणनाशनम् ।
पयस्यागव्यदुग्धाभ्यां परमं बलवर्द्धनम् ॥८४॥
भल्लातकान्वितं व्योम त्वर्शांसि क्षपयेद् ध्रुवम् ।
लवङ्गक्षौद्रसंयुक्तं धातुवृद्धिकरं परम् ॥८५॥
विजयास्वरसोपेतं जातीफलसमन्वितम् ।
मृताभ्रं जुषतां पुंसां शुक्रस्तम्भः प्रजायते ॥८६॥
विश्वभेषजकपौष्करान्वितं विप्रयष्टितुरगीसमन्वितम् ।
सेवितं समधु मारिताभ्रकं नाशयेज्झटिति मारुतामयम् ॥८७॥
अभ्रं कज्जलिकोपेतमर्जुनक्वाथभावितम् ।
कृमिजं श्लैष्मिकं वापि विनिहन्ति हृदामयम् ॥८८॥

अथास्य रोगयोग्यः प्रयोगः—सवरं त्रिफलायुक्तम् । चन्द्रबाला स्थूलैला । क्षाराष्टकं "सुधापलाशशिखरीचिञ्चार्कतिलनालजाः । स्वर्जिकायावशूकञ्च क्षाराष्टक-

ससितं सचतुर्जातं त्वभ्रं पित्तामयापहम् ।
अथवा ससितं गव्यदुग्धेन परिशीलितम् ॥८९॥
पिप्पलीरुद्फलक्षौद्रैर्मृताभ्रं मासंसेवितम् ।
अतिमात्रं निहन्त्याशु सर्वानेव कफामयान् ॥९०॥

सत्वानां वैशिष्टयम् ।

योगेषूपरसादीनां प्रयोगे सत्वयोजनम् ।
गुणोत्तरं भवेद्यस्मात्तस्मात्सत्वं विशिष्यते ॥९१॥

अभ्रकसत्वपातनस्य प्रथमः प्रकारः ।

पादांशसौभाग्यरजःसमेतं पिष्टं मुसल्याः स्वरसेन सार्द्धम् ।
कोष्ठ्यां निधायाभ्रकमत्र गाढं त्वाध्मापितं मुञ्चति सत्वमच्छम् ॥९२॥

द्वितीयः सत्वपातनप्रकारः ।

सम्पेषयेद्धनरजः खलु काञ्जिकस्थं
पश्चात्तथैव खलु सूरणकन्दतोयैः ।
रम्भार्द्रकन्दजरसैरपि भावयित्वा
तुर्यांशटङ्कणकणालघुमीनयुक्तम् ॥९३॥
संमेल्य सैरिभमलञ्च विधाय पिण्डान्
कोष्ठ्यां निधाय च ततः प्रधमेद् दृढाग्नौ ।
अभ्रं विमुञ्चति ततो निजसत्वमाशु
प्राज्ञः प्रयोगनिवहेषु नियोजयेद्वै ॥९४॥

तृतीयः सत्वपातनप्रकारः ।

वासायास्तण्डुलीयस्य कासमर्दस्य च द्रवैः ।
हंसपाद्याश्च मत्स्याक्ष्याः काण्डवल्ल्या द्रवैस्तथा ॥९५॥
पृथक् सम्पेष्य गगनं घर्मे संशोषयेद् बुधः ।
गोधूमचूर्णं सौभाग्यं क्षुद्रमीनांश्च वै पृथक् ॥९६॥
वस्वंशकं विनिक्षिप्य सम्यक् सम्पेषयेद् बुधः ।
पञ्चाजं पञ्चगव्यं वा घर्मे दत्वा विशोषयेत् ॥९७॥

मुदाहृतम्" इत्युक्तम् । पयस्या क्षीरकाकोली क्षीरविदारी वा । विप्रयष्टी भार्गी, तुरगी अश्वगन्धा । कज्जलिका समपारदगन्धा । अतिमात्रं अत्यर्थं कफामयान् हन्ति ॥७५-७९॥

सौभाग्यरजः टङ्कणचूर्णम् । स्पष्टमन्यत् ॥९१-९२॥

अथान्यः प्रकारः—अभ्रचूर्णं काञ्जिकेन सूरणतोयेन कदलीकन्दरसेन च पिष्ट्वा टङ्कणं पिप्पलीं क्षुद्रमत्स्यांश्चैकीकृत्य तच्चतुर्थांशं मेलयेत् । सैरिभमलं महिषीमलम् ॥९३-९४॥

काण्डवल्ली स्नुही । पञ्चाजं दधि दुग्धं घृतं मूत्रं पुरीषञ्चेति पञ्च द्रव्याणि

गोलकानथ निर्माय युक्त्या संस्थापयेद्भिषक् ।
अधःपातनकोष्ठयान्तु ध्मात्वा सत्वं समाहरेत् ॥९८॥

अथ चतुर्थः सत्वपातनप्रकारः ।

सौभाग्यं देवधूपश्च गुडः सर्जरसस्तथा ।
ऊर्णा लाक्षा च पिण्याकं क्षुद्रमीनस्तथैव च ॥९९॥
छागीदुग्धेन सम्पेष्य विदध्याद् गोलकान् भिषक् ।
स्थापयेद् वज्रमूषायां गगनं कृतगोलकम् ॥१००॥
कोष्ठिकायां निधायाथ तीव्राग्नौ प्रधमेद् घनम् ।
अनेन विधिना सत्वं द्रुतमेव प्रजायते ॥१०१॥

अभ्रकसत्वस्य पिण्डीकरणम् ।

मित्रपञ्चकसंयुक्तं खसत्त्वं चूर्णसन्निभम् ।
मूषायां विनिधायाथ प्रधमेत्कोकिलानले ॥१०२॥
इत्थं तीक्ष्णतरं ध्मातमेकतां याति कांस्यवत् ।
पिण्डीभूतं ततः सत्वं शोधनार्थं प्रयोजयेत् ॥१०३॥

अभ्रकसत्वस्य सामान्यं शोधनम् ।

त्रिफलासलिले वापि वटमूलकषायतः ।
अम्लेन काञ्जिकैर्वापि खसत्वं शोधयेद्भिषक् ॥१०४॥

विशेषशोधनम् ।

सत्वस्य गोलकं ध्मात्वा भृशं सन्तापयेद् बुधः ।
काञ्जिके चाथ निर्वाप्य लोहदण्डेन कुट्टयेत् ॥१०५॥
पुनः पुनः सम्प्रताप्य यावदायाति चूर्णताम् ।
गोघृतेन त्रिधा वापि धात्रीनीरेण भर्जयेत् ॥१०६॥
भर्जने भर्जने कार्यं खल्वे सत्वविमर्दनम् ।
ततः पुनर्नवानीरैः सिंहास्यस्वरसेन च ॥१०७॥
काञ्जिकेनापि सम्मेल्य भृशं सम्पेषयेद्भिषक् ।
इत्थं विशोधितं व्योमसत्वं मारणसम्मतम् ॥१०८॥

अजासंभवानि । एवं पञ्चगव्यमपि ज्ञेयम् ॥९५-९८॥

देवधूपः गुग्गुलुः, पिण्याकं तिलकल्कः ॥९९-१०१॥

मित्रपञ्चकं आज्यं गुञ्जा सौभाग्य क्षौद्रं गुग्गुलुश्चेति । आहुश्च—"कणशो यद् भवेत् सत्वं मूषायां प्रणिधाय तत् । मित्रपञ्चकयुग्ध्मातमेकीभवति घोषवत्" इति ॥१०२-१०३॥

त्रिफलासलिलादिषु निर्वापणात् सामान्या शुद्धिरस्य ॥१०४॥

सिंहास्यः वासा, मारणाय सम्मतमिति विग्रहः ॥१०५-१०८॥

अभ्रकसत्वस्य मारणम्।

विशोधितं व्योमसत्वं तदर्धं सूतगन्धकम्।
निक्षिप्य मर्दयेत्खल्वे काचकूपीगतं ततः ॥१०६॥
पचेत्तु वालुकायन्त्रे विधानज्ञो भिषग्वरः।
इत्थं नातिचिरादेव खसत्वं याति पञ्चताम् ॥११०॥

द्वितीयो मारणप्रकारः।

द्वौ भागा घनसत्वस्य भागश्च रसगन्धयोः।
श्लक्ष्णपिष्टं ततः कृत्वा सप्तवारं प्रयत्नतः ॥१११॥
गोमयाग्नौ पचेत्प्राज्ञः खसत्वस्य मृतिर्भवेत्।
एवं मृतं व्योमसत्वं वीतशङ्कः प्रयोजयेत् ॥११२॥

अभ्रसत्वस्य गुणाः।

अभ्रसत्वं सुशिशिरं मधुरं रुचिरं परम्।
सुस्निग्धं केश्यमायुष्यं त्रिदोषघ्नं रसायनम् ॥११३॥
प्रौढाङ्गनामदविचूर्णनचारुदक्षः सिंहोपमप्रचुरपुत्रवृतः सुवृत्तः।
लावण्यपूरपरिपूरितवक्त्रचन्द्रो जीवेच्छतञ्च शरदां घनसत्वसेवी ११४
मृताभ्रसत्वादपरं भैषज्यं नास्ति पुष्टिदम्।
विशेषात् पुंस्त्वजननं वयसः स्थापनन्तथा ॥११५॥
नास्त्यनेन समं लोके निर्विकारं गुणोत्तरम्।
त्रिदोषघ्नञ्च भैषज्यं त्वन्यद् भैषज्यमण्डले ॥११६॥

अभ्रकसेविनां वर्जनीयानि वस्तूनि।

करीरं-कारवेल्लञ्च कर्कटीं कोलमम्लकम्।
तैलं क्षारञ्च वृन्ताकं नाश्नीयादभ्रसेवकः ॥११७॥

अभ्रकसत्वमारणप्रकारौ व्याख्यासमौ ॥१०६-११२॥

अथास्य गुणाः—अभ्रकसत्वं सुशिशिरं शीतवीर्य्यम्, सुवृत्तः सदाचारी, तथा चाहुः स्म पूर्वे—"सत्वमभ्रस्य शिशिरं त्रिदोषघ्नं रसायनम्। विशेषात् पुंस्त्वजननं वयसः स्तम्भनम्परम्। नानेन सदृशं किञ्चिद् भैषज्यं पुंस्त्वकृत्परम्। सत्वसेवी वयःस्तम्भं लभते नात्र संशयः॥" इति। अपिच "यत्रोपरसभागोऽस्ति योगे तत्सत्वयोजनम्। कर्तव्यं षड्गुणाधिक्याद्रसज्ञत्वमभीप्सता।" इति च ॥११३-११६॥

करीरमित्यादिना वर्ज्यवस्तूनि गगनसेविनाम्। उक्तञ्च रसमाधवे—"क्षाराम्लं विदलं कोलं कर्कटीं कारवेल्लकम्। वृन्ताकञ्च करीरञ्च तैलञ्चाभ्रे विवर्जयेत्।" इति ॥११७॥

अभ्रकस्य प्रथमः कल्पः ।

मृताभ्रं व्योषसंयुक्तं विडङ्गामलकान्वितम् ।
केशराजरसेनेह सलिलेनैव वा भिषग् ॥११८॥
खल्वे सम्पेषयेत्प्राज्ञः गुटिकाः कारयेत्ततः ।
छायायां शोषयित्वा च काचकुम्भे निधापयेत् ॥११६॥
एकैकां गुटिकां प्राज्ञः समश्नीयान्निरन्तरम् ।
मासषट्कं त्रिमासं वा वैद्यवाचि कृतादरः ॥१२०॥
दिव्यदृष्टिर्दीर्घकायो दिनेशद्युतिदीप्तिमान् ।
दृढदन्तो भवेद्रूपे द्वितीय इव दर्पकः ॥१२१॥
अन्त्रशोषं त्वस्थिशोषं शोषं यक्ष्माणमुल्वणम् ।
चिरोत्थितान् पञ्चकासान् सभेदं श्वासमुद्धतम् ॥१२२॥
अर्शांसि ग्रहणीं पाण्डुं कामलां कुम्भकामलाम् ।
कुष्ठान्यष्टादशात्यर्थं निहन्यादामवातकम् ॥१२३॥
वातपित्तकफोद्भूतान् मृत्युकल्पानिहामयान् ।
सर्वानेव निहन्त्याशु वज्रकल्पोऽयमादिमः ॥१२४॥

अभ्रकस्य द्वितीयः कल्पः ।

अभ्रायःसूतवलयः दिगङ्गयुगदृङ्मिताः ।
भावयेत्तु वरानीरैः सप्तवारं विधानतः ॥१२५॥
भृङ्गद्रावैः पृथक् तद्वत् शिग्रुतिक्ताग्निजैर्द्रवैः ।
गुटिकाः कारयित्वा च स्थापयेत्काचभाजने ॥१२६॥
कणया त्वथ जीर्णेन गुडेनापि समन्विताम् ।
एकैकां गुटिकां खादेद्दोषानामयान् हरेत् ॥१२७॥
षण्मासाज्जायते मर्त्यो भीमसेन इवापरः ।
प्रज्ञया गुरुसोदर्यश्चक्षुषा गरुडोपमः ॥१२८॥

इति अभ्रकविज्ञानीयो नाम दशमस्तरङ्गः ।

---

शोषं मांसादीनाम्, उल्वणं यक्ष्माणं पूर्णलक्षणमिति यावत् । सभेदं तमकादिभेदयुक्तम् । आदिमः प्रथमः वज्रकल्पः अभ्रकरसायनप्रयोगः ॥

अभ्रं दशभागिकम्, लौहस्य षड्भागाः, सूतस्य चत्वारः, गन्धकस्य द्वौ भागौ, तिक्ता कटुकी, अग्निश्चित्रकः ॥१२५-१२८॥

## अथ तालकादिविज्ञानीय एकादशस्तरङ्गः

अथ तालकस्य नामानि ।

हरितालं मतं तालं तालकं नटभूषणम् ।
नटमण्डनकञ्चापि मतं शैलूषभूषणम् ॥१॥
विडालकं चित्रगन्धं पिञ्जरं वंशपत्रकम् ।
आलं पीतनकञ्चापि कथितं मल्लगन्धजम् ॥२॥
तालकं जायते यस्मान्मल्लगन्धकमिश्रणात् ।
तस्माद्भिषग्वरैरेतन्मल्लगन्धजमुच्यते ॥३॥

तालकस्य द्वौ भेदौ

तालकं द्विविधं ख्यातं रससिद्धैः पुरातनैः ।
प्रथमं पत्रतालं स्याद् द्वितीयं पिण्डतालकम् ॥४॥

पत्रतालकस्य स्वरूपम् ।

सुवर्णवर्णं विमलं गुरु चापि महोज्ज्वलम् ।
तनुपत्राचितं स्निग्धं मतं तत्पत्रतालकम् ॥५॥

पिण्डतालस्य स्वरूपम् ।

निष्प्रभं स्वल्पसत्वञ्च पत्रहीनं तथा लघु ।
विशेषतः पिण्डरूपं स्मृतं तत्पिण्डतालकम् ॥६॥

पत्रपिण्डतालयोर्वैशिष्ट्यम् ।

पत्रतालं त्रिदोषघ्नं कुष्ठरोगहरं परम् ।
वातरक्तप्रशमनं परमेतद्रसायनम् ॥७॥
पिण्डतालं समाख्यातं भृशं स्त्रीपुष्पहारकम् ।
पत्रतालात्स्वल्पगुणं विशेषाद्ज्ञेयमेव तत् ॥८॥

कृत्रिमतालस्य निर्माणप्रकारः ।

विशोधितं शङ्खविषं मरुत्सङ्ख्यकभागिकम् ।
तत्वभागिकमत्यच्छं गन्धकं विमलीकृतम् ॥९॥

तालकनामानि तन्त्रे व्यवहार्य्याणि । मल्लगन्धजमिति नवीननामकल्पने हेतुगर्भं निर्वचनमाह—तालकं जायते यस्मादित्यादि । सोऽयं कृत्रिमो निर्माणप्रकारः प्राचीनानुक्तोऽपि शिष्यबोधायोद्भावितः ॥१-४॥

सुवर्णवर्णमिति पत्रतालकमुत्कृष्टं लक्षणतः । पिण्डतालकरूपं व्याख्यासमम् ॥५-६॥

परं अतिशयेनेति यावत् । पत्रपिण्डतालयोर्भेदः सत्वतारतम्यात् सहेतुकः । तत्र निःसत्वं पिण्डतालन्तु हेयमेवेति ॥७-८॥

शङ्खविषं श्वेतमल्लं ४६ भागिकम्, गन्धकं २४ भागिकम् । स्पष्टमन्यत् ॥

खल्वे निक्षिप्य यत्नेन मेलयेत्तु शनैः शनैः ।
मिलितं तु ततो ज्ञात्वा विधानज्ञो भिषग्वरः ॥१०॥
पचेन्मन्दानलेनैतद् यन्त्रे डमरुकाभिधे ।
स्वाङ्गशीते ततश्चोर्ध्वसंलग्नं तालकं हरेत् ॥११॥
विशुद्धमल्लगन्धाभ्यां तालकं यदि निर्मितम् ।
भिषग्वरस्तदा तालं नैवेह खलु शोधयेत् ॥१२॥

अशोधिततालकस्य दोषाः ।

[ गीतिका ]

अविशोधितं तु तालं परिशीलितं प्रकामम् ।
जनयत्यनल्पदाहक्षोभप्रकम्पतोदान् ॥१३॥
मलिनीकरोति गात्रं प्रकरोति कुष्ठभीतिम् ।
कमनीयतां प्रकामं विनिहन्ति कायजाताम् ॥१४॥
अशुद्धं तालकं कुर्याद् रोगान् वातकफोद्भवान् ।
मृत्युशङ्काकरान् यस्माद् भिषक् तस्माद्विशोधयेत् ॥१५॥

तालकशोधनस्य प्रथमः प्रकारः ।

[ गीतिका ]

सुविचूर्णितं तु तालं खलु पोट्टलीगृहस्थम् ।
नवनिम्बुकोत्थधारा त्विह दोलिकाख्ययन्त्रे ॥१६॥
विपचेद्विधानविज्ञः सततं तु याममेकम् ।
गृहवारिणा च यामं विमलत्वमेति नूनम् ॥१७॥
विधिना ह्यनेन यत्नाद्विमलीकृतं तु तालम् ।
विनियोजयेद्रसादौ नियतं तु वीतशङ्कः ॥१८॥

द्वितीयः शोधनप्रकारः ।

तालकं चूर्णयित्वा तु पोट्टल्यां विनिधाय च ।
दोलायन्त्रे पचेद्यामं कूष्माण्डसलिले भिषक् ॥१९॥

अशुद्धतालकदोषाः दाहक्षोभादयः । उक्तञ्च—"हरति च हरितालं चारुतां देहजातां सृजति च बहुतापानङ्गसङ्कोचपीडाः । वितरति कफवातौ कुष्ठरोगं विदध्यादिदमशितमशुद्धं मारितं वाप्यसम्यक् ॥" इति । अशुद्धं हि यानुद्भावयति व्याधीन्, शुद्धं सत् तानेव शमयतीति विशेषः ॥१३-१५॥

तालकशोधनस्य प्रथमः प्रकारः—पोट्टलीगृहं पोट्टलीमध्यम् । वीतशङ्कः विगतसन्देहः । यामद्वयं कूष्माण्डसलिलादिषु स्वेदनाद् द्वितीयः प्रकारः, केचित्तु टङ्कणकणान् तालके मेलयित्वा दोलायन्त्रे शोधयन्ति कूष्माण्डसलिलादिभिः । तालचूर्णं तिलक्षारजलेन स्वेदितं याममात्राच्छुध्यतीति तृतीयः सरलः

यामैकं चूर्णतोयेन त्रैफलेन जलेन वा।
इत्थं यामद्वयेनैव शुद्धिमायात्यनुत्तमाम् ॥२०॥

तृतीयः शोधनप्रकारः।

तालचूर्णन्तु पोट्टल्यां न्यस्य दोलागतं पचेत्।
तिलक्षारजलेनैव याममात्रं भिषग्वरः ॥२१॥
यामैकं स्वेदनादेवं तालं शुद्धिमवाप्नुयात्।
इत्थं विशोधितं तालं वीतशङ्कः प्रयोजयेत् ॥२२॥

चतुर्थः शोधनप्रकारः।

पोट्टल्यां निहितं तालचूर्णं दोलागतं पचेत्।
शाल्मलीमूलतोयेन याममेकं भिषग्वरः ॥२३॥
यामैकं स्वेदनादेवं तालकं शुद्धिमाप्नुयात्।
अथवा तद्द्रवेणैव दिनसप्तकभावनात् ॥२४॥

पञ्चमः शोधनप्रकारः।

चूर्णीकृतं पत्रतालं चूर्णनीरेण भावयेत्।
सप्तवारं प्रयत्नेन शुद्धिमायात्यनुत्तमाम् ॥२५॥

तालकमारणस्य प्रथमः प्रकारः।

विमलं तालमादाय भिषक् पौनर्नवे रसे।
दिनैकं खल्वयन्त्रे च पेषयित्वाऽथ शोषयेत् ॥२६॥
घनीभूतं ततो ज्ञात्वा चक्रिकाः कारयेद्भिषक्।
सम्यक् ताः शोषयित्वा च भस्मयन्त्रेण वै पचेत् ॥२७॥
क्षारैः पौनर्नवैश्चात्र स्थाल्यर्द्धं परिपूरयेत्।
निधाय चक्रिकाश्चाथ क्षारैस्तैरेव पूरयेत् ॥२८॥
वह्निं प्रदापयेत् यत्नाद्विधानज्ञो निरन्तरम्।
मल्लगन्धजमेवन्तु म्रियते नात्र संशयः ॥२९॥

द्वितीयो मारणप्रकारः।

विमलं हरितालन्तु पञ्चतोलकसंमितम्।
पिप्पलत्वक्कषायेण वस्त्रपूतेन भावयेत् ॥३०॥

प्रकारः। शाल्मलीमूलक्वाथेनैवमेव चतुर्थः। चूर्णोदकेन प्रागुक्तपरिभाषेण सप्तधा भावनात् पञ्चमः ॥१९-२५॥

अथ मारणप्रकारः प्रथमः—पुनर्नवारसैर्घृष्टं तत्क्षारान्तर्निवेशितम्। क्रमवृद्धाग्निना पश्चात् पचेच्च दिवसत्रयम्। भावप्रकाशमते सततं पञ्चदिनानि पाकः कार्यः। उक्तं तत्र—"दिनान्यन्तरशून्यानि पञ्च वह्निं प्रदापयेदिति।" वस्त्रपूतेन भस्मना इति अत्र वक्तव्यं प्रागुक्तं यद्यपि तथापि सौकर्यार्थं स्मारयामः। भस्म चेद्वस्त्रपूतं न क्रियेत अमसृणं स्थूलं तत् धूमनिरोधायालं न स्यात्, तस्मात्

एकविंशतिवाराणि कुर्यादेवं प्रयत्नतः ।
चक्रिकां कारयित्वा च भस्मयन्त्रेण पाचयेत् ॥३१॥
पिप्पलत्वग्भवेनात्र वस्त्रपूतेन भस्मना ।
स्थाल्यर्द्धं पूरयित्वा च चक्रिकां स्थापयेद्भिषक् ॥३२॥
तेनैव भस्मना चाथ शेषं भागं प्रपूरयेत् ।
स्थालीं चुल्ल्यां निधायाथ पचेद्यामचतुष्टयम् ॥३३॥
मल्लगन्धजमेवन्तु मृतिमाप्नोति निश्चितम् ।
एवं मृतं तालकन्तु वीतशङ्कः प्रयोजयेत् ॥३४॥

तृतीयो मारणप्रकारः ।

विमलं हरितालन्तु पञ्चतोलकसंमितम् ।
अर्कक्षीरे दशगुणे पेषयेद्भिषजां वरः ॥३५॥
चक्रिकां कारयित्वा च शोषयेदातपे पुनः ।
भस्मयन्त्रेण मतिमान् पचेद्युक्तिपुरःसरम् ॥३६॥
पलाशभस्मना चात्र वस्त्रपूतेन पूरयेत् ।
स्थाल्यर्द्धञ्च ततो मध्ये चक्रिकां स्थापयेद्भिषक् ॥३७॥
भस्मना चाथ तेनैव भागं शेषं प्रपूरयेत् ।
चतुर्यामं पचेद्धीमान् श्वेतं भस्म समाहरेत् ॥३८॥

चतुर्थो मारणप्रकारः ।

विमलं पत्रतालन्तु तत्तुल्या मृतशुक्तिका ।
खल्वे सम्पेषयेद्यामं कुमारीस्वरसेन वै ॥३९॥
निर्माय चक्रिकां तस्य शोषयेदातपे भिषक् ।
शरावसम्पुटे न्यस्य ततो लघुपुटे पचेत् ॥४०॥
स्वाङ्गशीतं ततो ज्ञात्वा भस्म निश्चन्द्रिकं हरेत् ।
इत्थं मृतं तालकन्तु कुष्ठरोगहरं परम् ॥४१॥

पञ्चमो मारणप्रकारः ।

विमलं पत्रतालन्तु त्रिवारं भावयेद्भिषक् ।
पलाशमूलजैः क्वाथैर्घनीभूतैर्विधानतः ॥४२॥
माहिषेण च मूत्रेण भावयेच्च ततः परम् ।
कपोताख्यपुटेनैव पचेत्तालं भिषग्वरः ॥४३॥

श्लक्ष्णमसृणं वस्त्रपूतं विधेयमिति । अर्कदुग्धेन पिष्टं श्लक्ष्णीभूतं साधु भस्मीभवनीति व्याचष्टे अर्कक्षीरे दशगुणे इति । सर्वमन्यत् पारिभाषिकं पूर्ववदेव । चतुर्थो मारणप्रकारो मृतशुक्तिकया, अस्मिन् गुणविशेषः कुष्ठनाशन इति ।

एवं पुटैर्द्वादशभिस्तालकं मृतिमाप्नुयात् ।
इत्थं मृतं तालकन्तु वीतशङ्कः प्रयोजयेत् ॥४४॥

षष्ठो मारणप्रकारः ।

विमलं पत्रतालन्तु कन्यकाद्भिर्विमर्दयेत् ।
चक्रिकां कारयित्वा च शोषयेदातपे भिषक् ॥४५॥
विधाय गोमये गर्तं तस्मिन् डिण्डीरचूर्णकम् ।
तालोन्मितं तु विन्यस्य चक्रिकां स्थापयेत्ततः ॥४६॥
पुनस्तेनैव चूर्णेन सम्यगाच्छाद्य चक्रिकाम् ।
पुटेन्महापुटेनैव भूमौ गर्तेऽथवा भिषक् ॥४७॥
स्वाङ्गशीतं ततो ज्ञात्वा गोमयान्यपसारयेत् ।
शरदिन्दुनिभं पश्चान्मृतं तालं समाहरेत् ॥४८॥
तालं सञ्चूर्ण्य खल्वे च काचकुप्यां तु विन्यसेत् ।
इत्थं मृतं तालकन्तु नाशयेद्विषमज्वरम् ॥४९॥
तण्डुलैकामितं दद्यादेकवारं तु वासरे ।
श्रीमन्नरेन्द्रनाथाख्यैः गुरुवर्यमहोदयैः ॥५०॥
आविष्कृतोऽनुभूतश्च सुगमोऽयं विधिर्वरः ।
प्रकाशितः खलु मया लोकानुग्रहकाम्यया ॥५१॥

मृततालकस्य गुणाः ।

मृतं तालं हरेद् घोरं फिरङ्गं सुचिरोत्थितम् ।
वातरक्तं विसर्पञ्च विपादीश्च विचर्चिकाम् ॥५२॥
विविधानि च कुष्ठानि ह्यर्शांसि विषमज्वरम् ।
रोगं फिरङ्गजं हन्यादपस्मारं भगन्दरम् ॥५३॥
व्रणं नाडीव्रणञ्चापि विस्फोटमतिदारुणम् ।
वातरक्तभवान् रोगानन्यानपि हरेद् भृशम् ॥५४॥

शुद्धतालकस्य गुणाः ।

विमलं तालकं स्निग्धं भूतज्वरविनाशनम् ।

पञ्चमः द्वादशपुटैः शनैः शनैः भस्मीकरणोपयोगी । घनीभूतैरिति मधुनिभैः ॥ अथानुभूतचरः षष्ठो मारणप्रकारः—डिण्डीरः समुद्रफेनः, भूमौ इति गर्ताभावेऽपि इत्यर्थः । अत्र विशेषः समुद्रफेनचूर्णकमपि वह्नियोगात् पिण्डितमत्र मिलतीति तत्संयुक्तमेव तालभस्म सम्पद्यते न वियुक्तम् । निर्धूमन्तु भवत्येव । सुगमोऽयं प्रकारः ॥२६–५१॥

फिरङ्गं उपदंशविशेषम् । तस्योपद्रवांश्च ॥५२–५४॥

त्वच्यं कुष्ठादिशमनं कथितं च रसायनम् ॥५५॥

हरितालस्य मात्रा ।

पादांशतो रक्तिकाया रक्तिकार्द्धमितं परम् ।
विमलं च मृतं तालं प्रयुञ्जीत भिषग्वरः ॥५६॥

मृततालकस्य परीक्षणम् ।

काचपात्रे क्षिपेत्तोयं लवणद्रावकान्वितम् ।
तस्मिञ्जले तु गुञ्जैकं मृतं तालं विनिक्षिपेत् ॥५७॥
सन्तापयेत्ततस्तोयं विधानज्ञो भिषग्वरः ।
पीतवर्णं यदा चूर्णं पतन् पात्रतले विशेत् ॥५८॥
मृतं तालकमेवेदं जानीयात्तु तदा भिषक् ।
अन्यथाऽन्यस्य धात्वादेर्भस्मेदमिति निर्दिशेत् ॥५९॥

अथ तालकस्य आमयिकः प्रयोगः ।

वासायाः कण्टकार्या वा रसेन परिशीलितम् ।
तालकं नाशयेत्कासं श्वासं परमदारुणम् ॥६०॥
आम्रगन्धहरिद्राया स्वरसेन च शीलितम् ।
सर्वरक्तविकाराणां तालकं परमौषधम् ॥६१॥
वचाजीरकचूर्णाभ्यामपस्मारहरं परम् ।
पञ्चतिक्तकषायेण कुष्ठरोगं विनाशयेत् ॥६२॥
देवदालीद्रवेणेह तालकं परिशीलितम् ।
वातरक्तकृतान् रोगान् सर्वानेव विनाशयेत् ॥६३॥
वन्ध्याकर्कोटकीद्रावैर्विसर्पं दारुणं हरेत् ।
कुमारीस्वरसेनेह त्वग्रोगानाशु नाशयेत् ॥६४॥
चेतकीचूर्णयोगेन हरेदर्शांसि सत्वरम् ।
हरिद्रास्वरसेनाशु पाण्डुरोगं विनाशयेत् ॥६५॥
गुडूचीसत्वसंयुक्तं तालं वातास्रनाशनम् ।
ताम्बूलेन क्षयं हन्यात्प्रमेहं सुरसारसैः ॥६६॥

भूतज्वरो जीवाणुसम्पर्कजो विषमज्वरः । त्वच्य त्वग्रोगनाशनमित्यर्थः । रसायनं जराव्याधिहरम् ॥५५॥

शुद्धस्य सुमृतस्य च तालस्य गुञ्जार्धं यावन्मात्रा नाधिका ॥५६॥

अथ मृततालकपरीक्षणं लवणद्रावको वक्ष्यमाणप्रकारः । अन्यथेति पीतवर्णचूर्णाभावे सति अन्यस्य तालकाद् भिन्नस्य ॥५७-५९॥

अथास्य रोगयोग्यः प्रयोगः—आम्रगन्धहरिद्रा आंबाहलदीत्याख्या । पञ्चतिक्तं गुडूची निम्बमूलत्वक् वासकः निदिग्धिका पटोलपत्रमित्येतदुक्तम् ।

अजामूत्रेण संयुक्तं हरेत्तूर्णं जलोदरम् ।
पिप्पलीमधुसंयुक्तं वह्निमान्द्यं विनाशयेत् ॥६७॥
मरीचकज्जलीयुतं विषान्वितं च तालकम् ।
समं विमर्द्य वारिणा वटी तु गुञ्जसंमिता ॥६८॥
कृता निषेविता ततः प्रलापमोहसंयुतम् ।
निहन्ति दुर्जलज्वरं ज्वरं च सान्निपातिकम् ॥६९॥
सतुत्थशङ्खतालकं यथोत्तरं विवर्द्धितम् ।
सहारसेन पेषितं विपाचितं विधानतः ॥७०॥
यवोन्मितं तु सेवितं यथानुपानयोगतः ।
निहन्ति दुर्जलज्वरं ज्वरं च भूतसङ्गजम् ॥७१॥
सताम्रकज्जलीयुतं तु तालकं विशोधितम् ।
विभाव्य निम्बवारिणा नवेन चेन्द्रवारकम् ॥७२॥
निषेवितं तु गुञ्जकं ज्वरस्य यामपूर्वकम् ।
निहन्ति भूतषङ्गजं ज्वरं परं सुदारुणम् ॥७३॥
नवसादरचूर्णेन तालकं परिपेषितम् ।
लेपेन नाशयत्येव वृश्चिकार्तिं सुदारुणाम् ॥७४॥
लवङ्गचोचकर्पूरसंयुक्तं शुक्रमेहहृत् ।
जातिपत्रीकुङ्कुमाभ्यां प्रतिश्यायं व्यपोहति ॥७५॥
अपामार्गशिफाक्षारयुतं तु हरितालकम्
प्रलिप्तं चिरसञ्जातं हन्ति लिङ्गार्शसं द्रुतम् ॥७६॥
सव्योषताम्रं तालं तु वातशूलहरं परम् ।
जातीफलसमायुक्तं बलवृद्धिकरं मतम् ॥७७॥

तालकोदयमलहरः ।

सिक्थतैलं तु विमलं त्रिंशत्तोलकसंमितम् ।
द्वितोलकमितं तालं कूष्माण्डद्रवशोधितम् ॥७८॥
श्लक्ष्णपिष्टा कज्जलिका निशा खादिरसारकम् ।
गैरिकं गिरिसिन्दूरं पृथक् तोलकसंमितम् ॥७९॥

ताम्बूलेन क्षयमिति—यद्यपि ताम्बूलं शोषिणामपथ्यं तथापि भेषजसंयोगप्रभावात् ज्ञेयम् । अथवा चूर्णखादिरादिवर्जितं ताम्बूलपत्रमादेयमिति विशेषः । दुर्जलज्वरः वर्षासु जातो विषमज्वरः । चतुर्दशवारं नवीनेन निम्बजलेन भावना ॥

मनःशिला च विमला तोलकार्द्धमिता तथा ।
सम्मेल्य खल्वे यत्नेन काचकुप्यां तु विन्यसेत् ॥८०॥
मतो मलहरोऽयं तु तालकोदयसंज्ञकः ।
नानादोषसमुद्भूतव्रणवर्गनिषूदनः ॥८१॥
विचर्चिकादद्रुकुष्ठपामाविस्फोटनाशनः ।
नाडीव्रणहरश्चैव समाख्यातो विशेषतः ॥८२॥

प्रथमं रसमाणिक्यम् ।

द्विकर्षं पत्रतालन्तु कूष्माण्डसलिलेन वै ।
विभावयेत्सप्तवारं त्रिवारं वा विधानतः ॥८३॥
ततो दध्नाऽथवाम्लेन तथैव तु विभावयेत् ।
प्रक्षालयेत्ततस्तोयैः प्रतप्तैस्तु भिषग्वरः ॥८४॥
मध्येऽभ्रपत्रयोर्न्यस्य शरावे विन्यसेद्भिषक् ।
शरावेणापरेणेह छादयेद्यत्नतः पुनः ॥८५॥
बदरीपत्रकल्केन विदध्यात्सन्धिलेपनम् ।
आतपे चाथ संशोष्य वालुकायन्त्रगं पचेत् ॥८६॥
मध्यमेनाग्निना यत्नात् होरात्रितयसंमितम् ।
स्वाङ्गशीतं समुद्धृत्य माणिक्याभं हरेद्रसम् ॥८७॥
मात्रा रक्तिद्वयमिता रसो माणिक्यसंज्ञितः ।
वातरक्तं हरेद् घोरं फिरङ्गञ्चातिदारुणम् ॥८८॥
विविधानि च कुष्ठानि तथा नाडीव्रणं हरेत् ।
नासास्यप्रभवान् रोगान् नाशयेन्नात्र संशयः ॥८९॥

द्वितीयं रसमाणिक्यम् ।

विमलं पत्रतालन्तु द्रवैः कूष्माण्डसम्भवैः ।
विभावयेत्सप्तवारं दध्ना चाम्लेन वा तथा ॥९०॥
प्रक्षाल्य तप्ततोयेन यत्नतश्चूर्णयेद्भिषक् ।
माषद्वयोन्मितं तालं न्यसेन्मध्येऽभ्रपत्रयोः ॥९१॥
अङ्गाराग्नौ निधायाथ वङ्कनालेन धुत्तयेत् ।
माणिक्याभं भवेद्यावत् पचेत्तावत्प्रयत्नतः ॥९२॥

रसमाणिक्यस्याद्यः प्रकारः—प्रतप्ततोयैः क्षालनं नैर्मल्यार्थम् । क्षालनानन्तरं घर्मे शोषयित्वाभ्रपत्रयोः संस्थाप्यम् । अथापरः प्रकारः—अभ्रपत्रमध्ये तालकं स्थापयित्वा स्वल्पेष्वप्यङ्गारेषु पाको विधीयते । माषद्वयोन्मितमित्यल्पपरिमाणग्रहणं पाकसौकर्य्यार्थम् । अभ्रपत्रञ्च प्रतनुकं व्रणरहितं श्वेताभ्रकीयं

अङ्गारानपसार्याथ रसमाणिक्यमुद्धरेत् ।
वारं वारं ततश्चैवं कृत्वा माणिक्यमाहरेत् ॥९३॥

तालकसत्वपातनस्य प्रथमः प्रकारः ।

तालं पलद्वयमितं सौभाग्यं तत्समं हरेत् ।
भावयेन्मेषिकादुग्धैः कूष्माण्डसलिलैस्ततः ॥९४॥
कुमारीस्वरसेनाथ निम्बूकस्य द्रवेण च ।
ततः समन्तदुग्धायाः पयसा तु विभावयेत् ॥९५॥
विभाव्य च रविक्षीरे रुबुतैलेन पेषयेत् ।
मध्वाज्येनापि सम्पेष्य वटकान् कारयेत्ततः ॥९६॥
काचकुप्यां निधायाथ वालुकायन्त्रमध्यगम् ।
मन्दाग्निनैव नियतं पचेद्दिनचतुष्टयम् ॥९७॥
स्वतःशीतं समुद्धृत्य विमलं कुलिशप्रभम् ।
ऊर्ध्वलग्नं तालसत्वं कूपीं भित्त्वा समाहरेत् ॥९८॥

द्वितीयः सत्वपातनप्रकारः ।

कूष्माण्डरससंशुद्धं तालं पलचतुष्टयम् ।
कुमारीस्वरसेनेह भावयेद्दिनसप्तकम् ॥९९॥
आतपे त्वथ संशोष्य चूर्णयेद्भिषजां वरः ।
काचकुप्यां निधायाथ वालुकायन्त्रगं पचेत् ॥१००॥
दिनानि सप्त नियतं विधानज्ञो भिषग्वरः ।
ऊर्ध्वलग्नं तालसत्वं पीताभं तु समाहरेत् ॥१०१॥
भागोऽष्टमस्तु गुञ्जायाः प्रयोक्तव्यो विधानतः ।
कुष्ठादौ योजयेद्धीमान् श्वित्रकुष्ठे विशेषतः ॥१०२॥

तालकविकारे भैषज्यम् ।

ससितं जीरकक्षोदं कूष्माण्डस्वरसन्तु वा ।
अश्नीयात्तालविकृतौ त्रिवारं त्वेकवासरे ॥१०३॥

ग्राह्यम् । प्रतनुकपत्रे सम्यक् पाको भवति । वारं वारमिति प्रभूततालस्य पाको माषद्वयविभागद्वारा विधेयः ॥८३-९३॥

तालकसत्वपातनस्य प्रथमः प्रकारः—तालकं १६ तो०, टङ्कणं १६ तो०, मेषीदुग्धकूष्माण्डकुमारीनिम्बुरसैः सेहुण्डदुग्धेन अर्कक्षीरेण एरण्डतैलेन मधुना घृतेन च पेषयेत् । गोलकान् विधाय वालुकायन्त्रे मन्दाग्निना पचेत् । कुलिशप्रभं हीरकसदृशं चाकचक्ययुक्तमित्यर्थः तालसत्त्वमाददीत ॥९४-९८॥

द्वितीयः सत्वप्रकारः सुगमः । तत्रहि पीताभं तालकसत्त्वं भवतीति विशेषः । सत्वस्य भक्षणयोग्या मात्रा गुञ्जाष्टमो भागः ॥९९-१०२॥

तालकविकारे सति तस्य शमनाय भैषज्यं जीरकचूर्णं कूष्माण्डरसो वा । स्पष्टमन्यत् ॥१०३॥

## अथ मनःशिलाया नामानि ।

मनःशिला रोगशिला शिला नैपालिका तथा ।
मनोगुप्ता मनोज्ञा च मनोह्वा नागजिह्विका ॥१०४॥
कुनटी कुलटी गोला नागमाता च सा मता ।
कल्याणिका च सैवेह कथिता रसनेत्रिका ॥१०५॥

शोधनोचितशिलायाः स्वरूपम् ।

मनःशिला शिलाखण्डशून्या रक्तोत्पलप्रभा ।
भारे गुरुतरा दीप्ता शोधनार्हा मता बुधैः ॥१०६॥

अशोधितमनःशिलाया दोषाः ।

मनःशिला त्वशोधिता प्रमादतस्तु शीलिता ।
हरेद्बलं हि चारुता विनश्यतीह त्वग्गता ॥१०७॥
अशोधिता रोगशिला मलविष्टम्भकारिणी ।
मूत्ररोधकरी कामं मूत्रकृच्छ्रप्रवर्तिनी ॥१०८॥

मनःशिलायाः प्रथमः शोधनप्रकारः ।

सुधोदके निपातिता मनःशिला तु चूर्णिता ।
दिनत्रयाद्विनिर्गता भवेत्तु दोषवर्जिता ॥१०९॥

द्वितीयः शोधनप्रकारः ।

भृङ्गराजरसेनेह दोलायन्त्रे विपाचिता ।
चतुर्यामं रोगशिला शुद्धिमायात्यनुत्तमाम् ॥११०॥

तृतीयः शोधनप्रकारः ।

बीजपूररसेनेह भाविता तु मनःशिला ।
सप्तवारं विधानेन विशुध्यति न संशयः ॥१११॥

चतुर्थः शोधनप्रकारः ।

जयन्तीस्वरसेनेह दोलायन्त्रे विपाचिता ।
चतुर्यामं विधानेन विशुध्यति मनःशिला ॥११२॥

पञ्चमः शोधनप्रकारः ।

अगस्त्यपत्रस्वरसैर्भावयेत्सप्तवारकम् ।
मनःशिलां प्रयत्नेन, शुद्धिमायात्यनुत्तमाम् ॥११३॥

अथ मनःशिला—नैपालिका तद्देशजातत्वात् ॥१०४-१०५॥

उत्तममनःशिलापरिचयः—दीप्ता सचाकचक्या, शोधनार्हा आह्वेत्यर्थः ॥

अशोधिता शिला मलविष्टम्भकरी । मूत्ररोधो मूत्रकृच्छ्रश्चेति विकल्पः । समुच्चयो वा यथासम्प्राप्तिर्भवति ॥१०७-१०८॥

चूर्णोदके दिनत्रयं निमग्ना शुध्यति । भृङ्गरसे यामचतुष्टयं स्विन्ना च

षष्ठः शोधनप्रकारः।

आर्द्रकस्वरसेनेह मनोगुप्तां तु भावयेत्।
सप्तवारं विधानेन शुद्धिमाप्नोति सर्वथा ॥११४॥

अथ मनःशिलाया गुणाः।

मनःशिला कटुस्तिक्ता स्निग्धोष्णा लेखनी गुरुः।
कासश्वासहरा कामं भूतोपद्रवनाशिनी ॥ ११५ ॥
अग्निमान्द्यक्षयानाहहन्त्री कण्डूतिनाशिनी।
रसायनी ज्वरहरा वर्ण्या कामं विषापहा ॥११६॥

विशुद्धमनःशिलाया मात्रा।

तत्त्वांशतो रक्तिकायाः कलांशप्रमितां शिलाम्।
प्राणाचार्यः प्रयुञ्जीत बलकालाद्यपेक्षया ॥११७॥

मनःशिलाया आमयिकप्रयोगः।

वासकस्वरसोपेता त्र्यूषणक्षोदसंयुता।
मनःशिला शीलिता तु कासं श्वासं व्यपोहति ॥११८॥
पिप्पलीमरिचोपेता वारिणाञ्जनयोगतः।
नैपालिका तु नियतं नाशयद्विषमज्वरान् ॥११९॥
वैदेहीनिम्बबीजोत्थचूर्णोपेता मनःशिला।
कारवेल्लीरसैर्लीढा त्रिदोषज्वरहारिणी ॥१२०॥
सैन्धवमरिचमनोज्ञाशङ्खैः क्रमवृद्धभागसंमिश्रैः।
अपनयतीह निकामं नेत्रगदान् विधिवदुपयुक्ता ॥१२१॥
रसाञ्जनान्विता शिला कपोतगूथसंयुता।
शिला सुपेषिताञ्जनात्त्वपस्मृतिं विनाशयेत् ॥१२२॥
रजनीद्वयमञ्जिष्ठालाक्षारक्षोदान्विता शिला।
घृतक्षौद्रैः प्रलेपात्तु वर्ण्या त्वग्दोषनाशिनी ॥१२३॥

शुध्यति। बीजपूरो निम्बूकविशेषः। जयन्ती 'जयन्तर' इति भाषायाम्। अगस्त्यः तदाख्यः पुष्पतरुः प्रसिद्धः ॥१०६-११४॥

भूतोपद्रवाः जीवाणुजाताः व्याधयः। वर्ण्या वर्णप्रसादनी ॥११५-११६॥

अथास्या मात्रा—तत्त्वांशतो रक्तिकाया इति चतुर्विंशत्यंशत इति भावः। कलांशप्रमितां षोडशभागमिताम् ॥११७॥

रोगयोग्यः प्रयोगः—त्र्यूषणक्षोदः त्रिकटुचूर्णम्। कपोतगूथं कपोतविष्ठा। क्षारक्षोदः यवक्षारचूर्णम्। अथ प्रसङ्गान्मनःशिलीयो माणिक्यरसः—शुद्धवरनागस्याष्टौ तोलकानि, हिङ्गुलोत्थपारदस्याष्टौ तोलकानि, मनःशिलायाः शुद्धाया अष्टौ तोलकानि, शुद्धगन्धस्याष्टौ तोलकानि। वरनागं वह्निगलितं पारदेन सह सम्मेल्यातिश्लक्ष्णां पिष्टिं विधाय शिलागन्धाभ्यां सावधानतया पेषयेत्।

पिप्पलीनागरोपेता कपित्थरससंयुता।
लाजान्विता तु मधुना लीढा छर्दिं विनाशयेत् ॥१२४॥

अशुद्धमनःशिलाविकारे भैषज्यम्।

शिलाविकारोपहतः पिबेत्क्षीरं दिनत्रयम्।
मधुना पथ्यसंयुक्तो वान्त्यादिभ्यो विमुच्यते ॥१२५॥

मनःशिलाया निर्माणप्रकारः।

विशोधितं शङ्खविषं मरुद्भागमितं तथा।
विशुद्धं गन्धपाषाणं कलाभागिकमाहरेत् ॥१२६॥
खल्वे निक्षिप्य यत्नेन चूर्णयेद्भिषजां वरः।
चूर्णितञ्चाथ विन्यस्य यन्त्रे डमरुकाभिधे ॥१२७॥
पचेत्ततः स्वतःशीते कुनटीमूर्ध्वगां हरेत्।
प्रयोजयेद्विधानेन मात्रा सर्षपसंमिता ॥१२८॥

मनःशिलायाः सत्वपातनम्।

गुडगुग्गुलुकिट्टाज्यैस्त्वष्टमांशेन वै पृथक्।
शिला मूषागता कोष्ठ्यां ध्माता सत्वं विमुञ्चति ॥१२९॥

## अथ शङ्खविषस्य नामानि।

शङ्खमूषं शङ्खविषं गौरीपाषाणकं तथा।
दारुमूषं दारुमूषा दारुमोचश्च मल्लकः ॥१३०॥
फेनाश्मभस्मसंज्ञश्च सोमलः सम्वलं तथा।
आखुपाषाणकं चैव रसज्ञैः परिकीर्तितम् ॥१३१॥

शङ्खविषस्य द्वैविध्यम्।

मल्लस्तु द्विविधः प्रोक्तः श्वेतोऽन्यो रक्तकस्तथा।

वालुकायन्त्रे षोडश यामान् विपाचितो रससिन्दूराभो भवति माणिक्यो रसः। स च नागादिसम्पर्कजातो विशेषतः कफप्रधानं राजयक्ष्माणमाद्यावस्थायां दत्तो हन्ति। मात्रा रक्तिकार्द्धपर्यन्तमिति। योगोऽयं यक्ष्मचिकित्सासु रसमाणिक्यनाम्ना व्यवहृतः पूर्वैरिति ॥११८-१२४॥

अथमनःशिलानिर्माणप्रकारः—शङ्खविषं गौरीपाषाणक ४९ भागमितम्, गन्धकस्य १६ भागाः। मात्रा तु सर्षपमिता ॥१२६-१२८॥

किट्टं मण्डूरम् ॥१२९॥

अथ शङ्खविषनामानि तन्त्रे व्यवहृतानि। फेनाश्मभस्मेति सुश्रुततन्त्रनिर्दिष्टं नाम। तत्र हि धातुविषतया सङ्गृहीतमेतत्। उक्तं हि "फेनाश्मभस्म हरितालश्चेति धातुविषे"। क्वचिद् विकटनाम्नापि व्यवहृत इति ॥१३०-१३१॥

अथास्य भेदाः—श्वेतरक्तवर्णभेदेन मल्लो द्विधा इति सोऽयं द्वेधा विभागः

कृत्रिमः श्वेतमल्लस्तु रक्तश्चाकरसंभवः ॥१२२॥

अथ शङ्खविषस्य शोधनम् ।

सुचूर्णितं शङ्खविषं दृढं वस्त्रेण रोचयेत् ।
मेघनादरसेनैव दोलायन्त्रे विपाचयेत् ॥१२३॥
मृद्वग्निना दिनैकन्तु शुद्धिमायात्यनुत्तमाम् ।
इत्थं विशोधितं शङ्खविषं यत्नेन योजयेत् ॥१२४॥

मल्लशोधनस्य द्वितीयः प्रकारः ।

मल्लचूर्णं त्वाजरसैर्दोलायन्त्रे विपाचयेत् ।
दिनैकन्तु विधानज्ञो मल्लः शुद्धिमवाप्नुयात् ॥१२५॥

तृतीयः शोधनप्रकारः ।

कारवेल्लीरसेनेह दोलायन्त्रे द्वियामकम् ।
विपाचितं शङ्खविषं शुद्धिमायात्यनुत्तमाम् ॥१२६॥

चतुर्थः शोधनप्रकारः ।

विपाचितं शङ्खविषं यत्नतश्चूर्णाम्भसा ।
गव्यदुग्धेन वा यामं शुद्धिमायात्यनुत्तमाम् ॥१२७॥

विशुद्धमल्लस्य गुणाः ।

गौरीपाषाणकः स्निग्धो दोषघ्नो रसबन्धकृत् ।
कफवातामयहरः वृश्चिकादिविषप्रणुत् ॥१३८॥
मासमात्रप्रयोगेण श्वासं परमदारुणम् ।
विविधानि च कुष्ठानि नाशयेन्नैव संशयः ॥१३९॥
श्लीपदोत्थज्वरध्वंसी प्रकामं कामवर्धनः ।
सन्धिवातगदद्वेषी फिरङ्गकरिकेशरी ॥१४०॥
अग्निमान्द्यहरः कासं विषमज्वरनाशनः ।
कान्तिप्रदः परं जीर्णपाण्डुरोगनिषूदनः ॥१४१॥

योगरत्नाकराद्युक्त एव रसतन्त्रे व्यवहारार्थमनूदित आचार्यैः। तथाच योगरत्नाकरे–"गौरीपाषाणकः प्रोक्तो द्विविधः श्वेतरक्तकः। श्वेतः शङ्खसदृग् रक्तो दाडिमाभः प्रकीर्तितः। श्वेतः कृत्रिमकः प्रोक्तो रक्तः पर्वतसम्भवः। विषरूपधरौ तौ हि रसकर्माणि पूजितौ" इति। वस्तुतस्तु श्वेतरक्तपीतकृष्णभेदेन चतुर्विधः प्राप्यते मल्लः। तत्र श्वेत एव बहुव्यवहार्यः। इतरे तु क्वचिदेवेति विशेषः। अत्रापि सर्वत्र श्वेतमल्लस्यैव प्रयोगा निर्दिष्टा इति विभावनीयम् ॥१२२॥

अथास्य शोधनम्—मेघनादस्तण्डुलीयकः। कारवेल्लीरसेन शोधनं साम्प्रदायिकम्। काञ्जिकेनापि दोलायन्त्रविधिना शुध्यति मल्लः ॥१२२–१२७॥

अथास्य गुणाः—स्निग्धः स्पर्शतः। अवशिष्टगुणनिर्देशः प्रायः प्राचीन-

श्वासं प्रतमकं हन्ति चिरोत्थं त्वतिदारुणम् ।
द्रुतमारम्भवेलायां यक्ष्माणमपि नाशयेत् ॥१४२॥
हृच्छूलजं ज्वरोत्थञ्च हृद्दौर्बल्यं द्रुतं हरेत् ।
अतीसारं निहन्त्याशु भुक्तमात्रसमुत्थितम् ॥१४३॥
मल्लो बाह्यप्रयोगेण क्षारकर्मकरः परम् ।
शोथसन्तापशैथिल्यकरश्च परिकीर्तितः ॥१४४॥

शङ्खविषस्य मात्रानिरूपणम् ।

खनेत्रेन्दुमिताद् भागाद् रक्तेरारभ्य यत्नतः ।
खवह्निभागप्रमितं शङ्खमूषं नियोजयेत् ॥१४५॥

अन्यः प्रकारः ।

आरभ्य दशमांशात्तु सर्षपस्य प्रयत्नतः ।
तृतीयभागपर्यन्तं मात्रां मल्लस्य योजयेत् ॥१४६॥

शङ्खविषस्य मात्रानिर्माणविधिः ।

गुञ्जोन्मितं शङ्खविषं तिथिमापकसंमिते ।
मरीचचूर्णे निक्षिप्य शृङ्गवेराम्भसा ततः ॥१४७॥
खल्वमध्ये निधायाथ मर्दयेत्तु दिनत्रयम् ।
निर्मापयेत्ततो युक्त्या वटिका रक्तिकोन्मिताः ॥१४८॥
एकैकां वटिकाञ्चाथ सायम्प्रातस्ततो भिषक् ।
वीतशङ्कः प्रयुञ्जीत तत्तद्दोषापनुत्तये ॥१४९॥
अनेनैव तु मानेन प्रयोगोद्दिष्टभेषजैः ।
एतत्सम्मेल्य निर्माय वटिकादीन् प्रयोजयेत् ॥१५०॥

मात्रानिर्माणे सावधानता ।

रक्तिसंमितमल्लस्य भक्षणात् पुरुषो यतः ।
यमालयं प्रयातीह सावधानतया ततः ॥१५१॥

रसतन्त्रानुक्तोऽनुभूतचरश्चेति ध्येयम् । एवमग्रेऽपि । बाह्यप्रयोगे च क्षारकर्म दारण भेदनादि तत्करोतीति ॥१३८-१४४॥

अथास्य मात्रा—गुञ्जायाः १२० तमभागा ( $\frac{1}{120}$ )दारभ्य ३० तमभाग ( $\frac{1}{30}$ ) पर्य्यन्तमस्य मात्राव्यवहारो निरापद इति ध्येयं सुधीरैः । मात्राप्रकारान्तरं शिष्यबुद्धिसौकर्य्यार्थम् ॥१४५-१४६॥

मात्रानिर्माणप्रकारः—मल्लविषं १ गुञ्जा, मरिचचूर्णस्य १५ मापकाः । आर्द्रक जलेन पेषयेत् । स्पष्टमन्यत् ॥१४७-१५०॥

देशकालादिकं वीक्ष्य रोगिणश्च बलाबलम् ।
मात्रां प्रकल्पयेद्धीरो रसायनचिकित्सकः ॥१५२॥

शङ्खविषस्य आमयिकः प्रयोगः ।

वासासत्वेन वा व्याघ्रीचूर्णेन परिशीलितः ।
मल्लश्चिरोत्थितश्चातिदारुणं श्वासमुद्धरेत् ॥१५३॥
पञ्चतिक्तस्य सत्वेन चूर्णेनाप्यथवाशितः ।
मल्लो विनाशयत्याशु कुष्ठानि विविधानि तु ॥१५४॥
गुडूच्यर्कशिफाचूर्णैर्यत्नतः परिशीलितः ।
मल्लः सुनिर्मलस्तूर्णं निहन्ति श्लीपदज्वरम् ॥१५५॥
करञ्जबीजचूर्णेन सेवितः सम्बलोऽमलः ।
शीतज्वरं निहन्त्याशु दिनैकेन न संशयः ॥१५६॥
शुण्ठीपुनर्नवाचूर्णैर्मल्लस्त्रिदिनसेवनात् ।
आमवातं हरेद्धोरं ज्वरञ्चापि तदुद्भवम् ॥१५७॥
विशोधितं शङ्खविषं सलोहं परिशीलितम् ।
नाशयत्यचिरादेव पाण्डुरोगं चिरोत्थितम् ॥१५८॥
जातिपत्रीलवङ्गाभ्यां मल्लः संसेवितोऽमलः ।
नाशयत्याशु नियतं फिरङ्गमतिदारुणम् ॥१५९॥
रससिन्दूरलोहाभ्यां यक्ष्माणं नाशयेद् ध्रुवम् ।
शङ्खिनीचूर्णसंयुक्तं हृद्दौर्बल्यं विनाशयेत् ॥१६०॥
शुण्ठीमरिचचूर्णेन श्वेतमल्लो निषेवितः ।
भुक्तमात्रसमुद्भूतमतीसारं विनाशयेत् ॥१६१॥
जलेन लेपयेद्यत्नात् मल्लं वृश्चिकदंशने ।
नाशयेद् घटिकार्धेन वृश्चिकार्तिं सुदारुणाम् ॥१६२॥

मात्रानिर्माणे सावधानता मारकत्वादपप्रयुक्तस्य ॥१५१-१५२॥

शङ्खविषस्य रोगयोग्यः प्रयोगः—अर्कशिफा अर्कमूलम् । श्लीपदज्वरं च "शाखायां मुष्कयोर्वापि रागशोथरुजाकरः । पक्षान्ते प्रायशोभावी ज्वरः श्लैपदिकः स्मृतः" इत्युक्तलक्षणम् । अमलः निर्मलः, सम्बलः शङ्खविषम् । अथ प्रसङ्गादस्य बाह्यान्तःप्रयोगार्थं शङ्खविषद्रावः—विशुद्धयवक्षारः ८७½ ग्रेनमितं शङ्खविषं ८७½ ग्रेनमितम्, जलं २० औन्समितं यावत् इति परिभाषा नवीनतन्त्रोक्ता ज्ञेया । युवयोग्या मात्रास्य द्वित्राः बिन्दवः । सार्द्धकर्षमिते जले सन्द्राव्य प्रयोज्या ॥ योगोऽयं लेपद्वारा मषकादिषु क्षारकर्मकर इति ॥१५३-१६२॥

अथ शङ्खविषोदयरसः ।

गुञ्जोन्मितं शङ्खविषं यत्नतो विमलीकृतम् ।
मरिचं रससिन्दूरं पृथक् माषत्रयोन्मितम् ॥१६३॥
स्वर्णबीजं कणा शुण्ठी पृथक् माषद्वयोन्मितम् ।
आदाय खल्वे संमर्द्य त्रिदिनं निम्बुकाम्बुना ॥१६४॥
निर्मापयेन्निजान्वक्षं वटिका रक्तिकोन्मिताः ।
एकैकां वटिकां दद्याद् द्विवारं दिवसे भिषक् ॥१६५॥
नामतस्तु समाख्यातो रसः शङ्खविषोदयः
भूतज्वरहरः कामं सन्निपातकुलान्तकः ॥१६६॥

अथ चण्डेश्वरो रसः ।

गुञ्जोन्मितं शङ्खविषं यत्नतो विमलीकृतम् ।
अमृतं सुमृतं ताम्रं पृथक् माषद्वयोन्मितम् ॥१६७॥
श्लक्ष्णपिष्टा कज्जलिका कलामाषकसंमिता ।
भावयेत्सप्तवारं तु शृङ्गवेरोत्थवारिणा ॥१६८॥
निर्गुण्डीस्वरसेनाथ तथैव खलु भावयेत् ।
निर्मापयेन्निजान्वक्षं वटिका रक्तिकोन्मिताः ॥१६९॥
रसज्ञैः कीर्तितोऽयं तु नाम्ना चण्डेश्वरो रसः ।
विशेषतः समाख्यातो विविधज्वरनाशनः ॥१७०॥

मल्लमारणविधिः ।

पलद्वयं सुराक्षारमम्बरीषे न्यसेद्भिषक् ।
स्तूपाकारतया तत्र चूर्णितं हस्तिदन्तकम् ॥१७१॥
निदध्यादथ चुल्ल्याञ्च वह्निमारोप्य दीपयेत् ।
यदैकीभूय निर्धूमं भवेद्भस्मनिभं तथा ॥१७२॥
तदावतार्य तद्भस्म कूप्यां सम्पेष्य स्थापयेत् ।
भस्मादस्मात्तु कर्षैकं मूषायां सन्निधाय च ॥१७३॥

अथ शङ्खविषोदयः—स्वर्णबीजं धत्तूरबीजम्, निजान्वक्षं स्वप्रत्यक्षम्, वटिकानिर्माणे परिचारकसावधानतारक्षार्थम्। भूतज्वरो विषमज्वरः ॥१६३-१६६॥

अथ चण्डेश्वरः—अमृतं वत्सनाभः । कज्जली १६ माषप्रमिता ॥१६७-१७०॥

मल्लभस्म यद्यपि प्राचीनै रसतन्त्रेषु न व्यवहृतम् । तथाप्यद्यत्वे प्रयुज्यत इति कृत्वा मारणप्रकारः उच्यते पलद्वयमित्यादिना। प्रसङ्गान्मल्लभस्मप्रयोगः कथ्यते—मल्लभस्म गुञ्जैकमितं, अहिफेनः माषषट्कमितः, मृगाण्डजं माषकद्वयम्, वह्निजारः एकादश गुञ्जाः, कुङ्कुमं माषाष्टकम् । एकत्र गृष्टयाः क्षीरेण सुश्लक्ष्णं समार्द्य वट्यः कार्याः । मात्रा—अर्द्धगुञ्जातः गुञ्जैकपर्यन्ता । पयसा प्रातः

तोलकप्रमितं शुद्धं मल्लखण्डं ततो न्यसेत् ।
ऊर्ध्वं दद्यात्पुनर्भस्म कर्षकप्रमितं च तत् ॥१७४॥
शरावेण निरुध्याथ लावकाख्ये पुटे पुटेत् ।
सुशुभ्रं भस्म मल्लस्य तस्मादपनयेद् बुधः ॥१७५॥
एवं तु नियतं भस्म मल्लस्य परिजायते ।
गुणा मात्रानिश्चयश्च ज्ञेयः शोधितमल्लवत् ॥१७६॥

अथ सुराष्ट्रजाया नामानि ।

सौराष्ट्रदेशसम्भूता मृत्तिका तुवरी मता ।
सुराष्ट्रजा च सौराष्ट्री सैव सौराष्ट्रमृत्तिका ॥१७७॥

अथ स्फटिकारिकाया नामानि ।

स्फटिकारिः स्फुटी चैव स्फटिका स्फटिकारिका ।
स्फुटिका फटिका चैव शुभ्रा काङ्क्षी च रङ्गदा ॥१७८॥
दृढरङ्गा रङ्गदृढा तथैव दृढरङ्गदा ।
तुवरी रङ्गदात्री च कथिता भिषजां वरैः ॥१७९॥

स्फुटिकारिकायाः परिचयः ।

सौराष्ट्रमृत्तिकैवेह निर्भरं निर्मलीकृता ।
तच्छोधकैर्जनैर्लोके कथिता स्फुटिकारिका ॥१८०॥

अस्या गुणाः ।

काङ्क्षी कषाया कटुका च तिक्ता ख्याता तथोष्णा विषदोषहन्त्री ।
वीसर्पकण्डूतिहरा च केश्या श्वित्रापहा वै व्रणरोपणी च ॥१८१॥
नेत्ररोगप्रशमनी विषमज्वरनाशिनी ।
रतिमन्दिरसङ्कोचकारिणी व्रणहारिणी ॥१८२॥
ग्राहिणी लेखनी स्निग्धा रुधिरस्रावरोधिनी ।
मुखरोगहरा चैव दन्तदार्ढ्यकरा मता ॥१८३॥

प्रयोज्या। मल्लस्य मल्लभस्मनो वा प्रयोगाः प्रायशः भक्तान्ते योज्याः । यदि कथञ्चित् निरन्न एव योज्याः स्युस्तदा प्रभूतसर्पिषा नवनीतेन वा सहैव दातव्याः। एष योगः क्लैब्यं नाशयति । बलं पुष्टिं च ददाति । सामान्यतः सप्ताहमेकमुपयुज्य मल्लं वा मल्लभस्म वा दिनैकं त्याज्यम् । अनयोः सततं प्रयोगः निषिध्यते। दुग्धघृतादीनि विशेषतः सेव्यानि ॥१७१-१७६॥

सुराष्ट्रजाया नामानि स्फटिकारिकायाश्च। उभयोर्नैर्मल्य एव भेदः, तदेतदाह सौराष्ट्रमृत्तिकैवेहेति । वह्नौ भर्जनाद् उत्फुल्लितैषा शुद्ध्यति । आचार्यैस्तु मृदुवीर्य्यतया प्रायो बाह्यप्रयोगाच्च शोधनमस्या उपेक्षितम् ॥ विषमज्वरादौ भक्षणार्थन्तु श्वेतायाः स्फटिकारिकायाः शोधनं विधेयमेवेति ॥१७७-१८३॥

अस्या आमयिकः प्रयोगः।

मृद्दारशृङ्गसंयुक्तां चूर्णितां स्फुटिकारिकाम्।
व्रणेऽवचूर्णयेन्नित्यं रोपणं जायते परम् ॥१८४॥
माषकद्वयमितां तु रङ्गदां निक्षिपेद् द्विपलसंमिते जले।
क्षालयेदथ मनोजमन्दिरं नाशयेच्छिथिलतां क्षणादलम् ॥१८५॥
स्फटिका गव्यपयसा शीलिता नस्ययोगतः।
निहन्ति रुधिरस्रावं नासिकायाः सुदारुणम् ॥१८६॥
सौभाग्यचूर्णसंयुक्तां स्फटिकां निक्षिपेज्जले।
द्रवीभूतां ततो ज्ञात्वा क्षालयेत्तेन वारिणा ॥१८७॥
विचर्चिकां चिरोद्भूतां स्राविणीमपि निर्भरम्।
दिनसप्तकमात्रेण नाशयेदिह निश्चितम् ॥१८८॥
माषोन्मिता स्फटी तूर्णं चूर्णिता त्ववचूर्णिता।
रोधयेद्रुधिरस्रावं सद्यःक्षतसमुद्भवम् ॥१८९॥
स्फटीं रक्तित्रयमितां पञ्चतोलकसंमिते।
सलिले द्रावयित्वाथ यत्नादुत्तरबस्तिना ॥१९०॥
गुरुदर्शितमार्गेण व्रणमेहमुपाचरेत्।
व्रणमेहव्रणं हन्ति पूयस्रावञ्च दारुणम् ॥१९१॥
सितान्विता रक्तिमिता चूर्णिता स्फुटिकारिका।
अशिता नाशयत्याशु रक्तपित्तं सुदारुणम् ॥१९२॥
स्फटीं गुञ्जाषट्कमितां पञ्चतोलकसंमिते।
जले संद्राव्य युञ्जीत यत्नाद्वस्तिविधानतः ॥१९३॥
गुदाङ्कुरान् चिरोद्भूतान् सङ्कोचयति सत्वरम्।
रक्तं च रोधयत्यत्र गुदभ्रंशञ्च नाशयेत् ॥१९४॥
तरुण्या रक्तपुष्पायाः सलिले तु परिस्रुते।
पञ्चकोलोन्मिते काङ्क्षीं चतुर्गुञ्जमितां क्षिपेत् ॥१९५॥
तस्याम्भसस्तु नयने द्वित्रिबिन्दून् विनिक्षिपेत्।
अभिष्यन्दं निहन्त्याशु शोथपाकादिसंयुतम् ॥१९६॥
स्फटिकां तोलकमितां पञ्चाशत्तोलकोन्मिते।
जले विद्राव्य युञ्जीत यत्नेनोत्तरवस्तिना ॥१९७॥

अस्या आमयिकप्रयोगः—तरुण्याः रक्तपुष्पायाः इति रक्तवर्णगुलाब-पुष्पविशेषस्येति भावः। परिस्रुते सलिले अर्के। अपि च स्फटिकाद्रावः परिपे-

गर्भाशयं प्रसूतायाः सव्यथं स्थानविच्युतम् ।
सङ्कोचयत्याशु तथा रक्तस्रावं रुणद्धि च ॥१९८॥
योनिश्च शिथिलीभूता स्वस्थानन्तु प्रपद्यते ।
कण्डूतिकां हन्ति तथा श्वेतप्रदरजां रुजम् ॥१९९॥
रससिन्दूरसंयुक्ता स्फटी गुञ्जोन्मिताशिता ।
अधोगमूर्ध्वगं वापि रक्तपित्तं हरेद् भृशम् ॥२००॥
रक्तिद्वयमितां काङ्क्षीं भक्षयेत्सितया समम् ।
अपक्वनागाशनजं शूलं हरति दारुणम् ॥२०१॥
वकुलत्वग्भवक्काथयुक्ता तु स्फटिकारिका ।
घर्षिता दन्तमूलेषु दन्तदार्ढ्यकरी मता ॥२०२॥
स्फटी शक्रयवोपेता गुञ्जाद्वितयसंमिता ।
अशिता नाशयत्याशु त्वतिसारं सुदारुणम् ॥२०३॥
लवङ्गैलासितोपेता चूर्णिता स्फटिकारिका ।
दन्तेषु घर्षिता कामं नाशयेद् दन्तशर्कराम् ॥२०४॥
सैन्धवं तोलकमितं स्फटिका कर्षसंमिता ।
दन्तेषु घर्षणादेव दन्तपैच्छिल्यमुद्धरेत् ॥२०५॥
पञ्चतोलोन्मिते तोये रक्तिपञ्चकसंमिताम् ।
स्फटिकां द्रावयित्वाथ कुर्वीत कवलग्रहम् ॥२०६॥
नाशयेद्दन्तपैच्छिल्यं मुखपाकञ्च दारुणम् ।
कण्ठशुण्डीश्च चिरजामधिजिह्वाञ्च शोथिनीम् ॥२०७॥

## अथ खटिकाया नामानि ।

खटिका खटिनी चैव खटी लेखनमृत्तिका ।
कठिनी वै कठिनिका वर्णिका वर्णलेखिका ॥२०८॥

### खटिकाया भेदौ ।

खटिका द्विविधा ख्याता खटी गौरखटी तथा ।
खटी तु मलिना चान्या श्वेता मृदुशिलोपमा ॥२०९॥

काञ्जालगर्दभरोगनाशकरश्चेत्यपि ज्ञेयम् । स्पष्टमन्यत् । स्फटिका गैरिकं च जलपिष्टं सममात्रं विषमज्वरनाशाय । मात्रा गुञ्जमिता । श्वेतस्फटिकाभस्म गुञ्जैकं द्विगुञ्जं वा अजादुग्धनिपीतं उरःक्षतशान्तिकरम् । मधुना विषमज्वरहरम्, परमिद वेगोदयाद्यामैकं प्राक् प्रयोज्यम् । स्फटिका अर्कपत्रसंस्तरचिता भस्मीकृता ज्वरघ्नी चेति ॥१८४-२०७॥

अथ खटिकानामानि—व्यवहृतप्रायाणि ॥२०८-२०९॥

खटिकायाः शोधनम् ।

खटीचूर्णं शुद्धपात्रे निधाय विमलैर्जलैः ।
प्रक्षालयेद्विधानज्ञो विशुध्यति न संशयः ॥२१०॥

खटिकाया गुणाः ।

खटिका शिशिरा तिक्ता मधुरा शोथनाशिनी ।
पित्तप्रशमनी कामं विविधव्रणरोपणी ॥२११॥
कफदाहास्रदोषघ्नी नेत्रामयनिषूदनी ।
हरिद्वर्णातिसारघ्नी स्वेदातिस्रावहारिणी ॥२१२॥

खटिकाया आमयिकः प्रयोगः ।

माषोन्मितं खटीचूर्णं भक्षितं शीतवारिणा ।
प्रवाहिकाञ्च पित्तास्रं ग्रहणीञ्च विनाशयेत् ॥२१३॥
खटी शुद्धा मधुरिकातोयेन सितयान्विता ।
शीलिता विनिहन्त्याशु त्वतीसारं सुदारुणम् ॥२१४॥

## अथ चूर्णस्य नामानि ।

चूर्णं चूर्णश्चूर्णकन्तु सुधा सौधविलेपनम् ।
तदेव च समाख्यातं शिलाक्षारं भिषग्वरैः ॥२१५॥

चूर्णोदकस्य निर्माणप्रकारः ।

रक्तिद्वयोन्मितं चूर्णं पञ्चतोलकसंमिते ।
जले विनिक्षिपेत्प्राज्ञस्त्रियामं स्थापयेद् बुधः ॥२१६॥
ततः सारकपत्रेण सारयेत्काचपात्रके ।
चूर्णोदकमिति ख्यातं तथैव च सुधोदकम् ॥२१७॥
चूर्णोदकं दृढहरित्काचकुप्यां निधापयेत् ।
तथातिसंयतेनेह पिधानेन निरोधयेत् ॥२१८॥

चूर्णोदकस्य गुणाः ।

चूर्णोदकं क्रिमिहरमतीसारहरं परम् ।

विमलजलैः शोधनं पाषाणांशनिरासाय सुधाचूर्णांशनिरासद्वारा भक्षणयोग्यतासम्पादनाय च ॥२१०॥

हरिद्वर्णातिसारघ्नी बालकेषु प्रायः । मधुरिका शतपुष्पा ॥२११-२१४॥

अथ चूर्णकम्—तस्य प्रयोगार्थं चूर्णोदकनिर्माणप्रकारः—सारकपत्रं "Filter Paper" इत्याङ्ग्लभाषायाम् । दृढहरित्काचकुप्यां निधानं सूर्यकिरणसम्पर्कादौषधगुणक्षयभयात् ॥२१५-२१८॥

अम्लपित्तप्रशमनं विशेषाद्दुग्धपाचनम् ॥२१९॥
शूलं ग्रहणिकां हन्ति खटीवद् गुणकारकम् ।
द्रावकाशनसम्भूतां निहन्ति च विषक्रियाम् ॥२२०॥

चूर्णोदकस्य मात्रा ।

आरभ्य त्रिंशद्बिन्दुभ्यः षष्टिबिन्दुमितं परम् ।
चूर्णोदकं प्रयुञ्जीत वार्षिकैकस्तनन्धये ॥२२१॥
चूर्णोदकस्य सुखदा तोलकद्वयसंमिता ।
पूर्णमात्रा समाख्याता रसतन्त्रविशारदैः ॥२२२॥

चूर्णोदकस्य आमयिकः प्रयोगः ।

यत्नादिह हि वस्त्युक्तविधानेन सुधोदकम् ।
योजितं विनिहन्त्याशु कृमीन् पीवान्त्रसंस्थितान् ॥२२३॥
नवसादरसंयुक्तं चूर्णं लिप्तं तु वारिणा ।
व्यथां वृश्चिकदंशोत्थां नाशयेदविलम्बितम् ॥२२४॥
विषपीते सुधातोयं योजितं त्वविलम्बितम् ।
मल्लभक्षणसंभूतां विनिहन्ति विषक्रियाम् ॥२२५॥
सुधोदकं दुग्धयुतं प्रत्यहं परिशीलितम् ।
अम्लपित्तं निहन्त्याशु विशेषादविलम्बितम् ॥२२६॥
कवलग्रहमार्गेण योजितं तु सुधोदकम् ।
विनिहन्त्यचिरादेव मुखपाकक्षतादिकम् ॥२२७॥
चूर्णोदकं कर्षमितं काचपात्रे निधापयेत् ।
तन्मितञ्चातसीतैलं दत्वा काचशलाकया ॥२२८॥
क्षणं प्रचाल्य मतिमान् काचकुप्यां तु विन्यसेत् ।
अग्निदग्धोत्थदाहघ्नं परमेतद्विलेपनात् ॥२२९॥

## अथ दुग्धपाषाणस्य नामानि ।

दुग्धपाषाणको दुग्धी दुग्धपाषाणिका तथा ।
दुग्धा दुग्धशिला चैव क्षीरी क्षीरक्षवश्च सः ॥२३०॥
वज्राभो दीप्तिकश्चापि सौधो गोमेदसन्निभः ।
दुग्धोपलो दुग्धदृषद् भिषग्भिः परिकीर्तितः ॥२३१॥

द्रावकाः गन्धकद्रावादयः तद्भक्षणजाताम् ॥२१९–२२०॥
स्तनन्धये बालके ॥२२१–२२२॥
चूर्णोदकस्य बालकेषु प्रयोगो दन्तोद्भेदजातरोगहरश्च । स्पष्टमन्यत् ॥

दुग्धपाषाणस्य गुणाः ।

दुग्धोपलस्तु मधुरस्त्वीषदुष्णो ज्वरापहः ।
पित्तप्रशमनः कामं त्वग्दाहाध्माननाशनः ॥२३२॥
हृदामयहरो रुच्यः पित्तशूलविनाशनः ।
कासश्वासहरश्चैव समाख्यातो भिषग्वरैः ॥२३३॥

अस्य आमयिकः प्रयोगः ।

दुग्धपाषाणिका शुभ्रा यवक्षारसमन्विता ।
प्रलेपिता तु सततं कुष्ठं सिध्माभिधं हरेत् ॥२३४॥
दुग्धपाषाणजं चूर्णं शीलितं गुञ्जसंमितम् ।
हन्ति ज्वरं मन्दवेगं सायंकालसमुत्थितम् ॥२३५॥
दुग्धपाषाणजं चूर्णं यत्नतस्त्ववचूर्णितम् ।
रक्तस्रावं निहन्त्याशु त्वभिघातव्रणोद्भवम् ॥२३६॥

## अथ गोदन्तस्य नामानि ।

गोदन्तिका च गोदन्ता गोदन्तं कथ्यते बुधैः ।
तत्तु पाषाणजातीयं सौम्यं तालसमं न तत् ॥२३७॥

गोदन्तस्य स्वरूपम् ।

पत्राचितं सुमसृणं शरदिन्दुसुनिर्मलम् ।
दीप्तप्रभं तु गोदन्तं ग्राह्यमत्र प्रकीर्तितम् ॥२३८॥

गोदन्तस्य शोधनम् ।

गोदन्तं निम्बुनीरेण द्रोणपुष्पीरसेन वा ।
यामार्द्धेनैव सुस्विन्नं विशुद्ध्यति न संशयः ॥२३९॥

गोदन्तस्य मारणम् ।

शरावसम्पुटान्तःस्थं गोदन्तं सुविशोधितम् ।
म्रियते पुटितं भस्म जायते शशिसुन्दरम् ॥२४०॥

गोदन्तस्य गुणाः ।

गोदन्तं सुमृतं शीतं पित्तज्वरनिषूदनम् ।
जीर्णज्वरहरं बल्यं दीपनं श्वासकासनुत् ॥२४१॥

दुग्धपाषाणकः ईषदुष्णः नात्यन्तं शीलः । स्पष्टमन्यत् ॥२३०-२३६॥

अथ गोदन्तम्—नेदं तालकजातीयं अपि तु तस्मान्नितान्तं भिन्नमिति द्योतयितुं स्फुटं लौकिकभ्रमं निरस्यति—"तत्तु पाषाणजातीयं सौम्यं तालसमं न तत्" इति ॥२३७-२४०॥

गोदन्तं सुमृतं शीतमित्यस्य गुणाः । अपि च पित्तातिसारहरं रक्तपित्तहरञ्च ।

गोदन्तस्य मात्रा ।

गुञ्जैकतः समारभ्य गुञ्जात्रयमितं परम् ।
गोदन्तं विनियुञ्जीत बलकालाद्यपेक्षया ॥२४२॥

इति तालकादिविज्ञानीयो नाम एकादशस्तरङ्गः ।

---

## अथ शङ्खादिविज्ञानीयो द्वादशस्तरङ्गः ।

अथ शङ्खस्य नामानि ।

शङ्खस्तु शङ्खकः कम्बुस्त्रिरेखश्च समुद्रजः ।
सुनादो दीर्घनादश्च कम्बोजश्च प्रकीर्तितः ॥१॥

ग्राह्यशङ्खस्य स्वरूपम् ।

वृत्तः स्निग्धः सूक्ष्ममुखो निर्मलश्चेन्दुसुन्दरः ।
दीर्घकायो गुरुश्चापि शङ्खः श्रेष्ठः प्रकीर्तितः ॥२॥

शङ्खस्य द्वौ भेदौ ।

शङ्खस्तु द्विविधः प्रोक्तो रसतन्त्रविचक्षणैः ।
प्रथमो दक्षिणावर्तो वामावर्तोऽपरो मतः ॥३॥
दक्षिणावर्तशङ्खस्तु प्रशस्तो देवपूजने ।
त्रिदोषघ्नो निधिश्चापि स्मृतो दारिद्र्यनाशनः ॥४॥
वामावर्ताभिधः शङ्खः सर्वत्र सुलभो मतः ।
अतः स एव वैद्यैस्तु मारणार्थं प्रयुज्यते ॥५॥

अथ शङ्खस्य प्रथमः शोधनप्रकारः ।

शङ्खन्तु खण्डशः कृत्वा पोट्टल्यां स्थापयेद्भिषक् ।
दोलायन्त्रे चतुर्यामं पचेज्जम्बीरवारिणा ॥६॥
प्रक्षालयेच्छङ्खखण्डान् प्रतप्तेनाम्भसा ततः ।
इत्थं नातिचिरादेव शङ्खः शुद्धिमवाप्नुयात् ॥७॥

द्वितीयः शोधनप्रकारः ।

जयन्त्याः स्वरसेनैव शङ्खं दोलागतं पचेत् ।
यामैकं पाचनादेव शुद्धिमायात्यनुत्तमाम् ॥८॥

तृतीयः शोधनप्रकारः ।

तण्डुलीयद्रवेणेह शङ्खं दोलागतं पचेत् ।
यामैकं पाचनादेव शुद्धिमायात्यनुत्तमाम् ॥९॥

इदं रक्तप्रदरं प्रवाहिकाञ्च विनिहन्ति । प्रवाहिकादिशान्त्यै त्रिगुञ्जा मात्रास्य दातव्येति । स्पष्टमन्यत् ॥२४१-२४२॥

शङ्खस्य नामस्वरूपभेदोपयोगाः स्पष्टप्रायाः । शङ्खशोधनस्य बहवः प्रकाराः

चतुर्थः शोधनप्रकारः ।

काञ्जिकेन पचेच्छङ्खं दोलायन्त्रे भिषग्वरः ।
क्षालयेच्चोष्णतोयेन शङ्खः शुद्धिमवाप्नुयात् ॥१०॥

पञ्चमः शोधनप्रकारः ।

निम्बूकाम्लसमायुक्तवारा दोलाख्ययन्त्रके ।
यामार्द्धं पाचितः शङ्खः शुद्धिमायात्यनुत्तमाम् ॥११॥

विशुद्धशङ्खस्य प्रयोगाः ।

त्रिरेखवर्तिका ।

माषकप्रमिता कृष्णा मरिचं माषकद्वयम् ।
शिला मरीचद्विगुणा शङ्खो माषाष्टकोन्मितः ॥१२॥
सम्पेष्य वर्तिकां कृत्वा लोचने विधिनाञ्जयेत् ।
तिमिरं नाशयेद्वारा मस्तुना चार्बुदं हरेत् ॥१३॥
पिच्चटं मधुना हन्यान्नारीस्तन्येन चार्जुनम् ।
त्रिरेखवर्तिका ह्येषा नेत्रामयनिषूदिनी ॥१४॥

अर्जुनहरशङ्खचूर्णम् ।

विशोधितं शङ्खचूर्णं क्षौद्रेण तु समञ्जितम् ।
अर्जुनं नाशयत्याशु भास्करस्तिमिरं यथा ॥१५॥

शङ्खवर्तिः ।

शङ्खसैन्धवडिण्डीरैः शिग्रुबीजैश्च निर्मिता ।
वर्तिर्नेत्रेऽञ्जनादेव शुक्रादीन्नाशयत्यलम् ॥१६॥

अथ शङ्खस्य मारणम् ।

शुद्धशङ्खस्य खण्डानि शरावे स्थापयेत्सुधीः ।
शरावेण पिधायाथ यत्नात्सन्धिं प्रलेपयेत् ॥१७॥
आतपे त्वथ संशोष्य पुटेद्गजपुटे भिषक् ।
स्वतःशीतं समुद्धृत्य खल्वे सञ्चूर्णयेद्भिषक् ॥१८॥
चूर्णितञ्चाथ विज्ञाय सम्पुटस्थं ततः पुटेत् ।
एवं पुटद्वयेनैव शङ्खको मृतिमाप्नुयात् ॥१९॥

अथ मृतशङ्खस्य गुणाः, मात्रा च ।

शङ्खः सुशीतलः क्षारस्त्वम्लपित्तविनाशनः ।

शोधकसौकर्यार्थम् । निम्बूकाम्लं प्रागुक्तम् ॥१-११॥

शुद्धशङ्खस्य बाह्यप्रयोगो नेत्रहितकारी—कृष्णा पिप्पली, शिला मन शिला, वारा जलेन । पिच्चटं नेत्ररोगविशेषम् । अर्जुनं तदाख्यनेत्रव्याधिम् ॥१२-१४॥

अग्निमान्द्यहरो बल्यो ग्राही ग्रहणिकाहरः ॥२०॥
परिणामोत्थशूलघ्नस्तारुण्यपिटिकापहः ।
विषदोषहरो वर्ण्यो मात्रा गुञ्जद्वयोन्मिता ॥२१॥

मृतशङ्खस्य आमयिकः प्रयोगः ।

निम्बूकस्वरसेनेह मृतः शङ्खस्तु शीलितः ।
अतिसारं हरेत्तूर्णं ग्रहणीञ्चातिदारुणाम् ॥२२॥
सत्र्यूषणो मृतः शङ्खस्त्वग्निमान्द्यं व्यपोहति ।
धात्रीचूर्णेन संयुक्तस्त्वम्लपित्तं विनाशयेत् ॥२३॥
यवक्षारत्रिकटुना गुल्मरोगहरः परम् ।
शूलं त्रिदोषजं हन्याद् व्योषसैन्धवहिङ्गुना ॥२४॥
पुरातनगुडोपेतस्त्वथवा व्योषसंयुतः ।
सपञ्चलवणः शङ्खः परिणामोत्थशूलनुत् ॥२५॥
भार्ङ्गीचूर्णान्वितः शङ्खः श्वासं हन्ति सुदारुणम् ।
विश्वभेषजचूर्णेन जाठराग्निप्रदीपनः ॥२६॥
मुस्तजातीफलाफूकटङ्कणैर्गुञ्जकोन्मितः ।
शीलितस्तत्क्षणादेव सर्वातीसारनाशनः ॥२७॥
सनिशश्च सपूगश्च मृतः शङ्खस्तु शीलितः ।
विनाशयेद्विशेषेण वान्ति खलु सुदारुणाम् ॥२८॥
मूलकभसितोपेतं शङ्खं सुमृतं प्रलेपनतः ।
हन्ति कफार्बुदमचिरात् कामं च विशेषतो ग्रन्थीन् ॥२९॥

अथ शङ्खस्य कल्पः ।

कज्जली तत्समा चैव मृता खलु वराटिका ।
पूर्वतो द्विगुणः शङ्खः सर्वतुल्या च पिप्पली ॥३०॥
निम्बूकस्वरसेनेह पेषयित्वा प्रयत्नतः ।
निर्मापयेत्प्रयत्नेन वटिका रक्तिकोन्मिताः ॥३१॥
एकैकां वटिकां खादेन्मरिचाज्यसमन्विताम् ।
ग्रहणीं चिरसञ्जातां नाशयेत्पक्षसेवितः ॥३२॥
गात्रवृद्धिं करोत्येव साज्यखण्डेन शीलितः ।
चित्रकेण हरेच्छूलं गुल्मञ्चापि विशेषतः ॥३३॥

अथास्य गुणाः—क्षारः आस्वादतः कर्मतश्च ॥२०-२१॥
अथास्य रोगयोग्यः प्रयोगो व्याख्यातप्रायः ॥२२-२९॥
तत्समा कज्जलीतुल्या, पूर्वतः कज्जलितः, साज्यखण्डं घृतयुक्ता सितशर्करा ।

अन्यानपि बहून् रोगान् तत्तत्पथ्यप्रयोगतः ।
नियतं नाशयत्याशु शङ्खकल्पोऽयमुत्तमः ॥३४॥

प्रथमः शङ्खद्रावकः ।

शङ्खचूर्णञ्च सौभाग्यं स्फुटिका यावशूकजम् ।
सर्जिक्षारं नृसारञ्च तथा लवणपञ्चकम् ॥३५॥
समं समं समादाय यत्नतश्चूर्णयेद्भिषक् ।
मृल्लिप्तजठरायां तु काचकुप्यां न्यसेत्ततः ॥३६॥
कूपीं चुल्ल्यां निधायाथ तिर्यङ् नालं निवेशयेत् ।
अन्यस्यां काचकुप्यां तु तोयस्थायां विधानतः ॥३७॥
पचेन्मन्दानलेनैव विधानज्ञो भिषग्वरः ।
द्रावितं तोयरूपन्तु द्रावकं जायते तदा ॥३८॥
शङ्खशुक्तिवराटादीन् यामार्द्धेनैव निश्चितम् ।
द्रावयत्येष तु यतः शङ्खद्रावस्ततः स्मृतः ॥३९॥

अस्य गुणाः ।

अग्निमान्द्यं हरत्येष विषूचीञ्चातिदारुणाम् ।
ग्रहणीं मूत्रकृच्छ्रञ्च गुल्मप्लीहोदराणि च ॥४०॥
शूलमष्टविधं हन्ति तथार्शांसि विनाशयेत् ।
भोजनान्ते विन्दुमात्रं पिबेत्प्रचुरवारिणा ॥४१॥
भुक्त्वाकण्ठं पुनर्भोक्तुमिच्छत्यस्य प्रयोगतः ।
कृमीनुन्मूलयत्याशु छर्दिञ्चापि सुदारुणाम् ॥४२॥

द्वितीयः शङ्खद्रावकः ।

स्फुटिका तोलकमिता सैन्धवञ्चापि तन्मितम् ।
यावशूकजकञ्चापि तोलकद्वयसंमितम् ॥४३॥
विमलो नव्यसारश्च तोलकद्वितयोन्मितः ।
कर्षद्वयं सुराक्षारं काशीशञ्चापि तत्समम् ॥४४॥

अन्यत् सुगमम् ॥२०-३४॥

अथ शङ्खद्रावकः प्रथमः—काचकूपीमध्येऽर्धभागः रिक्तो रक्ष्यः वह्नितप्तौ-पधविकासावकाशदानार्थम् । स्पष्टप्रायमन्यत् । शङ्खद्राव इति यथार्थन्नाम ॥

अग्निमान्द्यमित्यादिनाऽस्य गुणनिर्देशः । शूलमष्टविधमिति "पृथग् दोषैः समस्तामद्वन्द्वैः शूलोऽष्टधा भवेत्" इत्युक्तम् । विन्दुमात्रमिति तीक्ष्णवीर्यत्वात् । प्रचुरवारिणा इति यथावश्यक पलप्रमाणेनेति यावत् । जलप्राचुर्य्यञ्च द्रावक-तीक्ष्णतापरिहाराय । स्पष्टमन्यत् ॥४०-४२॥

स्फुटिकेत्यादिना द्वितीयः प्रकारः—शङ्खचूर्णक्षेपमन्तरा जातोऽपि द्रावक-त्वसामान्यात् शङ्खादीनां शङ्खद्रावनाम्ना व्यवहृतः । अत्र च सोरककासीसादि-

काचकुप्यां निधायाथ चुल्लिकायां निधापयेत् ।
तिर्यङ् निवेशयेत्तत्र नलिकां काचनिर्मिताम् ॥४५॥
अन्यकाचघटीलग्नां, पचेन्मन्दाग्निना ततः ।
अग्निवीर्यं तोयरूपं जायते द्रावकं शुभम् ॥४६॥
शङ्खशुक्तिसुवर्णादीन् यस्माद् द्रावयतीह वै ।
तस्माद्रसायनाचार्यैः शङ्खद्रावः प्रकीर्तितः ॥४७॥

अस्य गुणाः ।

गुल्मप्लीहहरः कामं सर्वोदरविनाशनः ।
शूलञ्च वातिकं हन्ति वह्निमान्द्यादिकानपि ॥४८॥

तृतीयः शङ्खद्रावकः ।

चूलिकालवणं चैव सैन्धवं यावशूकजम् ।
पृथक् पलोन्मितं चैव सुराक्षारं पलद्वयम् ॥४९॥
स्फुटी कर्षद्वयमिता काशीसं कर्षसंमितम् ।
सर्वमेकत्र सम्मेल्य काचकुप्यां न्यसेत्ततः ॥५०॥
तिर्यङ् नालादिकं दत्वा विधानज्ञो भिषग्वरः ।
पचेन्मन्दानलेनैव चुल्ल्यान्तु खदिरेन्धनैः ॥५१॥
द्रावितं वह्निवीर्यन्तु सलिलाभं महोत्तमम् ।
शङ्खद्रावं भवेत् सर्वधातूनां द्रावकं परम् ॥५२॥

चतुर्थः सजलशङ्खद्रावकः ।

सार्द्धैकभागप्रमितः सोरकद्रावकस्तथा ।
लवणद्रावकश्चापि भागद्वितयसंमितः ॥५३॥
परिस्रुतञ्च सलिलं सार्द्धद्वादशभागिकम् ।
सर्वं सम्मेल्य यत्नेन जायते त्वतिशोभनः ॥५४॥
शङ्खस्वर्णादिधातूनां द्रावकः परमोत्तमः ।
शङ्खद्रावो वह्निवीर्यो गुल्मप्लीहादिभस्मकृत् ॥५५॥

चतुर्थसजलशङ्खद्रावकस्य मात्रा ।

आरभ्य शरविन्दुभ्यः कलाबिन्दुमितं परम् ।

क्षेपात् वैलक्षण्यं पूर्वस्मादत एवायं सुवर्णादीनपि द्रावयति न पूर्वः ।स्पष्टमन्यत्। मात्रादिकं पूर्ववत् । अपिच "शोरकचुल्लिकलवणस्फटिकाशाकम्भरीयजो द्रावः। पलयुगपलकर्षद्वयकर्षमितो वह्निकृत् क्रमशः" इत्यपि प्रकारान्तरेण शङ्खद्रावक एव क्षारार्कनाम्नाऽपि व्यवहरणीयः । निर्माणप्रकारः पूर्ववत् ॥ इति ॥४२-५२॥

चतुर्थो द्रावः प्रकारान्तरसिद्धद्रावकाभ्यामेव संयोगविशेषाज्जायमानो गुणैः समानः पूर्वैः। अयञ्च निर्जल एव धातुद्रावकः, सजलस्तु न तथेति विशेषः।

शङ्खद्रावं प्रयुञ्जीत पलसंमितवारिणा ॥५६॥

### अथ क्षुद्रशङ्खस्य नामानि ।

क्षुद्रशङ्खः शङ्खनकः शम्बूकः स्वल्पशङ्खकः ।
क्षुल्लको नखशङ्खश्च नामान्येतानि शङ्खके ॥५७॥

क्षुद्रशङ्खस्य शोधनम् ।

अम्लेन केनचिद्वापि कामं स्थालीगतं पचेत् ।
यामार्द्धेनैव शम्बूकः शुद्धिमायात्यनुत्तमाम् ॥५८॥

क्षुद्रशङ्खस्य मारणम् ।

शङ्खवन्मारणं त्वस्य करणीयं भिषग्वरैः ।
कुमारीस्वरसेनैव सम्पुटस्थं पुटेत्तु वा ॥५९॥

क्षुद्रशङ्खस्य गुणाः ।

क्षुद्रशङ्खस्तु शूलघ्नो नेत्रामयनिषूदनः ।
रक्तातिसारशमनो दीपनः पाचनस्तथा ॥६०॥

अस्य आमयिकः प्रयोगः ।

क्षुद्रशङ्खविभूतिस्तु शीलिता तप्तवारिणा ।
परिणामोद्भवं शूलमचिरादेव नाशयेत् ॥६१॥
मरीचपञ्चलवणैर्भूतिः शम्बूकजाशिता ।
भोजनादौ तदन्ते वा पक्तिशूलं व्यपोहति ॥६२॥
समसैन्धवसंयुक्ता भूतिः शम्बूकजाशिता ।
मधुना त्वचिरादेव वातग्रहणिकां हरेत् ॥६३॥

### अथ शुक्तेर्नामानि ।

शुक्तिश्च शुक्तिका चापि मुक्तामाता तथैव च ।
मुक्तागृहं महाशुक्तिः मौक्तिकप्रसवा च सा ॥६४॥
मुक्ताशुक्तिस्तथा मुक्तागेहं मौक्तिकमन्दिरम् ।

शुक्तिकाया प्रथमः शोधनप्रकारः ।

जयन्त्याः स्वरसेनैव शुक्तिं दोलागतां पचेत् ॥६५॥
यामैकेनैव नियतं शुक्तिः शुद्धिमवाप्नुयात् ।

मात्रायान्तु विशेषः सजलत्वात् । तथाहि—षड्बिन्दुभ्यः षोडशबिन्दुपर्य्यन्तमस्य मात्रा पलप्रमाणेन देया जलेन ॥५३-५६॥

अथ क्षुद्रशङ्खस्य नामानि तन्त्रे व्यवहृतप्रायाणि । शोधनमारणं व्याख्यातप्रायम् । परिणामशूलनाशोऽस्य विशेषगुणः । स्पष्टमन्यत् । "शम्बूकः शीतलो नेत्ररुजास्फोटविनाशनः । शीतज्वरहरस्तीक्ष्णो ग्राही दीपनपाचनः ॥ ग्रहणीरोगहन्ता च रक्तातीसारनाशनः" इत्याहुः प्राञ्चः ॥५७-६३॥

द्वितीयः शोधनप्रकारः ।

अम्लेन केनचिद्वापि दोलायन्त्रेण यत्नतः ॥६६॥
शुक्तिकां पाचयेद्धीमान् शुद्धिमायात्यनुत्तमाम् ।

शुक्तेर्मारणम् ।

शुक्तिकां खण्डशः कृत्वा सम्पुटस्थां ततः पुटेत् ॥६७॥
हिमकुन्देन्दुसङ्काशां शुक्तेर्भूतिं समाहरेत् ।

शुक्तेर्गुणाः, मात्रा च ।

शुक्तिका शूलशमनी हृदामयविनाशिनी ॥६८॥
स्निग्धा रुच्या श्वासहरा दीपनी मधुरा मता ।
इष्टिकावर्णसङ्काशां नाशयेन्मूत्रशर्कराम् ॥६९॥
प्लीहानं नाशयत्याशु तथा च जठरामयान् ।
रक्तिद्वयमिता मात्रा मुक्तागेहस्य कीर्तिता ॥७०॥

अस्या आमयिकः प्रयोगः ।

वरामधुकचूर्णेन समेन त्र्यूषणेन वा ।
शुक्तिका शीलिता शीघ्रं शूलं नाशयति ध्रुवम् ॥७१॥
धात्रीचूर्णान्विता शुक्तिः काकमाचीरसेन वै ।
शीलिता त्वचिरादेव विनिहन्ति हृदामयम् ॥७२॥
त्र्यूषणक्षौद्रसंयुक्ता वासारससमन्विता ।
श्वासं विनाशयत्याशु दिनसप्तकसेवनात् ॥७३॥
कटुत्रिकानलोपेता यवक्षारविमिश्रिता ।
शुक्तिका मधुना लीढा वह्निसन्दीपनी मता ॥७४॥
तृणपञ्चकमूलस्य कषायेण तु शीलिता ।
शुक्तिका नाशयत्याशु चिरजां मूत्रशर्कराम् ॥७५॥
व्योषत्रिक्षारसंयुक्ता लवणद्वयमिश्रिता ।
शुक्तिका मधुना हन्ति प्लीहानमतिदारुणम् ॥७६॥
शिलाजतुसमायुक्ता वङ्गसर्जरसान्विता ।
शुक्तिः कन्यारसैर्लीढा श्वेतप्रदरनाशिनी ॥७७॥

शुक्तिनामानि व्यवहार्य्याणि । जयन्ती "जयन्तर" इति लोके । केनचिदम्लेनेति यथालाभम् । शुक्तिकायाः यद्बाह्यं मलदूषितं धूसरं स्तरं तत्त्याज्यम् ॥

इष्टकावर्णसङ्काशां इति धूसररक्तां, मूत्रशर्करां तदाख्यरोगविशेषं 'Urates' इत्याङ्गलभाषायाम् । जठरामयोऽतीसारग्रहणिकाप्रभृतिः ॥६८-७०॥

वरा त्रिफला, मधुकं मधुयष्टी । धात्री आमलकी । अनलः चित्रकः । तृणपञ्चकं

यावशूकजसंयुक्ता तथा सैन्धवसंयुता ।
गोदध्ना शुक्तिका पीता जठरामयनाशिनी ॥७८॥

## अथ जलशुक्तेर्नामानि ।

जलशुक्तिस्तथा क्षुद्रशुक्तिका तोयशुक्तिका ।
कृमिशुक्तिश्च शम्बूका पुष्टिका ह्रस्वशुक्तिका ॥७९॥

### जलशुक्तिकायाः शोधनं मारणञ्च ।

शुक्तिवच्छोधनं तस्या मारणञ्चापि कीर्तितम् ।
अङ्गाराग्नौ तु वा न्यस्य मारयेद्वारिशुक्तिकाम् ॥८०॥

### अस्या गुणाः ।

जलशुक्तिः शूलहरा कटुः स्निग्धा च दीपनी ।
बल्या गुल्महरा रुच्या विषदोषहरा मता ॥८१॥

## अथ वराटकस्य नामानि ।

वराटको वराटश्च वराटी च वराटिका ।
कपर्दकः कपर्दश्च कपर्दी च कपर्दिका ॥८२॥
बालक्रीडनकश्चापि चरो वर्यश्चराचरः ।
वराटकं वराटं च कपर्दं च निगद्यते ॥८३॥

### वराटकस्य भेदाः ।

वराटिका त्रिधा प्रोक्ता पीता श्वेता च धूसरा ।
पीतोत्तमा मध्यमा तु श्वेतान्या त्वधमा मता ॥८४॥

### ग्राह्यवराटिकायाः स्वरूपम् ।

दीर्घवृन्ता स्वर्णवर्णा पृष्ठे च ग्रन्थिला तथा ।
सार्द्धैकशाणप्रमिता वराटी कथितोत्तमा ॥८५॥
शाणोन्मिता मध्यमा स्याच्छाणार्द्धप्रमिताधमा ।
रसज्ञैरुत्तमैवेह भस्मकर्मणि शस्यते ॥८६॥

"कुशः काशः शरो दर्भ इक्षुश्चेति" तेषां मूलानि ग्राह्याणि । सर्जरसः रालः । स्पष्टमन्यत् ॥७१-७८॥

जलशुक्तिनामानि व्यवहार्य्याणि । अङ्गाराग्नौ तु वा मारणं सौकर्य्याय । व्याख्यासमानमन्यत् ॥७९-८१॥

अथ वराटकः—वराटकस्य त्रिधा भेदज्ञापनमौषधेषु व्यवहार्य्यग्रहणाय । उत्तमवराटस्वरूपञ्च दीर्घवृन्तेत्यादिना—एतादृशं हि बहुसत्वं, स्वल्पसत्वमन्यत् । उक्तञ्च—"पीताभा ग्रन्थिला पृष्ठे दीर्घवृन्ता वराटिका । सार्धनिष्कभरा श्रेष्ठा निष्कभारा च मध्यमा ।" इति । उत्तमैव भस्मीकरणाय ग्राह्या च ॥८२-८६॥

वराटिकायाः शोधनम् ।

दोलायन्त्रे तु यामैकं काञ्जिकेन वराटिका ।
स्विन्ना प्रक्षालिता चोष्णवारिणा शुद्धिमाप्नुयात् ॥८७॥

द्वितीयः शोधनप्रकारः ।

दोलायन्त्रे तु यामैकं कुलत्थक्वथिताम्भसा ।
स्विन्ना वराटिका शीघ्रं शुद्धिमायात्यनुत्तमाम् ॥८८॥

तृतीयः शोधनप्रकारः ।

अम्लेन केनचिद्वापि दोलायन्त्रे विपाचिता ।
वराटी याममात्रेण विशुद्ध्यति न संशयः ॥८९॥

चतुर्थः शोधनप्रकारः ।

निम्बूकाम्लद्रवोपेता दोलायन्त्रे वराटिका ।
परिस्विन्ना तु यामैकं शुद्धिमायात्यनुत्तमाम् ॥९०॥

वराटिकाया मारणम् ।

वराटकांस्तु विमलान् शरावे स्थापयेद्भिषक् ।
शरावेणापरेणाथ सम्यगाच्छादयेत्ततः ॥९१॥
सन्धिलेपं ततः कृत्वा शोषयेदातपे पुनः ।
करीषाग्नौ पचेत्कामं यत्नतस्तु भिषग्वरः ॥९२॥
स्वाङ्गशीतं समुद्धृत्य खल्वे सञ्चूर्णयेत्ततः ।
शरदिन्दुनिभं भस्म सर्वयोगेषु योजयेत् ॥९३॥

अपरः प्रकारः ।

वराटिका विशोधिता त्वलातकानले स्थिता ।
यदा भवेत्प्रफुल्लिता मृता तदाशनोचिता ॥९४॥

अस्या गुणाः, मात्रा च ।

वराटी दीपनी चोष्णा नयनातङ्कहारिणी ।
कर्णस्रावहरात्यर्थं वह्निमान्द्यविनाशिनी ॥९५॥
पक्तिशूलादिशमनी ग्रहणीगजसिंहिका ।
क्षयस्फोटापहा वृष्या मात्रा रक्तिद्वयोन्मिता ॥९६॥

दोलायन्त्रे यामैकं काञ्जिके स्वेदनात् शुद्धिः । तथा चाहुः स्म पूर्वे—"वराटाः काञ्जिके स्विन्नाः यामाच्छुद्धिमवाप्नुयुः" इति । तथा कुलत्थक्वाथेनापि शुद्ध्यत्येवमेव । अपि वा केनचित् इति यथालाभम् । निम्बूकाम्लं प्रागुक्तम् ॥८७-९०॥

सर्वयोगेषु कपर्दभस्मप्रक्षेपसाध्येषु ॥९१-९३॥

अलातकानले अलातः प्रज्वलितं काष्ठं तस्माज्जायमाने अग्नौ । एतेन विनापि शरावद्वयसम्पुटेन सम्पादनीयं कदाचिद् वराटभस्मेति सूचितम् ॥९४॥

वराटी वह्निदीपनी, वीर्य्येण उष्णा च । मात्राप्रमाणं साधारणम् ॥

वराटिकाया आमयिकः प्रयोगः।

समुद्रफेनसंयुक्ता श्लक्ष्णपिष्टा वराटिका ।
ध्माता श्रुतिपुटेऽत्यर्थं पूयस्रावं व्यपोहति ॥९७॥
कटुत्रिकसमायुक्ता वह्निमान्द्यं विनाशयेत् ।
वासकस्वरसोपेता वराटी कासनाशिनी ॥९८॥
निम्बूकाम्लसमायुक्ता कटुत्रिकसमन्विता ।
वराटी शीलिता शीघ्रं नाशयेच्छूलमुद्धतम् ॥९९॥
मृदारश्रृङ्गसंयुक्ता श्लक्ष्णपिष्टा वराटिका ।
अवचूर्णनयोगेन विस्फोटान् विविधान् हरेत् ॥१००॥
शङ्खऋयूषणसंयुक्ता मृता खलु वराटिका ।
दिनसप्तकमात्रेण ग्रहणीं नाशयेद् ध्रुवम् ॥१०१॥
रससिन्दूरसंयुक्ता मृता खलु वराटिका ।
यज्ञोदुम्बरतोयेन रक्तपित्तं विनाशयेत् ॥१०२॥

अथ मृगश्रृङ्गस्य नामानि ।

मृगश्रृङ्गं त्वेणश्रृङ्गं तथा मृगविषाणकम् ।
हरिणश्रृङ्गकञ्चैव समाख्यातं भिषग्वरैः ॥१०३॥

ग्राह्यमृगश्रृङ्गस्य स्वरूपम्।

कीटानुपहतं दीर्घं भाराढ्यं सुदृढं तथा ।
अनेकश्रृङ्गसंयुक्तं मृगश्रृङ्गं वरं मतम् ॥१०४॥

मृगश्रृङ्गस्य मारणम्।

मृगश्रृङ्गं समादाय करपत्रेण कर्तयेत् ।
खण्डशः कारयित्वा च त्वङ्गाराग्नौ दहेत्ततः ॥१०५॥
सुदग्धञ्चाथ विज्ञाय खल्वे सञ्चूर्णयेद्भिषक् ।
रविदुग्धेन सम्पेष्य चक्रिकाः कारयेत्ततः ॥१०६॥
शरावसम्पुटान्तःस्थं पुटेत्तीव्राग्निना भिषक् ।
त्रिवारं पुटनादेणविषाणं मृतिमाप्नुयात् ॥१०७॥

अस्य आमयिकः प्रयोगः ।

मृगश्रृङ्गसमुद्भूता विभूतिर्गव्यसर्पिषा ।
विनाशयेत् क्षणादेव हृच्छूलमतिदारुणम् ॥१०८॥
हरिणविषाणसमुत्था भूतिः क्षौद्रेण रक्षिमिता ।
अपहरतीह निकामं हृच्छूलं पार्श्वशूलञ्च १०९॥

आमयिकः प्रयोगः सुगम. ॥९७-१०२॥
मृगश्रृङ्गं कीटानुपहतं ग्राह्यं, कीटजग्धं हि निःसारं भवति ॥१०४॥
करपत्रं क्रकचम् । हृच्छूलं पार्श्वशूलञ्चैतद् व्यपोहति ॥१०५-१०९॥

## अथ समुद्रफेनस्य नामानि ।

समुद्रफेनः फेनश्च सुफेनः फेनकस्तथा ।
अब्धिफेनश्च फेनश्च डिण्डीरोऽब्धिकफो मतः ॥११०॥

### समुद्रफेनस्य शोधनम् ।

पृष्ठास्थीन्यब्धिफेनस्य विलिख्यापनयेत्ततः ।
खल्वे सम्पेष्य यत्नेन श्लक्ष्णचूर्णञ्च कारयेत् ॥१११॥
निम्बूकस्वरसेनाथ भावयेदेकवारकम् ।
एवमब्धिकफः शीघ्रं शुद्धिमायात्यनुत्तमाम् ॥११२॥

### अस्य गुणाः, मात्रा च ।

समुद्रफेनः शिशिरो लेखनः पाचनः सरः ।
चक्षुष्यो दीपनश्चैव श्रुतिस्रावहरः परम् ॥११३॥
विषदोषप्रशमनः कषायः कफनाशनः ।
कुष्ठरोगहरोऽत्यर्थं मात्रा रक्तिद्वयोन्मिता ॥११४॥

### अस्य आमयिकः प्रयोगः ।

समुद्रफेनचूर्णन्तु सितया श्लक्ष्णपिष्टया ।
नेत्रशुक्रं निहन्त्याशु चिरजातमपि ध्रुवम् ॥११५॥
शङ्खसैन्धवसंयुक्तः सुफेनोऽर्कशलाकया ।
नेत्रयोरञ्जनादाशु शुक्रादीन् शस्त्रवल्लिखेत् ॥११६॥
पिप्पलीसैन्धवोपेतः फेनको मधुनाञ्जनात् ।
विनाशयेच्छुक्रदोषं दृशोश्चिरसमुत्थितम् ॥११७॥
तुत्थषड्गुणितः फेनः पथ्यया तुत्थतुल्यया ।
वर्तिः कृताञ्जनाद्वारा पोथक्यादिविनाशिनी ॥११८॥
रालसैन्धवरसाञ्जनान्वितः फेनकस्तु वटकीकृतोऽञ्जनात् ।
क्लिन्नवर्त्मविनिवारणः परं पद्मरोहणकरश्च कीर्तितः ॥११९॥
चूर्णितं त्वब्धिफेनं तु प्रध्मातं श्रुतिसम्पुटे ।
विनाशयेच्छ्रुतिस्रावं चिरजातमपि द्रुतम् ॥१२०॥
सूतगन्धकसंयुक्तस्त्वथवा हिङ्गुलान्वितः ।
समुद्रफेनस्त्वशनात्कफपित्तज्वरापहः ॥१२१॥

समुद्रफेनस्य शोधनम्—पृष्ठास्थ्नां विलेखनं निःसारत्वात् कठिनत्वाच्च । निम्बूकस्वरसेन शोधनं भक्षणार्थम् । यदुक्तम्—"अशुद्धः स करोत्यङ्गभङ्गं तस्माद्धि शोधयेत्" इति । "समुद्रफेनः सम्पिष्टो निम्बुतोयेन शुद्ध्यति" इति च ॥

शिशिरो वीर्य्ये, लेखनो दोषाणाम्, पाचन आमस्य। मात्रा रक्तिद्वयोन्मिता।

मृद्दारशृङ्गसंयुक्तं त्वब्धिफेनं सुचूर्णितम् ।
मधुना व्रणसंलेपादुत्तमं व्रणरोपणम् ॥१२२॥
कोकिलाक्षककालेयकट्फलोशीरकेक्षुकैः ।
एतैर्वा चूर्णितैर्लीढो डिण्डीरः शुक्रशोधनः ॥१२३॥

अब्धिफेनस्य उत्पत्तिस्थानम् ।

समुद्रे वर्तुलः क्षुद्रो दशहस्तसमन्वितः ।
मीनजातिसमुत्पन्नो जन्तुरेको विलक्षणः ॥१२४॥
भीषणाक्षः कूर्मपृष्ठः स यदा विजहात्यसून् ।
तत्पृष्ठास्थि विशुष्कन्तु फेनाभं दृश्यते तदा ॥१२५॥
अब्धिमध्ये तरत्येतत्तरङ्गैराहतं मुहुः ।
यतोऽब्धौ फेनवच्चारि त्वब्धिफेनं ततः स्मृतम् ॥१२६॥

इति शङ्खादिविज्ञानीयो नाम द्वादशस्तरङ्गः ।

---

## अथ क्षारत्रिकविज्ञानीयस्त्रयोदशस्तरङ्गः ।

अथ यवक्षारस्य नामानि ।

यवक्षारो यवापत्यं यवजो यवशूकजः ।
यव्यो यवाग्रजश्चैव यवाह्वो यवनालजः ॥१॥
यवशूको यावशूकः शूकजो यावशूकजः ।
याव्यस्तथैव पाक्यश्च समाख्यातो भिषग्वरैः ॥२॥

यवक्षारस्य निर्माणप्रकारः ।

यवशूकभवं भस्म समादाय भिषग्वरः ।
सलिलेऽष्टगुणे क्षिप्त्वा विमले भाजने ततः ॥३॥
सप्तवारं प्रयत्नेन स्रावयेत्पृथुवाससा ।
स्रावितं सलिलञ्चाथ चुल्ल्यां तीव्राग्निना पचेत् ॥४॥
निःशेषं सलिलं ज्ञात्वा पाकपात्रतलस्थितम् ।
यवक्षारं प्रयत्नेन गृह्णीयात्पाण्डुरप्रभम् ॥५॥

भक्षणाय ॥ वारा जलेन अञ्जनात् इति अन्वयः । कालेयकः पीतचन्दनम् । उत्पत्तिवर्णनं फेनत्वेन भ्रमवारणाय । स्पष्टमन्यत् ॥११३-१२६॥

यवक्षारः समाख्यातो भिषग्वरैरिति तत्तद्ग्रन्थेषु एतन्नाम्ना व्यवहृतः ॥

सप्तवारं स्रावणमत्यन्तनिर्मलतासम्पादनाय । अथवा सारकपत्रेण सकृत्स्रावणं कर्तव्यम् ॥३-५॥

यवक्षारस्य गुणाः ।

यवक्षारो लघुः स्निग्धो दीपनः पाचनः परम् ।
गुल्मप्लीहामयहरः कफहा वातनाशनः ॥६॥
शूलानाहोदराध्मानमूत्रकृच्छ्रप्रणाशनः ।
कण्ठामयहरो हृद्यश्चाम्लपित्तहरः सरः ॥७॥
औपसर्गिकमेहोत्थफलशोथनिवारणः ।
स्वेदप्रवर्तकश्चैव भिषग्भिर्मूत्रलो मतः ॥८॥

यवक्षारस्य मात्रा

आरभ्य रक्तित्रितयाद् दशरक्तिकसंमितम् ।
यवक्षारं प्रयुञ्जीत बलकालाद्यपेक्षया ॥९॥

यवक्षारस्य आमयिकः प्रयोगः ।

चूर्णितो यवजक्षारो निपीतस्तूष्णवारिणा ।
सर्पिषा वा समाख्यातो मक्कलाभिधशूलनुत् ॥१०॥
जरणत्र्यूषणोपेतो यवक्षारस्तु शीलितः ।
भोजनादौ तदन्ते च दीपनः पाचनः स्मृतः ॥११॥
रोहीतकक्षोदयुतस्त्वथवा शरपुङ्खया ।
शीलितस्तु यवक्षारो गुल्मप्लीहनिकृन्तनः ॥१२॥
मरीचनागरोपेतो यवजस्तूष्णवारिणा ।
द्वित्रिर्वारप्रयोगेण वातशूलं हरेद् भृशम् ॥१३॥
एलासितोपलोपेतः शीलितो यवशूकजः ।
मूत्रकृच्छ्रं निहन्त्याशु दाहशोथादिसंयुतम् ॥१४॥
गोक्षुरक्वाथसंयुक्तो यवक्षारस्तु शीलितः ।
शकृद्विघातजं शीघ्रं मूत्रकृच्छ्रं विनाशयेत् ॥१५॥
तक्रेण तु यथाकामं यवक्षारस्तु शीलितः ।
अश्मरीं नाशयत्याशु मूत्रकृच्छ्रञ्च दारुणम् ॥१६॥
शर्करासंयुतो यव्यः कूष्माण्डस्वरसेन वै ।
निपीतो नाशयत्याशु मूत्रकृच्छ्रादिकान् गदान् ॥१७॥
अजमोदात्रिकटुककणोपेतो यवोद्भवः ।
क्षारस्तु भक्षणादाशु वातोत्थोदररोगनुत् ॥१८॥

अथ गुणाः—लघुः पाकतः, स्निग्धः स्नेहनद्रव्यगुणयोगी । पूयमेहे जातमण्डशोथं विनाशयति ॥६-८॥

२ गुञ्जातः १० गुञ्जापर्यन्तं मात्रास्य ॥९॥

यवक्षारस्य रोगयोग्यः प्रयोगः—मक्कलशूलनाशाय सुश्रुतोक्तपिप्पल्यादि-

हिङ्गुत्रिकटुकोपेतः सकुष्ठश्च ससैन्धवः ।
बीजपूररसैः पीतः प्लीहशूलहरः परम् ॥१६॥
यवक्षारस्तु निम्बूकरसेन परिशीलितः ।
मूत्रलः स्वेदजनकः स्मृतश्च ज्वरनाशनः ॥२०॥
शङ्खभस्मयुतो यव्यः सव्योषश्च ससैन्धवः ।
उष्णोदकेन सम्पीतो हन्ति शूलं त्रिदोषजम् ॥२१॥
वासकस्वरसोपेतो यवशूकसमुद्भवः ।
क्षारस्तु शीलितोऽत्यर्थं बहुमूत्रं निवारयेत् ॥२२॥
बब्बूलस्वरसेनापि तन्निर्यासेन वाशितः ।
यवजः स्वल्पकालेन त्वौपसर्गिकमेहनुत् ॥२३॥
शिग्रुक्वाथयुतः पीतः सक्षौद्रो यवशूकजः ।
पार्श्वशूलं बस्तिशूलं हृच्छूलञ्चैव नाशयेत् ॥२४॥
यवक्षारस्तु सततं कटुतैलेन लेपितः ।
कुष्ठं सिध्माभिधं हन्ति मासमात्रप्रयोगतः ॥२५॥
यवजः श्वेतवर्षाभूस्वरसेन निषेवितः ।
उरस्तोयाख्यहृद्रोगजनितां हन्ति वै रुजम् ॥२६॥
यवजो निम्बुकद्रावैस्तिलक्षारयुतोऽशितः ।
बस्तिशूलं निहन्त्याशु मूत्ररोधश्च नाशयेत् ॥२७॥
शुण्ठीगोक्षुरवरुणक्वाथनिपीतो यवक्षारः ।
सगुडक्षेपं त्वचिरान्नियतं वाताश्मरीं जयति ॥२८॥
कूष्माण्डस्वरसोपेतं सगुडं यवशूकजम् ।
शीलितं नाशयेन्मूत्राघातं शुक्राश्मरीं तथा ॥२६॥
पाषाणभेदवरुणगोक्षुरक्वाथसंयुतम् ।
शीलितं यवजं हन्ति बस्तिशूलं तथाश्मरीम् ॥३०॥
सारिवाक्वाथसंयुक्तो यवक्षारस्तु शीलितः ।
औपसर्गिकमेहोत्थां बाधामाशु विनाशयेत् ॥३१॥
दशमूलकषायेण यवक्षारः ससैन्धवः ।
गुल्मं शूलं च हृद्रोगं कासं श्वासञ्च नाशयेत् ॥३२॥

गणक्वाथेन सह यवक्षारो बहुधा दीयत इत्यप्यवधेयम् । जरणं जीरकम् । शीतलेन जलेन त्रिवारमेकवासरे दत्तो यवक्षारोऽण्डशोथमपि पूयमेहजं हन्ति ॥१०-३२॥

अथ निम्बूकाम्लीययवजस्य नामानि ।

निम्बूकाम्लीययवजो निम्बूकाम्लीयशूकजः ।
निम्बवम्लीययवक्षारः स एव परिकीर्तितः ॥३३॥

अस्य निर्माणप्रकारः ।

काचपात्रे यवक्षारं चतुर्विंशतिभागिकम् ।
द्रावयेच्छीतसलिले रसज्ञः समभागिके ॥३४॥
निम्बूकाम्लं सुविमलं त्वथ विंशतिभागिकम् ।
द्रावयेदन्यपात्रस्थं जले तु समभागिके ॥३५॥
पात्रे काचादिलिप्ते तु मेलयेदनयोर्द्रवम् ।
चुल्ल्यां निधायाथ पचेत्तोयांशं परिशोषयेत् ॥३६॥
घनसारप्रभं चूर्णं रसविज्ञः समाहरेत् ।
विबुधैः कीर्तितोऽयं तु निम्बूकाम्लीयशूकजः ॥३७॥

अस्य गुणाः ।

निम्बूकाम्लीययवजो मूत्रलः श्लेष्मभेदनः ।
ज्वरघ्नः स्वेदजनको जलोदरहरः परम् ॥३८॥
वृक्कशोथप्रशमनो विशेषाद् वृक्कशूलनुत् ।
मूत्ररोधहरः कामं तथा श्लैष्मिककासनुत् ॥३९॥

निम्बूकाम्लीययवजस्य मात्रा ।

आरभ्य पञ्चगुञ्जातो दशगुञ्जोन्मितं परम् ।
निम्बूकाम्लीययवजं प्राणाचार्यः प्रयोजयेत् ॥४०॥

अस्य आमयिकः प्रयोगः ।

तत्तद्रोगविशेषेषु सलिलाद्यनुपानतः ।
निम्बूकाम्लीययवजं योजयेन्मात्रया भिषक् ॥४१॥

## अथ सर्जिक्षारस्य नामानि ।

स्वर्जिकः स्वर्जिका स्वर्जिः स्वर्जः स्वर्जी सुवर्चिका ।
स्वर्जका स्वर्जिकाक्षारः सर्जिः सर्जी च सर्जिका ॥४२॥

अथ निम्बूकाम्लीययवजो नवीनपरिभाषितो बहुलगुणश्च—निर्माणप्रकारो व्याख्यातप्रायः। निम्बूकाम्लं प्रागुक्तम्। काचादिलिप्त इति आदिशब्दाद्वङ्गादिलिप्ते पित्तलपात्रेऽपीति ज्ञेयम्। घनसारप्रभं अत्यच्छत्वात् कर्पूरकान्ति ॥३३-३७॥

अस्य गुणाः—विशेषाद् वृक्करोगापनयनक्षमः। मात्रा १० गुञ्जापर्यन्तम् ॥ अयं सलिले सन्द्राव्य प्रायशः प्रयुज्यते ॥३८-४१॥

सर्जिक्षारनामानि तानि तानि तन्त्रेषु व्यवहृतानि। उष्ट्रप्रिया क्षुद्रदुरालभा, सा हि मरुप्रदेशे विशेषेण जायते। पञ्चनददेशे "लाना" इति नाम्ना प्रसिद्धा।

सुवर्चकः सुवर्चिश्च सुवर्चोऽथ सुवर्चिकः ।
सुखोर्जिकः कपोतश्च सुखवर्चः सुखार्जिकः ॥४३॥
रुचकं सृजिकाक्षारः स्वर्जिक्षारस्तथैव च ।
सौवर्चलं सुवर्ची च समाख्यातो भिषग्वरैः ॥४४॥

सर्जिक्षारस्य निर्माणप्रकारः ।

उष्ट्रप्रियाक्षुपं दग्ध्वा यत्नात् क्षारं समाहरेत् ।
तोयेऽष्टगुणिते क्षिप्त्वा भाजने विमले ततः ॥४५॥
सप्तकृत्वः प्रयत्नेन स्रावयेत्पृथुवाससा ।
स्रावितं सलिलञ्चाथ पचेद् गाढं भिषग्वरः ॥४६॥
निःशेषे सलिले तत्र स्थालिकातलसंस्थितम् ।
हिमकुन्देन्दुसङ्काशं सर्जिक्षारं समाहरेत् ॥४७॥

सर्जिक्षारस्य गुणाः ।

सर्जिक्षारः स्मृतस्तीक्ष्णः कटुरुष्णश्च पाचनः ।
समीरणहरः कामं कासश्वासनिवारणः ॥४८॥
अग्निदीप्तिकरश्चैव गुल्माध्मानविनाशनः ।
व्रणोदरामयहरः कृमिघ्नश्च प्रकीर्तितः । ४६॥

सर्जिक्षारस्य मात्रा ।

आरभ्य रक्तित्रितयाद् रविरक्तिकसंमितम् ।
सर्जिक्षारं प्रयुञ्जीत बलकालाद्यपेक्षया ॥५०॥

सर्जिक्षारस्य आमयिकः प्रयोगः ।

कणाजरणचूर्णेन सर्जिका परिशीलिता ।
रक्तित्रयमितात्यर्थं दीपनी पाचनी मता ॥५१॥
सर्जिका मधुना लीढा वासासत्वसमन्विता ।
वातिकं श्लैष्मिकञ्चापि कासं श्वासञ्च नाशयेत् ॥५२॥
सर्जिक्षारश्चतुर्गुञ्जः शीलितः शीतवारिणा ।
अम्लपित्तं निहन्त्याशु त्वम्लोद्गारांश्च निर्भरम् ॥५३॥
यवानिकात्र्यूषणचूर्णयुक्ता सुवर्चिका वै त्रिदिनोपयुक्ता ।
आध्मानयुक्तान् गुदमार्गजातान् कृमीन्निहन्यात्कृमिजांश्च रोगान् ॥
केतकीक्षारसंयुक्ता सकुष्ठा खलु सर्जिका ।
तैलेन पीता त्वचिराद् वातगुल्मं विनाशयेत् ॥५५॥

"अन्या क्षुद्रदुरालम्भा मरुस्था मरुसम्भवा । विशारदाजभक्षा स्यादजादन्युष्ट्रभक्षिका ।" इति राजनिघण्टुः । मात्रास्य द्वादशगुञ्जापर्य्यन्तम् ॥४२-५०॥

सर्जिक्षारो गुडोपेतः शीलितस्तूष्णवारिणा ।
नाशयेदचिरादेव गुल्मपीडां नवोत्थिताम् ॥५६॥
बीजपूरद्रवोपेता स्वर्जिका स्वल्पमात्रया ।
कर्णक्षिप्ता हन्ति कर्णस्रावं दाहं रुजादिकम् ॥५७॥

अथ निम्बूकाम्लीयसर्जिकाया निर्माणप्रकारः ।

विध्वब्धिभागप्रमितां सर्जिकान्तु समाहरेत् ।
द्विगुणे शीतसलिले द्रावयेद्भिषजां वरः ॥५८॥
खनेत्रभागप्रमितं निम्बूकाम्लं समाहरेत् ।
तुल्ये तोये चान्यपात्रे तथैव द्रावयेद्भिषक् ॥५९॥
पात्रे काचप्रलिप्ते तु मेलयेदुभयोर्द्रवम् ।
मृद्वग्निना चुल्लिकायां पचेत्तोयञ्च शोषयेत् ॥६०॥
निःशेषं सलिलं ज्ञात्वा शुभ्रं चूर्णं समाहरेत् ।
भिषग्वरैः समाख्याता निम्बूकाम्लीयसर्जिका ॥६१॥

निम्बूकाम्लीयसर्जिकाया गुणाः ।

क्षीरच्छर्दिप्रशमनी वह्निमान्द्यापहारिणी ।
आध्मानशूलविष्टम्भहारिणी कान्तिकारिणी ॥६२॥
ग्राहिणी शिशिरा चैव विशेषाद् दुग्धपाचनी ।
पिपासनाशिनी चेयं निम्बूकाम्लीयसर्जिका ॥६३॥

अस्या बालकोचिता मात्रा ।

गुञ्जैकतः समारभ्य गुञ्जाद्वितयसंमिताम् ।
प्राणाचार्यः प्रयुञ्जीत निम्बूकाम्लीयसर्जिकाम् ॥६४॥

पूर्णमात्रा ।

आरभ्य पञ्चगुञ्जातो दशगुञ्जोन्मितां परम् ।
रसविद्भिर्नियुञ्जीत निम्बूकाम्लीयसर्जिकाम् ॥६५॥

अस्या आमयिकः प्रयोगः ।

रक्तिद्वयमितेयं तु निम्बूकाम्लीयसर्जिका ।
पलद्वयमितेनेह गव्यदुग्धेन योजिता ॥६६॥

जरणं जीरकम् । स्पष्टप्रायमन्यत् ॥५१-५७॥

निम्बूकाम्लीयसर्ज्जी—तत्र च सर्जिक्षारस्य ४१ भागाः, जलस्य ८२ भागाः, निम्बूकाम्लस्य २० भागाः, जलस्य २० भागाः । पृथक्-पृथक् द्रावयित्वा पश्चादुभयोर्मेलनं विधाय वह्नौ पचनीयम् ॥५८-६१॥

अस्य गुणाः प्रायो व्यवहरणीयाः बालरोगेषु । बालयोग्या च मात्रा

निपीता प्रत्यहं त्वेवं निम्बूकाम्लीयसर्जिका।
क्षीरच्छर्दिहरा चैव वह्निमान्द्यापहा मता ॥६७॥
आध्मानक्षोभशमनी त्वतीसारोदरापहा।
कान्तिप्रदा विशेषेण देहपुष्टिकरी मता ॥६८॥
कृशानां मातृहीनानां शिशूनामत्यजीर्णिनाम्।
क्षीरं छर्दयताञ्चैतद् विशेषात्परमौषधम् ॥६९॥
निर्दिष्टमात्रयैवेह निम्बूकाम्लीयसर्जिकाम्।
शिशुभ्यः क्षीरपायिभ्यः प्रयुञ्जीत भिषग्वरः ॥७०॥
दुग्धपानभवेऽजीर्णे यूनां वर्षीयसामपि।
रसवैद्यैः प्रशस्तेयं निम्बूकाम्लीयसर्जिका ॥७१॥

अथ टङ्कणस्य नामानि।

टङ्कणष्टङ्कनश्चैव टङ्कष्टङ्गश्च टङ्गणः।
द्रावकष्टङ्कणक्षारष्टङ्कक्षारश्च कथ्यते ॥७२॥
रङ्गक्षारस्तथा रङ्गो रङ्गदो लोहशोधनः।
लोहश्लेषणकश्चापि कीर्तितः स्वर्णशोधनः ॥७३॥
सौभाग्यञ्च सितक्षारः श्वेतक्षारश्च टङ्ककः।
क्षारराजश्च कथितो रसायनविशारदैः ॥७४॥

टङ्कणस्य निर्मलीकरणम्।

टङ्कणं चूर्णितं तोये तत्वसङ्ख्यगुणे भिषक्।
सन्द्राव्य वस्त्रपूतञ्च कृत्वा चुल्ल्यां निधापयेत् ॥७५॥
तीव्राग्निना पचेत्कामं नीरं च परिशोषयेत्।
स्वल्पनीरांशशेषे च टङ्कणं निर्मलं हरेत् ॥७६॥

टङ्कणस्य शोधनम्।

सुचूर्णितं टङ्कणं तु खलु पञ्चपलोन्मितम्।
समुज्ज्वलोदरे क्षुद्रकटाहे विन्यसेत्ततः ॥७७॥
चुल्लिकायां निधायाथ पचेद् दर्व्या प्रचालयन्।
सुपुष्पितं नष्टनीरं शुद्धिमायाति टङ्कणम् ॥७८॥

२ गुञ्जापर्यन्तम्। रोगेषु प्रयोगप्रकारश्च सुगमः प्रायः। अपि च दुग्धाजीर्णे सति युवानो वृद्धाश्चाप्येनां व्यवहरेयुः॥ स्पष्टमन्यत् ॥६२-७१॥

अथ टङ्कणः—टङ्कणनामानि तन्त्रे व्यवहार्य्याणि, कानिचिद्गुणरूप निर्देशकराणि चेति ॥७२-७४॥

टङ्कणस्य निर्मलीकरणम्—तत्वानि चतुर्विंशतिः, तथाच चतुर्विंशतिगुणे इत्यर्थ। एतच्च निर्मलीकरणं टङ्कणाम्लादिषु क्षेपार्थम्। टङ्कणस्य शोधनन्तु भक्षणार्थमेवेति विशेषः ॥७५-७८॥

अस्य गुणाः ।

टङ्कणः कटुरुष्णश्च रूक्षस्तीक्ष्णश्च सारकः ।
कफविश्लेषणो हृद्यो वातामयनिषूदनः ॥७९॥
कासश्वासहरः कामं स्थावरादिविषापहः ।
अग्निदीप्तिकरश्चापि भृशमाध्माननाशनः ॥८०॥
स्त्रीपुष्पजननो बल्यो विविधव्रणनाशनः ।
पित्तकृच्च समाख्यातो मूढगर्भप्रवर्तकः ॥८१॥

अस्य आमयिकः प्रयोगः ।

कट्फलत्र्यूषणोपेतः सिंहीयवजसंयुतः ।
टङ्कणो मधुना लीढः कफविश्लेषणः परम् ॥८२॥
टङ्कणस्त्र्यूषणोपेतस्तुल्यजैपालसंयुतः ।
मृदुरेचनकृच्चैव सर्वोदरविनाशनः ॥८३॥
तत्वसङ्ख्यगुणे तोये द्रावितः कवलग्रहैः ।
टङ्कः सूतविकारोत्थं लालास्रावं विनाशयेत् ॥८४॥
सबोलष्टङ्कणो युक्त्या मुहुर्मृद्ववघर्षितः ।
विनाशयेत् क्षतं घोरं दन्तवेष्टसमुत्थितम् ॥८५॥
विमलष्टङ्कणक्षारश्चूषितस्तु शनैः शनैः ।
स्वरावरोधं कण्ठस्य नाशयेदतिसत्वरम् ॥८६॥
सत्र्यूषणष्टङ्कणस्तु मधुना परिशीलितः ।
विनाशयेत् क्षणेनैव त्वाध्मानमतिदारुणम् ॥८७॥
सरामठः सयवजष्टङ्कणः परिशीलितः ।
सन्ध्याद्वये सप्तदिनं नाशयेत् स्नायुकामयम् ॥८८॥
लवङ्गशुण्ठीमरिचसमुपेतस्तु टङ्कणः ।
मयूरक्षारसंयुक्तो भुक्तमांसादिजारणः ॥८९॥
सुचूर्णितष्टङ्कणस्तु व्रणेषु त्ववचूर्णनात् ।
निहन्ति रुधिरस्रावं सद्य एव सुदारुणम् ॥९०॥
टङ्कणं वह्निसम्भृष्टं मधुना सह लेपयेत् ।
मुखपाकं निहन्त्याशु दाहशोथादिसंयुतम् ॥९१॥
सुचूर्णितं टङ्कणन्तु द्रावयेद्विमले जले ।
योनौ बस्तिप्रयोगेण पिडकादिरुजं हरेत् ॥९२॥

अथास्य गुणाः—कफविश्लेषणः श्लेष्मनिःसारणः । स्पष्टप्रायमन्यत् ॥
अथास्य रोगयोग्यः प्रयोगः—सिंही वासकः "भिषङ्माता च सिंहिका"

पुरातनगुडोपेतष्टङ्कणस्तु विचूर्णितः ।
अवचूर्णनयोगेन प्रशस्तो व्रणरोपणे ॥९३॥
सौभाग्यं वह्निसम्भृष्टं श्वेतचन्दनपङ्कयुक् ।
लेपेन नाशयत्याशु सिध्मरोगं न संशयः ॥९४॥
काकमाचीद्रवोपेतं टङ्कणं परिशीलितम् ।
विनिहन्त्यचिरादेव चर्मि खलु सुदारुणाम् ॥९५॥

टङ्कणामृतमलहरः ।

सुपुष्पितं टङ्कणं तु तोलकद्वयसंमितम् ।
सिक्थतैलं च विमलं भानुतोलकसंमितम् ॥९६॥
तोलकार्द्धमिता चैव सर्जिका विमलीकृता ।
विशुद्धं पुष्पकाशीसं सर्जिकासमभागिकम् ॥९७॥
माषद्वयमितः क्षारः पिप्पलत्वक्समुत्थितः ।
सर्वं सम्मेल्य यत्नेन काचकुप्यां निधापयेत् ॥९८॥
मतो मलहरोऽयं तु टङ्कणामृतसंज्ञकः ।
प्रशस्यते विशेषेण दुष्टव्रणविशोधने ॥९९॥

टङ्कणाम्लस्य नामानि ।

टङ्काम्लष्टङ्कणाम्लश्च टङ्गाम्लष्टङ्गणाम्लकः ।
सुभगाम्लश्च कथितो रसतन्त्रविचक्षणैः ॥१००॥

टङ्कणाम्लस्य निर्माणप्रकारः ।

चूर्णितं टङ्कचूर्णन्तु तदर्धेऽत्युष्णवारिणि ।
द्रावयित्वा प्रयत्नेन काचपात्रे निधापयेत् ॥१०१॥
वह्नौ सन्ताप्य च ततो लवणद्रावकं क्षिपेद् ।
द्रावप्रक्षेपणादूर्ध्वं पात्रं भूमौ तु विन्यसेत् ॥१०२॥
शीतीभूते तु सलिलं शनैः खल्वपसारयेत् ।
पृथक् कुर्वीत टङ्काम्लं त्वधःपतितमुत्तमम् ॥१०३॥
टङ्कणाम्लं पुनस्तूष्णे त्रिगुणे सलिले भिषक् ।
द्रावयित्वा पुनस्तद्वत् सलिलं त्वपसारयेत् ॥१०४॥

इति निबद्धः । स्नायुकामयः "नारुवा" इति भाषाप्रसिद्धः । मयूरक्षारः अपामार्गक्षारः ॥८२-९५॥

टङ्कणामृतमलहरे भानुतोलकसंमितमिति द्वादशतोलकम् । सिक्थतैलं विना जलेन कठिनपक्वव्रणोपरि रेखाकारं लिप्तस्तं दारयति ॥९६-९९॥

टङ्कणाम्लो नवीनपरिभाषानिर्दिष्टः—तदर्धे टङ्कणादर्धे। लवणद्रावकं टङ्कणचूर्णे बिन्दुशस्तावत् क्षेप्यं यावता सर्वं तलस्थं भवेत् । पुनर्विद्राव्य पाकः अत्यन्त-

समाहरेत् टङ्कणाम्लं तलस्थमतिनिर्मलम् ।
संशोष्य च ततो वैद्यः प्रयोगेषु प्रयोजयेत् ॥१०५॥

अस्य गुणाः ।

टङ्कणाम्लस्तु भूतघ्नो नेत्राभिष्यन्दनाशनः ।
अग्निदग्धव्रणहरो मूत्रलः क्षतरोपणः ॥१०६॥
औपसर्गिकमेहोत्थव्रणबाधानिवर्हणः ।
श्वेतासृग्दरहच्चैव श्रुतिस्रावहरो मतः ॥१०७॥

टङ्कणाम्लस्य मात्रा ।

आरभ्य रक्तिद्वितयाद्रक्तिकाष्टकसंमितम् ।
टङ्कणाम्लं प्रयुञ्जीत बलकालाद्यपेक्षया ॥१०८॥

टङ्कणाम्लस्य आमयिकः प्रयोगः ।

त्रिगुञ्जष्टङ्कणाम्लस्तु वारिणा परिशीलितः ।
पूतिगन्धयुतं मूत्रस्रावं नाशयति द्रुतम् ॥१०९॥
टङ्कणाम्लो गुञ्जमितो मधुनाऽष्टगुणेन तु ।
माषोन्मितेन धौतेन नवनीतेन योजितम् ॥११०॥
स्तनक्षतं निहन्त्याशु तथा कर्णविचर्चिकाम् ।
अग्निदग्धव्रणश्चैव विविधानि व्रणानि च ॥१११॥

टङ्कणाम्लमलहरः ।

सिक्थतैलं सुविमलं ग्रहतोलकसंमितम् ।
तोलकैकमितं चैव टङ्कणाम्लकमुत्तमम् ॥११२॥
सम्मेल्य खल्वे यत्नेन काचकुप्यां तु विन्यसेत् ।
मतो मलहरोऽयं तु टङ्कणाम्लसमाह्वयः ॥११३॥

अस्य गुणाः ।

टङ्काम्लीयो मलहरो विशेषाद् व्रणशोधनः ।
अग्निदग्धव्रणहरो भूतघ्नश्च परं स्मृतः ॥११४॥

टङ्कणाम्लद्रवस्य निर्माणप्रकारः ।

दशगुञ्जापरिमितं टङ्कणाम्लं समाहरेत् ।
क्षिपेत् परिस्रुते तोये पञ्चतोलकसंमिते ॥११५॥

---

निर्मलतासम्पादनाय ॥१००-१०५॥

भूतघ्नः जीवाणुनाशकः, श्रुतिस्रावः कर्णस्रावः ॥ अस्य मात्रानिर्देशो भक्षणार्थम् । ग्रहाः नव, तस्मात् नवतोलकसम्मितम् ॥१०६-११४॥

विद्रुतं सपिधानायां काचकुप्यां तु विन्यसेत् ।
टङ्कणाम्लद्रवोऽयं तु नाम्ना ख्यातो भिषग्वरैः ॥११६॥

अस्य आमयिकः प्रयोगः ।

टङ्कणाम्लद्रवोऽयं तु क्षालने विनियोजितः ।
विनाशयेच्चिरोद्भूतं नेत्राभिष्यन्दमुद्धतम् ॥११७॥
उक्तमानकृतेनैव टङ्कणाम्लद्रवेण तु ।
प्रत्यहं विधिना दद्यात् वस्तिमुत्तरपूर्विकाम् ॥११८॥
इत्थं वस्तिप्रयोगेण दिनसप्तकमात्रकम् ।
श्वेतप्रदरजा बाधा चिरजापि विनश्यति ॥११९॥
सुभगाम्लद्रवोऽयन्तु योजितः कर्णधावने ।
सान्द्रं व्रणं तु चिरजं कर्णस्रावञ्च नाशयेत् ॥१२०॥
उक्तमानकृतेनैव टङ्कणाम्लद्रवेण तु ।
नासाप्रक्षालनाद्युक्तया पीनसात्परिमुच्यते ॥१२१॥
भागिकष्टङ्कणाम्लस्तु जलञ्च शतभागिकम् ।
लिङ्गे वस्तिप्रयोगेण वस्तिशोथं व्यपोहति ॥१२२॥

इति क्षारत्रिकविज्ञानीयो नाम त्रयोदशस्तरङ्गः ।

---

## अथ क्षारविशेषादिविज्ञानीयश्चतुर्दशस्तरङ्गः ।

अथ नवसारस्य नामानि ।

नवसारो नव्यसारस्तथैव नवसादरः ।
नृसादरो नृसारश्च नरसारश्च कीर्तितः ॥१॥
किट्टक्षारो निगदितस्तथैव नरसादरः ।
चूलिकालवणं ख्यातं चुल्लिकालवणञ्च तत् ॥२॥

नवसादरस्य शोधनम् ।

नवसारन्तु सलिले त्रिगुणे द्रावयेद्भिषक् ।
वस्त्रपूतं ततः कृत्वा भाजने स्थापयेत्ततः ॥३॥
चुल्लिकायां निधायाथ पचेत्तीव्राग्निना भृशम् ।
जले शुष्के तलस्थञ्च नृसारं विमलं हरेत् ॥४॥

टङ्कणाम्लद्रवः क्षालने नेत्रयोः—उद्धत प्रबलम् ॥११५-१२२॥
तत्रादौ नवसादरः—नामान्यस्य तन्त्रे व्यवहार्याणि ॥१-२॥
नवसादरशोधनम्—सरलप्रायम् । केचित्तु डमरूयन्त्रे मन्दाग्निना पातनेन शुद्ध्यति इत्याहुः ॥३-४॥

नवसादरस्य गुणाः ।

नवसारस्त्रिदोषघ्नः स्निग्धः सूक्ष्मो लघुस्तथा ।
पाचकः सारकस्तीक्ष्णो जठराग्निप्रदीपनः ॥५॥
उष्णः प्लीहप्रशमनो मांसाजीर्णनिवारणः ।
गुल्माध्मानप्रहरणः कफविश्लेषणः परम् ॥६॥
वृश्चिकोत्थविषघ्नश्च लोहद्रावणकस्तथा ।
हृदामयहरो नेव्यः श्वित्रकुष्ठहरस्तथा ॥७॥

नवसादरस्य मात्रा ।

द्विगुञ्जतश्चाष्टगुञ्जमितं तु नवसादरम् ।
प्राणाचार्यः प्रयुञ्जीत बलकालाद्यपेक्षया ॥८॥

नवसादरस्य आमयिकः प्रयोगः ।

जरणत्र्यूषणोपेतो नरसारो विशोधितः ।
दिनसप्तकमात्रेण जाठराग्निप्रदीपनः ॥९॥
रामठत्र्यूषणोपेतो नरसारो विशोधितः ।
प्लीहोदरं निहन्त्याशु चिरजञ्चातिदारुणम् ॥१०॥
शुक्तिकाक्षारसंयुक्तो विमलो नवसादरः ।
प्लीहानं नाशयत्याशु यकृद्दोषं तथैव च ॥११॥
मरीचसैन्धवमिसियुक्तः शुद्धो नृसादरः ।
आध्मानाजीर्णशमनो भुक्तमांसादिजारणः ॥१२॥
अनन्तमूलक्वथितनीरेण नवसादरः ।
निपीतो नियमादाशु यकृद्वृद्धिहरो मतः ॥१३॥
मधुयष्टिवचाव्याघ्रीकषायेण नृसादरः ।
सेवितो ह्यचिरादेव कफविश्लेषणः परम् ॥१४॥
यकृद्दोषसमुद्भूते जलोदरगदे भिषक् ।
अपामार्गकषायेण नरसारं प्रयोजयेत् ॥१५॥
नृसारः काञ्जिकेनेह निपीतः स्वल्पमात्रया ।
रक्तस्रावं फुप्फुसोत्थं द्रुतमेव निरोधयेत् ॥१६॥
नृसारं तोलकमितं दशतोलकसंमिते ।
जले संद्राव्य तद्वारा वस्त्रमार्द्रीकृतं ततः ॥१७॥
व्रणशोथे निबध्नीयाज्ज्वरशूलादिसंयुते ।

वृश्चिकोत्थविषघ्नः लेपाद् । स्पष्टमन्यत् ॥५-७॥
मात्रास्य भक्षणयोग्या देशकालानुसारं परिणमते ॥८॥

दिनसप्तकमात्रेण व्रणशोथं निवारयेत् ॥१८॥
यवक्षारयुतो नव्यसारो रक्तित्रयोन्मितः।
शारिवाक्वथितैः पीतो व्रणमेहं निवारयेत् ॥१९॥

नवसारस्य सत्त्वपातनम्।

विमलं कठिनीचूर्णं तोलकत्रितयोन्मितम्।
विशुद्धं नवसारञ्च चतुस्तोलकसंमितम् ॥२०॥
खल्वे सम्पेष्य यन्त्रे तु पचेड्डमरुकाभिधे।
नृसारसत्वं विशदमूर्ध्वलग्नं समाहरेत् ॥२१॥

अस्य गुणाः।

नृसारसत्वं रुचिदं त्वस्रपित्तहरं परम्।
कफविश्लेषणकरं हृद्दौर्बल्यविनाशनम् ॥२२॥
वामकं सारकञ्चापि तथा फुप्फुसशोथहृत्।
पाचनं दीपनञ्चैव प्रातं मूर्च्छाहरं मतम् ॥२३॥

अस्य मात्रा।

गुञ्जैकतः समारभ्य गुञ्जापञ्चकसंमिता।
नवसादरसत्वस्य मात्रा शस्ता भिषग्वरैः ॥२४॥
सपादमाषकंमिता मात्रा वमनकारिणी।
नवसादरसत्वस्य भिषग्भिः परिकीर्तिता ॥२५॥

अथ सत्वस्य प्रयोगविधिः।

नव्यसारभवं सत्वं सलिले तु परिस्रुते।
द्रावयित्वाऽथ निर्दिष्टरोगेषु तु नियोजयेत् ॥२६॥

## अथ सोरकस्य नामानि।

सोरकः सोरकञ्चैव सोरा सैवेह सोरका।
सूर्यक्षारोऽथ मृत्क्षारो वह्निक्षारश्च कीर्तितः ॥२७॥

सोरकस्य गुणाः।

सोरकः कटुकस्तीक्ष्णो विशेषाल्लवणः सरः।
वह्निप्रदीपकोऽत्युष्णस्त्वाग्नेयास्त्रार्थसिद्धिकृत् ॥२८॥

आमयिकः प्रयोगः सुगमोऽनुभूतप्रायश्चेति ॥९-१९॥

नवसादरसत्वपातनम्—कठिनी गौरखटी, विशद निर्मलम् ॥२०-२३॥

मात्रायान्तु विशेषः—सपादमाषकमिता दशगुञ्जारूपा सलिले द्रावयित्वास्य प्रयोगः पानादौ ॥२४-२६॥

अथ सोरकः—अत्युष्ण इति वीर्यतः, स्पर्शतस्तु शीत एव अञ्जनादौ प्रक्षेपात् ॥२७-२८॥

सोरकस्य निर्मलीकरणम् ।

पलोन्मितं सोरकन्तु शीतले सलिले भिषक् ।
चतुष्पलमिते क्षिप्त्वा वस्त्रपूतं पचेत्ततः ॥२६॥
स्वल्पशेषं जलं ज्ञात्वा पात्रमुत्तारयेत्ततः ।
विमलं चूर्णसङ्काशं सोरकन्तु समाहरेत् ॥३०॥
स्वल्पशेषेऽपि सलिले यदि वह्निः प्रदीयते ।
जले निःशेषतां याते सोरकं दह्यते स्वयम् ॥३१॥
तस्माद्रसायनाचार्यैः सावधानतया सदा ।
सोरकं निर्मलीकुर्यान्न स्याद् द्रव्यक्षतिर्यथा ॥३२॥

सोरकस्य सुकरं निर्मलीकरणम् ।

अत्युष्णं सलिलं स्वच्छं सोरकस्यार्द्धभागिकम् ।
आदाय विमले पात्रे निक्षिपेत्तु भिषग्वरः ॥३३॥
निक्षिप्य सोरकं वस्त्रपूतञ्च शीततां नयेत् ।
शलाकाकारतां यातं सोरकन्तु समाहरेत् ॥३४॥

अथ सोरकस्य शोधनम् ।

सोरकं चूर्णितं खल्वे त्वेलातोयेन भावयेत् ।
त्रिवारं भावनादेव शुद्धिमायात्यनुत्तमाम् ॥३५॥

शुद्धसोरकस्य गुणाः ।

सोरकः कटुकस्तीक्ष्णो विदग्धाजीर्णनाशनः ।
अश्मरीमूत्रकृच्छ्राग्निमान्द्यपाण्डुप्रमेहनुत् ॥३६॥

सोरकस्य मात्रा ।

द्विगुञ्जतः समारभ्य दशगुञ्जोन्मितं परम् ।
सोरकं विनियुञ्जीत बलकालाद्यपेक्षया ॥३७॥

सोरकस्य आमयिकः प्रयोगः ।

गोक्षुरस्य कषायेण शोधितः सोरकोऽशितः ।
मूत्रकृच्छ्रं निहन्त्याशु त्वश्मरीं दारुणामपि ॥३८॥

निर्मलीकरणं प्रयोगयोग्यतासम्पादनाय । प्रथमप्रकारपाठो व्याख्यासमानः । द्वितीयः प्रकारो निर्माणसुगमः । सोरकं सुपिष्टं कृत्वा अत्युष्णे जले द्रावयित्वा वस्त्रपूतं विधाय शोषयेदित्यर्थः ॥२६-३४॥

शोधनन्तु भक्षणार्थं किञ्चित्तीक्ष्णतापहारकञ्चेति विशेषः ॥३५॥

विदग्धाजीर्णे "विदग्धे भ्रमतृण्मूर्च्छाः पित्ताच्च विविधा रुजः । उद्गारश्च सधूमाम्लः स्वेदो दाहश्च जायते" इत्युक्तम् ॥३६॥

मात्राप्रमाणं दशगुञ्जापर्य्यन्तम् ॥३७॥

स्फटिकारिकयोपेतः सोरकः परिशीलितः ।
आध्मानं मूत्रकृच्छ्रं च नाशयेदाशु निर्भरम् ॥३६॥
रविमूलस्य चूर्णेन तण्डुलक्वथितेन वा ।
निपीतः सोरकः काममामवातं विनाशयेत् ॥४०॥
विडाजमोदमिशिकाधात्रीचूर्णेन सोरकः ।
भक्षितो निम्बुनीरेण विदग्धाजीर्णकं जयेत् ॥४१॥
सोरकं द्रावयेत्तोये तेन सिञ्चेत्तु कागदम् ।
तद्धूमपानयोगेन श्वासमाशु विनश्यति ॥४२॥
सुरानृसारकोपेतं सोरकं द्रावयेत् जले ।
तत्सिक्तवस्त्रं शीर्षस्थं प्रलापं ज्वरजं जयेत् ॥४३॥
ससितं सोरकं वारा गुञ्जापञ्चकसंमितम् ।
ज्वरदाहतृषार्तैस्तु रोगिभिः परिशीलितम् ॥४४॥
जनयेत्स्वेदमत्यर्थं मूत्ररोधञ्च नाशयेत् ।
दाहतृषादिकञ्चापि हत्वा कामं ज्वरं जयेत् ॥४५॥
सोरकं वटपर्णञ्च संपिष्टन्तु शिलातले ।
वस्तिप्रदेशे लेपेन मूत्ररोधं विनाशयेत् ॥४६॥

अथ सोरकद्रावकस्य नामानि ।

कथितः सोरकद्रावः सोरकद्रावकस्तथा ।
सोराद्रावश्च गदितो रसशास्त्रविशारदैः ॥४७॥

सोरकद्रावस्य निर्माणप्रकारः ।

विशोधिते सोरके तु सोरकस्यार्द्धभागिकम् ।
वलिद्रावन्तु निक्षिप्य काचकुप्यां निधापयेत् ॥४८॥
सुराप्रदीपे विन्यस्य नलिकां काचनिर्मिताम् ।
तोयस्थकाचघटिकालग्नां तस्यां निवेशयेत् ॥४९॥
पचेन्मन्दानलेनैव ततस्तिर्यङ् निपातितम् ।
सञ्चितं बाष्परूपेण तोयाभं द्रावकं हरेत् ॥५०॥

सजलसोरकद्रावस्य निर्माणप्रकारः ।

षड्भागसंमितं तत्र सोरकद्रावकं हरेत् ।
काचपात्रे निधायाथ क्षिपेत्तत्र शनैः शनैः ॥५१॥
परिस्रुतञ्च सलिलं पञ्चविंशतिभागिकम् ।

कागदमिति मसीशोषणायोपयुज्यमानं शुभ्रं कागदमित्यर्थः । स्पष्टमन्यत् ॥

सजलः सोरकद्रावो जायते खलु शोभनः ॥५२॥

सोरकद्रावकस्य गुणाः ।

सोरकद्रावकः प्रोक्तो वह्निवीर्यः प्रदाहकः ।
विभिन्नदुष्टविक्लिन्नव्रणशोधनरोपणः ॥५३॥
फिरङ्गस्यादिमे घोरे व्रणे च परिशस्यते ।
सर्पकुक्कुरकादीनां विषदोषनिबर्हणः ॥५४॥

सजलसोरकद्रावस्य गुणाः ।

सोरकद्रावको बल्यो यकृद्दोषनिबर्हणः ।
वह्निमान्द्यहरः कामं मूत्रदोषनिषूदनः ॥५५॥
मधुमेहे प्लीहवृद्धौ चौपदंशिकविकृतौ ।
कामलायां पाण्डुरोगे विशेषेण प्रशस्यते ॥५६॥
विनाशयेच्चिरोद्भूतं कासं सातिकफोद्गमम् ।
अतीसारहरश्चैव पित्तघ्नश्च प्रकीर्तितः ॥५७॥

सजलसोरकद्रावकस्य मात्रा ।

आरभ्य शरबिन्दुभ्यस्त्रिंशद्बिन्दुमितं परम् ।
सजलं सोरकद्रावं नियुञ्जीत पलाम्बुना ॥५८॥

अथ सामान्येन क्षारनिर्माणप्रकारः ।

क्षारवृक्षस्य काष्ठानि दग्ध्वा भूतिं समाहरेत् ।
विमले भाजने न्यस्य सलिलन्तु चतुर्गुणम् ॥५९॥
प्रक्षिप्य मर्दयेत्सम्यक् याममात्रं भिषग्वरः ।
त्रिगुणीकृतवस्त्रेण स्रावयेत्सलिलं ततः ॥६०॥
स्रावितं सलिलञ्चाथ वह्नौ सन्तापयेत्ततः ।
निःशेषं सलिलं ज्ञात्वा निर्मलं क्षारमाहरेत् ॥६१॥

अतितीक्ष्णतया आभ्यन्तरप्रयोगार्थं सोरकद्रावः सजलः कार्यः । स्पष्टमन्यत् ॥४७-५२॥

सोरकद्रावकगुणाः—वह्निवीर्यः दाहकत्वेन वह्निसमानः । फिरङ्गस्यादिमं व्रणं तृणाग्रेण परिस्पृष्टः हन्ति । विषदोषनिबर्हणः दाहकत्वाद् दंशस्थानस्य ॥

सजलसोरकद्रावः पानेन यकृद्दोषादीन् हन्ति । सातिकफोद्गमं अत्यन्तकफनिर्गमयुक्तम् । मात्रानिर्देशः पञ्चबिन्दुभ्यः त्रिंशद्बिन्दुपर्यन्तम् ॥५५-५८॥

क्षारनिर्माणप्रकारः—काष्ठानि इत्युपलक्षणम् । यवक्षारादौ शूकादीनामपि क्वचित् पञ्चाङ्गमपि दाह्यते, अत्र तु पलाशक्षारादिनिर्माणे तत्काष्ठस्यैव प्रयोग इति काष्ठानीत्युक्तम् । स्रावितसलिलस्य कटाहे जलीयांशशोषणार्थं निक्षेपः । व्याख्यासमानमन्यत् ॥५९-६१॥

सामान्येन क्षाराणां गुणाः ।

क्षारास्तीक्ष्णा महोष्णाश्च दाहकर्मकराः परम् ।
गुल्मार्शोग्रहणीप्लीहमूत्रकृच्छ्राश्मरीहराः ॥६२॥
कृमिघ्नाः पाचनाश्चैव दारणाश्च विसर्पिणः ।
शोधना रोपणाश्चैव मूत्रलाश्च प्रकीर्तिताः ॥६३॥

सामान्येन क्षाराणां मात्रा ।

द्विगुञ्जतः समारभ्य रक्तिकाष्टकसंमितान् ।
क्षारांस्तु विनियुञ्जीत साधारणतया भिषक् ॥६४॥

## अथ अपामार्गक्षारस्य नामानि ।

अपामार्गक्षार उक्तो मयूरक्षारकस्तथा ।
खरमञ्जरिकाक्षारः किणिक्षारश्च कीर्तितः ॥६५॥

अस्य गुणाः ।

खरमञ्जरिकाक्षारस्तीक्ष्णः श्वासनिवर्हणः ।
गुल्मशूलादिरोगघ्नः कामं बाधिर्यनाशनः ॥६६॥

अपामार्गक्षारस्य आमयिकः प्रयोगः ।

मयूरक्षारकः कामं मधुना परिशीलितः ।
विनाशयेच्चिरोद्भूतं श्वासं परमदारुणम् ॥६७॥
खरमञ्जरिकाक्षारचूर्णेन परिसाधितम् ।
तैलं कर्णे निषेकेण बाधिर्यं त्वाशु नाशयेत् ॥६८॥
सत्र्यूषणः किणिक्षारो यवानीचूर्णसंयुतः ।
निहन्ति शूलं त्वचिरादाध्मानञ्चातिदारुणम् ॥६९॥
खरमञ्जरिकाक्षारः सतालः परिलेपनात् ।
लिङ्गार्शसं निहन्त्याशु चिरोद्भूतं सुदारुणम् ॥७०॥
अपामार्गक्षारचूर्णं सशिलं परिलेपितम् ।
गोमूत्रेणाचिरेणैव श्वित्रकुष्ठं विनाशयेत् ॥७१॥
अपामार्गक्षारचूर्णं यवाग्रजसमन्वितम् ।
शीलितं नाशयेदाशु मूत्रकृच्छ्रं तथाश्मरीम् ॥७२॥

सामान्यतः क्षारगुणवर्णनम्—दारणाः विद्रध्यादेः, विसर्पिणः व्याप्तिशीलाः॥
सामान्यतः द्विगुञ्जतः समारभ्य मापकं यावन्मात्रा ॥६४॥
अपामार्गक्षारः क्षारसामान्यपरिभाषया निर्मित । मयूरोऽपामार्गः खरमञ्जरिका किणिः इति पर्यायाः । सतालः हरितालयुक्तः । सशिलं मनःशिला-

खरमञ्जरिकाक्षारः सव्योषश्च ससैन्धवः ।
शीलितो नाशयेद् गुल्मं प्लीहानश्चातिदारुणम् ॥७३॥

## अथ अर्कक्षारस्य नामानि ।

अर्कक्षारो रविक्षारो भास्करक्षारकस्तथा ।
खर्ज्जूरक्षारकश्चाथ मित्रक्षारश्च कीर्तितः ॥७४॥

अर्कक्षारस्य गुणाः ।

अर्कक्षारः स्मृतस्तीक्ष्णो गुल्मप्लीहादिनाशनः ।
पाचनो दीपनश्चापि कासश्वासप्रणाशनः ॥७५॥

अर्कक्षारस्य आमयिकः प्रयोगः ।

अर्कक्षारः सलवणो नरसारसमन्वितः ।
अजीर्णं नाशयेदाशु जाठराग्निञ्च दीपयेत् ॥७६॥
ससैन्धवं त्वर्कपत्रं त्वन्तर्धूमं दहेद्भिषक् ।
क्षारः स मस्तुना पीतो गुल्मप्लीहोदराञ्जयेत् ॥७७॥
सत्र्यूषणो रविक्षारो मधुना परिशीलितः ।
विनाशयेद्विशेषेण कासं श्वासञ्च दारुणम् ॥७८॥
मित्रक्षारः सलवणो यावशूकजसंयुतः ।
शीलितो ह्यचिरादेव यकृद्वृद्धिहरो मतः ॥७९॥

## अथ तिलक्षारस्य नामानि ।

तिलक्षारः समाख्यातस्तिलभूतिस्तथैव च ।
होमधान्यविभूतिश्च पवित्रक्षारकस्तथा ॥८०॥

तिलक्षारस्य गुणाः ।

तिलक्षारः स्मृतस्तीक्ष्णो मूत्ररोधनिबर्हणः ।
अश्मरीनाशनश्चैव प्लीहघ्नो व्रणदारणः ॥८१॥

अस्य आमयिकः प्रयोगः ।

सत्र्यूषणस्तिलक्षारः सैन्धवेन समन्वितः ।
शीलितो ह्यचिरादेव जाठराग्निप्रदीपनः ॥८२॥
अङ्कोलक्षारसंयुक्तस्तिलक्षारस्तु शीलितः ।
मधुनान्ते तोयपानान्मूत्ररोधं विनाशयेत् ॥८३॥

युतम् । यवाग्रजो यवक्षारः ॥६५-७३॥
ससैन्धवन्त्वर्कपत्रमित्यर्कलवणनाम्ना वक्ष्यते प्रयोगः ॥७४-७९॥
तिलक्षारः अश्मरीनाशनो विशेषात् । अङ्कोलक्षारः तदाख्यवृक्षभस्मना

तिलक्षारः सयवजः शीलितो निम्बुकाम्बुना।
वृक्कशूलं निहन्त्याशु भास्करस्तिमिरं यथा ॥८४॥
तिलक्षारः सयवजः कदलीक्षारमिश्रितः।
शीलितो मधुना काममश्मरीमाशु नाशयेत् ॥८५॥
तिलभूतिर्माषमिता रुचकेन समन्विता।
तक्रेण मधुना वापि शीलिता त्वश्मरीं जयेत् ॥८६॥
होमधान्यविभूतिस्तु धात्रीक्षाररसान्विता।
गोक्षुरक्काथसंयुक्ता नाशयेन्मूत्रशर्कराम् ॥८७॥
पवित्रक्षारचूर्णन्तु यवजेन प्रलेपितम्।
व्रणशोथे करोत्याशु दारणं परमोत्तमम् ॥८८॥
होमधान्यविभूतिस्तु शीलिता माषकोन्मिता।
मांसाशनभवाजीर्णनाशिनी परिकीर्तिता ॥८९॥
शरपुङ्खक्षारयुतस्तिलक्षारस्तु शीलितः।
माषकप्रमितं तूर्णं गुल्ममुन्मूलयेद्भृशम् ॥९०॥

### अथ स्नुहीक्षारस्य नामानि।

स्नुहिक्षारः स्नुहीक्षारः स्नुक्क्षारश्च तथा मतः।
वज्रक्षारोऽथ सेहुण्डक्षारश्च परिकीर्तितः ॥९१॥

अस्य गुणाः।

स्नुहीक्षारः स्मृतस्तीक्ष्णः सर्वोदरविनाशनः।
गुल्मप्रशमनो वह्निदीपनः शोफनाशनः ॥९२॥
विषूचिकाहरोऽजीर्णनाशनः शूलसूदनः।
यकृद्दोषप्रशमनः श्वासातङ्कप्रभञ्जनः ॥९३॥

अस्य आमयिकः प्रयोगः।

स्नुहीक्षारः शङ्खभूतिसर्जिकायवजान्वितः।
विषूचिकां निहन्त्याशु त्वजीर्णञ्चातिदारुणम् ॥९४॥
चिरोत्थितानां गुल्मानां पञ्चतां पञ्चतां नयेत्।
ग्रहणीं नाशयेदाशु तथा शूलञ्च दारुणम् ॥९५॥
स्नुहीक्षारस्त्रिलवणक्षारत्रिकसमन्वितः।
निहन्ति शोफं प्लीहानमुदराणि च नाशयेत् ॥९६॥
सत्र्यूषणः स्नुहीक्षारो मधुना परिशीलितः।
नाशयेदचिरादेव श्वासं परमदारुणम् ॥९७॥

जातः। होमधान्यविभूतिः तिलक्षारः। पवित्रक्षारोऽपि तिलक्षार एव ॥८०-९०॥
स्नुहीक्षारो विशेषात् शोफोदरहरः। शङ्खभूतिः शङ्खभस्म। गुल्मानां पञ्चतां

स्नुहीक्षारो वरोपेतः सैन्धवाग्निसमन्वितः ।
निहन्ति वह्निमान्द्यं तु यकृत्प्लीहोदराणि च ॥९८॥

## अथ पलाशक्षारस्य नामानि ।

पलाशक्षारकश्चैव किंशुकक्षारकस्तथा ।
पर्णक्षारश्च कथितस्त्रिपर्णक्षारकस्तथा ॥९९॥

अस्य गुणाः ।

पर्णक्षारोऽग्निजननो गुल्मप्लीहादिनाशनः ।
यकृद्वृद्धिप्रशमनो मूत्रकृच्छ्राश्मरीहरः ॥१००॥

अस्य आमयिकः प्रयोगः ।

पर्णक्षारस्तु मधुना कणाचूर्णसमन्वितः ।
वह्निदीप्तिकरः कामं गुल्मप्लीहोदरापहः ॥१०१॥
पलाशक्षारसलिलैर्गव्यमाज्यं विपाचितम् ।
शीलितं नाशयत्याशु रक्तगुल्मं सुदारुणम् ॥१०२॥
कदलीक्षारसंयुक्तः पर्णक्षारस्तु शीलितः ।
अश्मरीं नाशयत्याशु दारुणां मूत्रशर्कराम् ॥१०३॥
किंशुकक्षारतोयेन घृतं गव्यं विपाचितम् ।
निहन्ति शुक्रदोषन्तु ग्रन्थिभूताभिधं द्रुतम् ॥१०४॥
यवक्षाररजोयुक्तः क्षारः खलु पलाशजः ।
निषेवितो निहन्त्याशु प्लीहानमतिदारुणम् ॥१०५॥
मयूरक्षारसंयुक्तः पर्णक्षारस्तु शीलितः ।
अग्रमांसं सुकठिनीभूतं प्रशमयत्यलम् ॥१०६॥

## अथ चिञ्चाक्षारस्य नामानि ।

चिञ्चाक्षारोऽम्लिकाक्षारश्चिञ्चिकाक्षारकस्तथा ।
अम्लीकाक्षारकश्चैव चिञ्चाभूतिश्च कथ्यते ॥१०७॥
चिञ्चिकाभसितञ्चैव चिञ्चाभस्म तथैव च ।
अम्लिकाभसितञ्चापि तिन्तिडीभसितं तथा ॥१०८॥

अस्य गुणाः ।

अम्लिकाक्षारकः प्रोक्तो वह्निमान्द्यविनाशनः ।
शूलगुल्महरश्चापि मूत्रकृच्छ्राश्मरीहरः ॥१०९॥

पञ्चविधान् गुल्मान् पञ्चतां विनाशमित्यर्थः । वरा त्रिफला ॥९१-९८॥

पलाशक्षारो गुल्मघाती शुक्रशोधनश्चापि । अग्रमांसं उदरोर्ध्वभागमध्यवर्तिमांसवृद्धिरूपरोगविशेषम् ॥९९-१०६॥

चिञ्चाक्षारः—अम्लिकात्वग्भस्मजातः, विशेषतोऽग्निमान्द्यहरः । रोगप्रयोग: पाठे स्नुगर्कक्षारसहितः स्नुहीक्षारार्कक्षाराभ्यां सहितः । पटुपञ्चकं लवणपञ्चकम् ॥

अस्य आमयिकः प्रयोगः।

स्नुगर्कक्षारसहितो मृतशङ्खसमन्वितः।
चिञ्चाक्षारोऽशनादाशु नाशयेत्तु विषूचिकाम् ॥११०॥
शूलमुन्मूलयेत्कामं वह्निमान्द्यविनाशनः।
अजीर्णं क्षपयत्येवं गुल्मबाधां विशेषतः ॥१११॥
पटुपञ्चकसंयुक्तो जरणद्वयपणान्वितः।
शीलितस्त्वम्लिकाक्षारो हरेद् ग्रहणिकारुजम् ॥११२॥
अरोचकं निहन्त्याशु तथा शूलं सुदारुणम्।
आध्मानं,पक्तिशूलञ्च विदग्धाजीर्णकं तथा ॥११३॥
चिञ्चिकाभसितं द्राक्षाशर्कराभ्यां,समन्वितम्।
अवलीढं विशेषेण त्वरोचकहरं परम् ॥११४॥
अम्लिकाभसितं व्योषचूर्णेन परिशीलितम्।
वह्निमान्द्यं निहन्त्याशु वाताजीर्णञ्च दारुणम् ॥११५॥
चिञ्चाक्षारः समरिचः शङ्खभूतिसमन्वितः।
अतिसारे ग्रहण्याञ्च शिशूनान्तु प्रशस्यते ॥११६॥

## अथ सैन्धवस्य नामानि।

सैन्धवः सिन्धुलवणं सिन्धूत्थं सिन्धुदेशजम्।
सिन्धूपलं सिन्धुभवं सैन्धवं सिन्धुमन्थजम् ॥११७॥
शीतशीवं शीतशिवं नादेयञ्च शिलात्मकम्।
शिवं सितशिवञ्चैव वशिरञ्च निगद्यते ॥११८॥

अस्य गुणाः।

सैन्धवं लवणं हृद्यं वृष्यं नेत्र्यं रुचिप्रदम्।
पाचनं दीपनञ्चैव त्रिदोषशमनं परम् ॥११९॥
व्रणदोषहरं शीतं स्निग्धं लघु विबन्धजित्।
मृदुवीर्यं पित्तहरं विबुधैः परिकीर्तितम् ॥१२०॥

सैन्धवस्य उत्पत्तिस्थानम्।

पञ्चाम्बुवर्तिनः सिन्धोः पूर्वभागे विशेषतः।
शिलोच्चयखनौ सिन्धूपलं समुपलभ्यते ॥१२१॥

सैन्धवनामानि-व्यवहृतप्रायाणि। शीतं शीतवीर्यम्, विबुधैः तन्त्रकारैः॥ पञ्चाम्बुः पञ्जाबदेशः। शिलोच्चयखनौ इति स्वभावतः खनिजोऽयं लवणो न कृत्रिम इति भावः ॥१२१॥

अस्य आमयिकः प्रयोग ।

सैन्धवं खलु धत्तूरशिफया परिपेषितम् ।
उष्णीकृत्य प्रलिप्तं तु व्रणशोथहरं परम् ॥१२२॥

नारिकेललवणः ।

सुविपक्कं ससलिलं नारिकेलं समाहरेत् ।
अपनीय जटां वृद्धिपत्रेण स्फोटयेद् दृशम् ॥१२३॥
जातरन्ध्रान्नारिकेलान्नीरं सर्वं परित्यजेत् ।
सुचूर्णितं सैन्धवन्तु दशतोलकसंमितम् ॥१२४॥
निक्षिप्य रन्ध्रमार्गेण ततो रन्ध्रं निरोधयेत् ।
वसनेन समाच्छाद्य परितो लेपयेन्मृदा ॥१२५॥
रौद्रयन्त्रे विशोष्याथ पुटयेत्तु महापुटे ।
तद्गोलकं स्वाङ्गशीतं प्रयत्नेन समाहरेत् ॥१२६॥
सैन्धवं कज्जलीवर्णं कपालांशोज्झितं हरेत् ।
लवणो नारिकेलाख्यः समाख्यातो भिषग्वरैः ॥१२७॥

अस्य गुणाः ।

लवणो नारिकेलाख्यः पाचनः पित्तनाशनः ।
अम्लपित्तहरः कामं पित्तशोषजशूलनुत् ॥१२८॥
वातजं पित्तजं वापि श्लेष्मजं सन्निपातजम् ।
शूलञ्च परिणामोत्थं नाशयेदविकल्पतः ॥१२९॥

अस्य आमयिकः प्रयोगः ।

लवणो नारिकेलाख्यो माषकद्वयसंमितः ।
नृसारयवजोपेतः पित्तशोषजशूलनुत् ॥१३०॥

अर्कलवणम् ।

सुचूर्णितं सैन्धवन्तु समार्कदलसंयुतम् ।
अन्तर्धूमं पचेद्धीमान् स्वाङ्गशीतमथोद्धरेत् ॥१३१॥

धत्तूरशिफा धत्तूरमूलम् ॥१२२॥

नारिकेललवणनिर्माणप्रकारः—ससलिलमिति शुष्कफलपरिहाराय । जटां उपरितनशुष्कप्रायतृणोच्चयम् । रौद्रयन्त्रे आतपे इत्यर्थः । कपालं नरिकेलमज्जोपरि कठिनकाष्ठरूपमावरणम् । मारुतकोपात् पित्ताशये पित्तशोषस्तस्माज्जातं शूलमपनयतीति विशेषः । पित्तशोषलक्षणं यथा—"पित्ताशयगतं पित्तं शुष्कं मारुतकोपतः । कुर्यात् शूलादिकं घोरं पित्तशोषं तदुच्यते" ॥१२३-१३०॥

अर्कलवणम्—समार्कदलसंयुतं तुलायां लवणसमानार्कपत्रसंयुतम् ।

जायते खल्वसम्पिष्टं लवणं मलिनप्रभम् ।
आयुर्वेदाचार्यवर्यैर्नाम्नार्कलवणं मतम् ॥१३२॥

अस्य गुणा. ।

यकृत्प्लीहोदरहरं रुचिरं मलभेदनम् ।
विशेषतः समाख्यातं तन्त्रेऽर्कलवणं बुधैः ॥१३३॥

अस्य आमयिकः प्रयोगः ।

माषकार्द्धमितं त्वर्कलवणं कोष्णवारिणा ।
पथ्याशिभिस्तु पुरुषैः सततं परिशीलितम् ॥१३४॥
वातिकं श्लैष्मिकं वापि सज्वरं वापि विज्वरम् ।
सकोष्ठवद्धं व्यथया चीत्कारयुतयापि वा ॥१३५॥
संयुक्तं कठिनस्पर्शं ह्यतीसारादिवर्जितम् ।
यकृद्वाल्युदरं नूनं प्लीहोदरमलं हरेत् ॥१३६॥

## अथ सामुद्रलवणस्य नामानि ।

सामुद्रं लवणं ख्यातं समुद्रजलसम्भवम् ।
समुद्रजं सागरजं मतं सामुद्रकञ्च तत् ॥१३७॥

अस्य गुणाः ।

समुद्रलवणं हृद्यं रुच्यं स्निग्धञ्च दीपनम् ।
सक्षारं भेदि वातघ्नं नात्युष्णं नातिशीतलम् ॥१३८॥

सामुद्रलवणस्य परिचयः ।

समुद्रजलसंशोषाल्लवणं जायते तु यत् ।
सामुद्रं लवणं तत्तु समाख्यातं भिषग्वरैः ॥१३९॥

## अथ विडलवणस्य नामानि ।

विडं कृत्रिमकञ्चैव सुपाक्यं द्राविडन्तथा ।
आसुरञ्च विटञ्चाथ धूर्तञ्च कृतकं मतम् ॥१४०॥

अस्य गुणाः ।

विडं रुच्यञ्च तीक्ष्णोष्णं सूक्ष्मं लघु च दीपनम् ।
सक्षारं हृद्यमूर्ध्वाधःकफवातानुलोमनम् ॥१४१॥

मलिनप्रभमिति कृष्णवर्णम् । यकृत्प्लीहोदरहर विशेषतः। कोष्णवारिणा प्रयोगः। चीत्कारयुतया व्यथया इति असह्यतीव्रपीडयेति यावत् । प्लीहोदरं अलम् इति च्छेदः । अलमत्यर्थम् ॥१३१-१३६॥

अथ सामुद्रलवणपरिचयः—ख्यातं प्रसिद्धम् । समुद्रजलसंशोषादिति तस्योत्पत्तिपरिचयः ॥१३७-१३९॥

अथ विडलवणपरिचयः—कृत्रिमकं न स्वाभाविकमपि तु योगविशेष-

अजीर्णानाहविष्टम्भहरं शूलविबन्धजित् ।
हृद्गौरवप्रशमनं वातघ्नञ्च प्रकीर्तितम् ॥१४२॥

बिडलवणस्य प्रथमो निर्माणप्रकारः ।

वस्वक्षिसेरकमितं लवणं रोमकाभिधम् ।
पञ्चाशत्तोलकमितं चूर्णमामलकोद्भवम् ॥१४३॥
समादाय भिषग्वर्यस्ततः सम्मेलयेद्भृशम् ।
ततः खल्वस्य चूर्णस्य चतुर्थांशं विधानवित् ॥१४४॥
मृल्लिप्तायां क्षुद्रकण्ठ्यां हण्डिकायां तु विन्यसेत् ।
चुल्लिकायां निधायाथ विधानज्ञो भिषग्वरः ॥१४५॥
प्रज्वाल्य तीव्रज्वलनं पचेद्धोराद्वयं भिषक् ।
हण्डिकाया मध्यभागो यावदायाति रक्तताम् ॥१४६॥
क्षिपेत्ततः क्रमेणेह शेषं चूर्णं भिषग्वरः ।
प्रखरेणानलेनाथ यामद्वितयमात्रकम् ॥१४७॥
विपाचयेदविरतं रसतन्त्रविधानवित् ।
स्वतः शीते च लवणं विडाख्यन्तु समाहरेत् ॥१४८॥
चतुर्विंशतिसङ्ख्याकसेरकप्रमितं शुभम् ।
ततः सर्वेषु योगेषु योजयेद्भिषजां वरः ॥१४९॥

विडलवणस्य द्वितीयो निर्माणप्रकारः ।

अशीतितोलकमितं लवणं रोमकाभिधम् ।
चूर्णमामलकोद्भूतं दशतोलकसंमितम् ॥१५०॥
मृल्लिप्तहण्डिकायां तु विन्यस्य प्रखराग्निना ।
यामद्वयं विपाच्याथ स्वाङ्गशीतमथोद्धरेत् ॥१५१॥
विडाभिधं तु लवणं रसतन्त्रविधानवित् ।
अनुभूतोऽतिसुगमः प्रकारोयम्प्रकाशितः ॥१५२॥

जातमित्यर्थः । कफवातयोरुपर्यधो यथामार्गं प्रवर्तनात् अनुलोमकम् । वातघ्नञ्च प्रकीर्तितं पूर्वतनैरिति शेषः ॥१४०–१४२॥

निर्माणप्रकारः कृत्रिमत्वादस्य निर्दिष्टः—रोमकलवणं २८ सेरकम्, आमलकचूर्णञ्च ५० तोलकम्, यथानिर्देशं पाकः, पूर्वं चतुर्थांशमात्रपाकः । अत्र च लवणजलांशशोषात् आमलकीचूर्णभस्मीभावाच्च २४ सेरकमितं लवणमवशिष्यते इति विशेषः । स्पष्टमन्यत् ॥१४३–१४९॥

द्वितीयो निर्माणप्रकारः सुगमो व्याख्यासमपाठः ॥१५०–१५२॥

## अथ सौवर्चललवणस्य नामानि ।

सौवर्चलं च रुचकं रुच्यकं हृद्यगन्धकम् ।
अक्षञ्च कृष्णलवणं वै काललवणं स्मृतम् ॥१५३॥

अस्य गुणाः ।

सौवर्चलं मतं हृद्यं पाचनं दीपनं परम् ।
रोचनं भेदनञ्चापि विशदं वातनाशनम् ॥१५४॥
सस्नेहं लघु गुल्मघ्नं तूर्ध्ववातानुलोमनम् ।
विबन्धानाहशूलघ्नं जन्त्वरोचकनाशनम् ॥१५५॥

सौवर्चललवणस्य निर्माणप्रकारः ।

विशुद्धं स्वर्जिकाक्षारं चतुष्पलमितं हरेत् ।
द्रावयेदथ यत्नेन तोयेऽष्टपलसंमिते ॥१५६॥
यातीह द्रावतां यावान् तावन्तं सैन्धवं ततः ।
सर्जिकाया द्रवे यत्नान्निक्षिपेद्भिषजां वरः ॥१५७॥
ततः सुविमले पात्रे न्यस्य चुल्ल्यां निधापयेत् ।
पचेत्तीव्राग्निना कामं तोयञ्च परिशोषयेत् ॥१५८॥
निःशेषं सलिलं ज्ञात्वा किञ्चित्कालं पुनः पचेत् ।
पाकशेषे च लवणं रुचकाख्यं समाहरेत् ॥१५९॥

## अथ रोमकलवणस्य नामानि ।

रोमकं रोमलवणं रौमञ्च रौमकं मतम् ।
शाकम्भरीयञ्च गडं साम्भरं सम्भरोद्भवम् ॥१६०॥

रोमकस्य उत्पत्तिस्थानं निर्वचनञ्च ।

यस्माज्जाते विशेषेण रोमानद्यान्तिके पुरा ।
तस्माद्भिषग्वरैरेतद्रोमकं परिकीर्तितम् ॥१६१॥
शाकम्भरह्रदोद्भूतजलाद्यस्मात्प्रजायते ।
तस्मादेतद्भिषग्वर्यैर्मतं शाकम्भरीयकम् ॥१६२॥

अस्य गुणाः ।

साम्भरं लवणं ख्यातं भेदनं दीपनं परम् ।
अत्युष्णं लघु तीक्ष्णञ्च कटुपाकि च पित्तलम् ॥१६३॥

सौवर्चलम्—विशदं पैच्छिल्यरहितम् ॥१५३-१५५॥

सौवर्चलस्यापि कृत्रिमत्वान्निर्माणप्रकारनिर्देशः—यावत्परिमाणं द्रवतां याति तावन्तम्, यत्नादिति किञ्चित् किञ्चित् लवणस्य क्रमशः प्रक्षेपाद् इति भावः किञ्चित्कालं पुनः पचेदिति तीव्राग्निना इति शेषः ॥१५६-१५९॥

रोमकम्—रोमानदीसमीपे जायमानत्वात् । शाकम्भरह्रदोऽजमेरनिकटवर्ती

मलदोषहरं सूक्ष्ममर्शोघ्नं वातनाशनम् ।
कफप्रणाशनञ्चैव विशदं कोष्ठशोधनम् ॥१६४॥

अथ लवणद्रावकस्य नामानि ।

लवणद्रावकः ख्यातो लवणाम्लसमाह्वयः ।
पटुद्रावश्च कथितः पटुकद्रावकस्तथा ॥१६५॥

लवणद्रावस्य निर्माणप्रकारः ।

सुचूर्णितं सैन्धवन्तु भाजने भर्जयेद्भिषक् ।
जलीयांशे विनिष्क्रान्ते चुल्लीतस्त्ववतारयेत् ॥१६६॥
षड्भागसंमितञ्चाथ भृष्टचूर्णितसैन्धवम् ।
काचकुप्यां निधायाथ विधानज्ञो भिषग्वरः ॥१६७॥
रुद्रभागमितञ्चात्र गन्धकद्रावकं शुभम् ।
शनैः शनैस्तु निक्षिप्य चुल्लिकायां निधापयेत् ॥१६८॥
ततोऽस्यां काचनलिकामुखमेकं निवेशयेत् ।
अपरञ्च मुखं तस्यास्तोयपूर्णोदरार्द्धके ॥१६९॥
नीरपूरितपात्रस्थे काचकुम्भेऽपरे न्यसेत् ।
अतिमन्दानलेनाथ पचेत्खलु विधानवित् ॥१७०॥
तिर्यङ्निपातितं चाथ बाष्परूपेण सञ्चितम् ।
तोयाभं लवणद्रावं रसवैद्यः समाहरेत् ॥१७१॥

सजललवणद्रावकस्य निर्माणप्रकारः ।

अनलनयनवर्त्म-प्राप्तसङ्ख्याप्रमाणं ।
सलिलममलमादौ काचपात्रे निदध्यात् ॥१७२॥
तदनु खलु बिहायोयामिनीरत्नतुल्यं ।
विमललवणकाम्लं निक्षिपेद्वैद्यवर्यैः ॥१७३॥
अयमेव समाख्यातस्त्वायुर्वेदविशारदैः ।
सजलो लवणद्रावो विविधातङ्कनाशनः ॥१७४॥

सजललवणद्रावकस्य गुणाः ।

लवणद्रावकस्तीक्ष्णो जाठराग्निप्रदीपनः ।
मूत्रदोषहरो बल्यो यकृद्दोषनिकृन्तनः ॥१७५॥

सांभरनाम्ना प्रसिद्धः ॥१६०-१६४॥

अथ लवणद्रावको नवीनैः परिभाषितः—भृष्टचूर्णितसैन्धवस्य ६ भागाः, गन्धकद्रावकस्य ११ भागाः । लवणद्रावकस्य चातितीक्ष्णत्वात् सजलद्रावनिर्माणं भक्षणयोग्यतासम्पादनाय । परिस्रुतं सलिलं २३ भागिकम्, लवणद्रावकं १० भागिकम् । अयं हि सजललवणद्रावः । स्पष्टमन्यत् ॥१६५-१७५॥

सजललवणद्रावकस्य मात्रा।

आरभ्य पञ्चविन्दुभ्यो कलाबिन्दुमितं परम्।
युञ्जीत लवणद्रावं प्रचुरेणाम्भसा भिषक् ॥१७६॥

अस्य आमायिकः प्रयोगः।

अन्नस्यामाशयस्थस्य विपाके तु द्वितीयके।
लवणाम्लविहीनत्वाद् यदजीर्णं प्रजायते ॥१७७॥
तस्मिन्नजीर्णे मतिमान् रोगिणं कृतभोजनम्।
दशविन्दुमितं युक्त्या पट्टद्रावन्तु पाययेत् ॥१७८॥
पानमात्रेण गात्राणां गौरवञ्चाप्यजीर्णकम्।
नाशयित्वा बुभुक्षान्तु जनयत्याशु निर्भरम् ॥१७९॥
लवणद्रावकाधिक्यादामाशयसमुद्भवे।
अजीर्णे लवणद्रावं भोजनादौ प्रयोजयेत् ॥१८०॥
सक्षारे खलु प्रस्रावे क्षारमेहे च युक्तितः।
शीलितो लवणद्रावो निर्दिष्टातङ्कनाशनः ॥१८१॥
शीलितस्तु पट्टद्रावः शुष्कजिह्वं हतस्वरम्।
मृदुप्रलापसहितं दौर्बल्यसमायुतम् ॥१८२॥
अस्पष्टनाडिकं चैव कदाचिद् द्रुतनाडिकम्।
मूत्रेण प्रस्नवद्गुथं नाशयत्यान्त्रिकज्वरम् ॥१८३॥
सततं लवणद्रावो मात्रया परिशीलितः।
अफूकसेवनोद्भूतं दौर्बल्यं हन्ति निश्चितम् ॥१८४॥
सजलस्तु पट्टद्रावः शीलितः प्रचुराम्भसा।
अरुचिं वह्निमान्द्यं च नाशयत्यविकल्पतः ॥१८५॥

इति क्षारविशेषादिविज्ञानीयो नाम चतुर्दशस्तरङ्गः।

---

मात्रा—पञ्चविन्दुभ्यः षोडशविन्दुपर्यन्तम् ॥१७६॥

आमाशयस्य लवणाम्लहीनत्वाज्जातमजीर्णञ्चेत् भोजनोत्तरमस्य प्रयोगः। लवणाम्लस्य आधिक्ये तु भोजनात् प्रागेवेति विशेषः। आन्त्रिकज्वरस्य च तासु तासु निर्दिष्टावस्थासु विशेषफलकरः। अहिफेनसेवनजातं दौर्बल्यमवश्यमपनयति। प्रचुराम्भसा शीलनं तीक्ष्णतापरिहाराय। एवं च अविकल्पतः निःसन्देहं अरुचिं मन्दाग्निञ्च नाशयतीति ॥१७७-१८५॥

## अथ सुवर्णविज्ञानीयः पञ्चदशस्तरङ्गः ।

धातुपदस्य निर्वचनम् ।

खालित्यमथ पालित्यं कार्श्यं वार्द्धक्यमेव च ।
अपनीय दधत्येते देहं तद्धातवः स्मृताः ॥१॥

### धातूनां नामपरिगणनम् ।

स्वर्णं तारं तथा ताम्रं वङ्गं सीसकमेव च ।
यशदं च तथा लोहं सप्तैते धातवः स्मृताः ॥२॥
सुवर्णचन्द्रलोहार्कवङ्गाहियशदायसम् ।
लोहसप्तकमाख्यातं सप्तलोहञ्च तन्मतम् ॥३॥

धातूनां सामान्यः प्रथमः शोधनप्रकारः ।

सूचीवेध्यानि पत्राणि धातूनान्तु समाहरेत् ।
यावद्वह्निप्रभाणि स्युस्तावद्वह्नौ प्रतापयेत् ॥४॥
स्नपयेत्तप्ततप्तानि काञ्जिके तु त्रिधा त्रिधा ।
तक्रे कुलत्थक्वथिते गोमूत्रतिलतैलयोः ॥५॥
एवं विशुद्धिमायान्ति स्वर्णाद्याः सप्तधातवः ।
समासतः समाख्यातमिदं सामान्यशोधनम् ॥६॥

द्वितीयः शोधनप्रकारः ।

प्रतप्तानि तु लोहानि रम्भामूलजले भिषक् ।
निषेचयेत्सप्तवारं विशुद्धयन्ति न संशयः ॥७॥

धातुपदसामान्यनिर्वचनं स्वर्णादीनामौषधप्रयोगयोग्यतासूचनाय । देहधारकत्वमेव हि धातूनां धातुत्वम् इति ॥१॥

धातूनां नामपरिगणनं खनिषूपलभ्यमानानाम् । मिश्रकधातुवर्णनं पृथक् करिष्यते । तारं रजतम्, सुवर्णचन्द्रलोहेत्यादिना प्रकारान्तरेण सप्तलोहनिर्देशः धातुलोहशब्दयोः परस्परं पर्य्यायनिर्णायकः । प्राचीनतन्त्रेषु लोहशब्देनापि सप्तानां परिगणनात् । तत्र चन्द्रलोहं रजतम् । अर्कः ताम्रम् । अहिः सीसकम् । स्पष्टमन्यत् ॥२-३॥

सामान्यः शोधनप्रकारः काञ्जिकतक्रादिना । तत्र नागवङ्गयशदानां गालितानां निषेको ह्यग्रिमकान्तरे इति वक्ष्यते, इतरेषां पत्रात्मनैव, विशेषशोधनन्तु तत्र तत्र वक्ष्यत एव । एतच्छोधनञ्च कृत्रिमखनिजदोषयोः शान्त्यर्थम् । अथवा कदलीमूलजले सप्तधा निषेकादपि शुद्धिः । उक्तञ्चान्यत्रापि "सर्वलोहानि तप्तानि कदलीमूलवारिणा । सप्तवारं निषिक्तानि शुद्धिमायान्त्यनुत्तमाम् ।" इति ॥४-७॥

धातूनां सामान्यो मारणप्रकारः।

मनःशिलागन्धकसूर्यदुग्धैः संमर्द्य खल्वे खलु सप्तलोहम्।
वन्योत्पलाग्नौ पुटितं प्रयत्नादनुत्तमां याति मृतिं ह्यवश्यम् ॥८॥

## अथ स्वर्णस्य नामानि।

स्वर्णं सुवर्णं द्रविणं हिरण्यं कल्याणकं काञ्चनमग्निवर्णम्।
मनोहरं हेम च भूषणार्हं तथाग्निबीजं कनकञ्च कौन्तम् ॥९॥
भृङ्गारमाङ्गल्यकजाम्बवानि जाम्बूनदं भर्म च जातरूपम्।
चाम्पेयकं लोहवरञ्च रुक्मं चामीकरं हाटकसंज्ञमुक्तम् ॥१०॥

ग्राह्यसुवर्णस्य लक्षणम्।

वालारुणारुणमलं ज्वलनप्रतप्तं
शाणोपले घुसृणचूर्णसमानवर्णम्।
नाराचिकाधृतमलं गुरुतामुपेयात्
स्निग्धं तदेव कनकं कथितं तु जात्यम् ॥११॥

अपरं लक्षणम्।

कोमलं रक्तपीताभं स्निग्धं शुल्वेन्दुवर्जितम्।
गुरु चाखिलधातुभ्यो जात्या तत्स्वर्णमुत्तमम् ॥१२॥

अग्राह्यसुवर्णस्य स्वरूपम्।

कठिनं लघु रूक्षञ्च कषे च्छेदेऽनले सितम्।
तारताम्रसमायुक्तं स्वर्णं हेयं स्मृतं बुधैः ॥१३॥

प्रसङ्गात् सप्तानामपि मारणप्रकारः—सूर्यदुग्धं अर्कक्षीरम्। उक्तञ्चान्यत्र—"शिलागन्धार्कदुग्धाक्ताः स्वर्णाद्याः सप्तधातवः। म्रियन्ते द्वादशपुटैः सत्यं गुरुवचो यथा" इति ॥८॥

अथ विशेषतो वर्णनक्रमे प्रथमं सुवर्णनामानि—तन्त्रे व्यवहाराय ॥

वालारुणारुणं उदीयमानारुणसमशोभम्, शाणोपल इति निकषग्रावणि। घुसृणं कुङ्कुमम्। नाराचिका तुला। जात्यं उत्कृष्टम्। उक्तञ्च—"दाहेऽतिरक्तमथ यत् ससितं छिदायां काश्मीरकान्ति च विभाति निकापपट्टे। स्निग्धञ्च गौरवमुपैति च यत्तुलायां ग्राह्यं तदेव कनकं मृदु रक्तपीतम्" इति। अपरमपि लक्षणं वैशद्यार्थम्, तथा चाह शुल्वेन्दुवर्जितमिति ताम्ररजतसंयोगरहितम्, जात्या स्वभावत.। उक्तञ्च—"दाहे रक्तं सितं छेदे निकषे कुङ्कुमप्रभम्। तारशुल्वोज्झितं स्निग्धं कोमलं गुरु हेम सत्" इति ॥११-१२॥

त्याज्यस्वर्णरूपम्-कषे छेदे अनले त्रिधापि श्वेतप्रभम्। उक्तञ्च—यच्छ्वेतं कठिनं रूक्ष विवर्णं समलं दलम्। दाहे छेदे सितं, श्वेतं कषे त्याज्यं लघु स्फुटम्" इति ॥१३॥

सुवर्णशोधनस्य प्रयोजनम् ।

यस्मादशोधितं स्वर्णं हन्ति बुद्धिबलादिकम् ।
करोति च बहून् रोगान् तस्मात्स्वर्णं विशोधयेत् ॥१४॥

सुवर्णस्य प्रथमः शोधनप्रकारः ।

विततानि विशालानि कर्षैकप्रमितानि तु ।
सूचीवेध्यानि पत्राणि सुवर्णस्य समाहरेत् ॥१५॥
ततः खल्वम्लपिष्टेन मृत्तिकापञ्चकेन वै ।
तानि पत्राणि संलिप्य कपोताख्यपुटे पुटेत् ॥१६॥
स्वर्णं सप्तपुटैरेवं शुद्धिमायात्यनुत्तमाम् ।
श्यामिका हीयते चापि तारताम्रादियोगजा ॥१७॥

द्वितीयः शोधनप्रकारः ।

कर्षोन्मितानीह दलानि हेम्नः खल्वम्लपिष्टेन ससैन्धवेन ।
वन्योपलोत्थेन तु भस्मना वै प्रलेपयेल्लेपविधानदक्षः ॥१८॥
लेपं प्रशुष्कं प्रसमीक्ष्य वैद्यः शरावसंस्थानि तु कोकिलाग्नौ ।
पुटेत्पुटे कुक्कुटसंज्ञके तु स्वर्णं भवेत्षोडशवर्णतुल्यम् ॥१९॥

तृतीयः शोधनप्रकारः ।

सूचीवेध्यानि पत्राणि सुवर्णस्य समाहरेत् ।
कर्तर्या कर्तयेच्चाथ कणान् सूक्ष्मांस्तु कारयेत् ॥२०॥
मृल्लिप्ते काचपात्रे च न्यसेत्स्वर्णकणांस्ततः ।
त्रिपादिकायां विन्यस्य सुरादीपाग्निना पचेत् ॥२१॥
लवणद्रावकं तत्र निक्षिपेत्तु शनैः शनैः ।
सोरकद्रावकञ्चाथ पूर्वद्रावस्य पादिकम् ॥२२॥
विधिज्ञो निक्षिपेद्यावद् द्रवतां याति काञ्चनम् ।
किञ्चित्कालं पचेच्चाथ द्रावाधिक्यनिवृत्तये ॥२३॥

अशुद्धं सुवर्णं यस्मात् भक्षितं बुद्धिबलादिकं हन्ति तस्मात् शोधयेदिति । आहुश्च प्राञ्चः—"बलञ्च वीर्यं हरते नराणां रोगव्रजं पोषयतीह काये । असौख्यकार्येव सदा सुवर्णमशुद्धमेतन्मरणञ्च कुर्यात्" इति ॥१४॥

तत्र प्रथमः शोधनप्रकारः—मृत्तिकापञ्चकम् "वल्मीकमृत्तिका धूमं गैरिकञ्चेष्टिका पटु । इत्येताः मृत्तिकाः पञ्च" इत्युक्तम् । आहुश्च प्राञ्चः—"मृत्तिकाः पञ्च लुङ्गाम्लैः पञ्चवासरभाविताः । समभस्मलवणाः हेम्नः शोधन्यः पुटपाकतः" इति । एवं शोधनफलं श्यामिका हीयते इत्यादि ॥१५-१७॥

द्वितीयः शोधनप्रकारः—कोकिला अङ्गाराः । षोडशवर्णं उज्वलरङ्गं सर्वांशशुद्धम् ॥१८-१९॥

तृतीयः शोधनप्रकारो नवीनैः परिभाषितः—काचपात्रस्य मृदा लेपः वह्नितापसहत्वसम्पादनाय । सुरादीपपरिचयः पूर्वमुक्तः । सुरादीपप्रयोगश्च स्थिर-

सलिलञ्चाथ निक्षिप्य पचेदथ विधानवित् ।
सजलं चणकाम्लञ्च तावत्तत्र विनिक्षिपेत् ॥२४॥
यावत्खलु सुवर्णस्य चणकाम्लस्य योगतः ।
अतिसूक्ष्मकणं चूर्णं पात्राधः पतितं भवेत् ॥२५॥
विनश्यत्यम्लता यावत् तावत्प्रक्षालयेज्जलैः ।
संशोष्य चाथ मतिमान् विशुद्धं स्वर्णमाहरेत् ॥२६॥

विशुद्धस्वर्णस्य प्रयोगक्रमः ।

विशोधितं सुवर्णन्तु रसतन्त्रविचक्षणः ।
घृष्ट्वा च मण्डलीकृत्य तत्र तत्र प्रयोजयेत् ॥२७॥

घृष्टस्य विशुद्धस्वर्णस्य गुणाः ।

विशुद्धं कनकं घृष्टं विषबाधाविनाशनम् ।
मधुरं शीतलं नेत्र्यं गर्भस्थापनमुत्तमम् ॥२८॥
पित्तामयप्रशमनं हृद्दौर्बल्यहरं परम् ।
अन्यभेषजसाहाय्यात् करोति विविधान् गुणान् ॥२९॥

सुवर्णमण्डलस्य नामानि ।

सुवर्णमण्डलं स्वर्णमण्डलं स्वर्णपत्रकम् ।
सुवर्णपटलं स्वर्णदलञ्चापि प्रकीर्तितम् ॥३०॥

सुवर्णमण्डलस्य गुणाः ।

स्वर्णमण्डलमायुष्यं वह्निमान्द्यविनाशनम् ।
आक्षेपशमनं नेत्र्यं वीर्यवृद्धिकरं परम् ॥३१॥
अम्लपित्तापहं हृद्यं विपाके स्वादुशीतलम् ।
हिक्कानाहविषश्लेष्मक्षयशूलव्रणापहम् ॥३२॥

तापदानाय । शनैः शनैः लवणद्रावकप्रक्षेपः सुवर्णगालनयोग्यताज्ञानाय । चणकाम्लकं चणकक्षुपनिपतितावश्यायपाकजातम् "Oxalic Acid" इत्याङ्गलभाषायाम् । स्पष्टमन्यत् ॥२०-२६॥

विशोधितस्य सुवर्णस्य शिलादौ घृष्ट्वा मण्डलीकृत्यातिसूक्ष्मपत्ररूपेण च ॥२७॥

घृष्टस्य अपक्वस्यैव शुद्धस्य केवलं सुवर्णस्य सेवने गुणाः—विषबाधाहरं विशेषतः, तथा शीतन्च वीर्य्यतः स्पर्शतश्च, हृदयदौर्बल्यहरञ्च । सुवर्णमण्डल अम्लपित्तापहमिति विशेषः। समानमन्यत्। सुवर्णपटलं सितया खण्डेन परिपेषितं तत्तद्रोगनाशकभेषजयोगेषु योज्यम् । आहुश्च प्राचीनाः—"अपक्वं हेम सङ्घृष्टं शिलायां जलयोगतः ।द्रवरूपन्तु तत्पेयं मधुना गुणदायकम् ॥ यद्वापि तवकाख्यन्तु स्वर्णपत्रं विचूर्णितम् । मधुना सङ्गृहीतञ्चेत् सद्यो हन्ति विषादिकम्"

सुवर्णपटलस्य प्रयोगविधिः ।

सुवर्णपटलं सम्यक् सितया परिपेषितम् ।
तत्तद्रोगघ्नभैषज्ययुतं तत्तद्गदापहम् ॥३३॥

अथ सुवर्णलवणस्य नामानि ।

सुवर्णलवणं स्वर्णलवणञ्चापि तन्मतम् ।
हिरण्यलवणञ्चैव समाख्यातं भिषग्वरैः ॥३४॥

सुवर्णलवणस्य निर्माणप्रकार. ।

विशोधितं पावकभागमानं स्वर्णं तु सत्काचशरावसंस्थम् ।
सुराप्रदीपे विनिधाय चाथ मन्दानलेनेह पचेद्रसज्ञः ॥३५॥
शनैः शनैः संततमल्पमल्पं तुर्यांशसोराम्लकमिश्रितन्तु ।
क्षिपेद्विशुद्धं लवणाम्लमाराद्यावत्सुवर्णं द्रवतामुपैति ॥३६॥
द्रुतं सुवर्णन्तु विलोक्य शुद्धं दिग्भागिकं सिन्धुभवं क्षिपेच्च ।
नारङ्गरङ्गन्तु जले विशुष्के-सुवर्णपूर्वं लवणं हरेद्वै ॥३७॥

ततः सुवर्णलवणं काचकुप्यां निधापयेत् ।
अथ निर्दिष्टकार्येषु जले संद्राव्य योजयेत् ॥३८॥

सुवर्णलवणस्य गुणाः ।

सुवर्णलवणं वृष्यं दोषत्रितयकोपजित् ।
तुवरं स्वादु तिक्तञ्च सलिले च द्रवीभवेत् ॥३९॥
पुष्पावरोधं मधुमेहबाधां चिरन्तनञ्चापि फिरङ्गरोगम् ।
अपस्मृतिं श्वासमथोग्रवेगं क्लैब्यं तथोन्मादमलं निहन्यात् ॥४०॥

सुवर्णलवणस्य मात्रा ।

खशरांशाद्रक्तिकाया विंशांशप्रमितं शुभम् ।
युञ्जीत स्वर्णलवणं बलकालाद्यपेक्षया ॥४१॥

इति । "न सज्जते हेमपाङ्गे पद्मपत्रेऽम्बुवद् विषम्" इति च वाग्भटः ॥२८-३३॥

अथ नवीनपरिभाषानिर्दिष्टस्य सुवर्णलवणस्य प्रकारः—विशोधितमिति तृतीयशोधनप्रकारेण । पावकोऽग्निः "त्रयोऽग्नय" इति स्मरणात् । पावकभागमानं त्रिभागम्, तुर्य्यांशं चतुर्थांशं लवणाम्लापेक्षया, दिशो दश, ततश्च दशभागिकं लवणं सैन्धवाख्यम्, तच्च अत्यन्तनिर्मलं ग्राह्यम्, नारङ्गरङ्गं रक्तपीतवर्णम् । जले द्रावणप्रकारोऽनुपदमेवोक्तः ॥३४-३८॥

अलं अत्यर्थम् । इदं अजीर्णजनिते चिरन्तने आध्मानेऽपि सहस्रशो दृष्टफलम् ॥३९-४०॥

खशरांशः पञ्चाशत्तमो भागः, तस्मादारभ्य विंशतिभागपर्य्यन्तं मात्रास्य ॥

अस्य प्रयोगक्रमः ।

सुवर्णलवणं गुञ्जोन्मितं खलु समाहरेत् ।
सार्द्धकोलद्वयमिते जले संद्रावयेद्भिषक् ॥४२॥
तस्माज्जलाद्भिषग्वर्यो विन्दून् भास्करसंख्यकान् ।
तत्तन्निर्दिष्टरोगेषु विधानज्ञः प्रयोजयेत् ॥४३॥
भिषक् सुवर्णलवणं त्वासवादौ प्रयोजयेत् ।
रसौषधेषु च प्राज्ञो न कदाचित् प्रयोजयेत् ॥४४॥

अथ सुवर्णमारणस्य प्रथमः प्रकार ।

कर्षोन्मितं शोधितमग्निवीजं न्यसेत्कुमुद्यां भिषजां वरेण्यः ।
संद्रावयेच्चाथ हि कोकिलाग्नौ सद्वङ्कनालानिलसुप्रदीप्ते ॥४५॥
द्रुतं सुवर्णन्तु ततो विलोक्य क्षिपेत्समं तत्र मृतं रसेशम् ।
लुङ्गद्रवेणाथ विमर्द्य सम्यक् सुश्लक्ष्णचूर्णञ्च ततो विदध्यात् ॥४६॥
ततः सुवर्णप्रमितं विशुद्धं क्षिपेद्विधिज्ञो रसगर्भचूर्णम् ।
पुटेत्पुटे कुक्कुटसंज्ञके च मार्तण्डवारं भिषगप्रमत्तः ॥४७॥
एवं नातिचिरादेव काञ्चनं याति पञ्चताम् ।
सुश्लक्ष्णं कुङ्कुमच्छायं निश्चन्द्रञ्च भवत्यलम् ॥४८॥

द्वितीयो मारणप्रकारः ।

विशुद्धस्वर्णपत्राणि कर्षैकप्रमितानि च ।
समादाय समं सूतं दत्त्वा संमर्दयेद् दृढम् ॥४९॥
निम्बुद्रवेण सम्पेष्य सम्यक् प्रक्षालयेत्ततः ।
हिङ्गुलं गन्धकञ्चाथ शिलाञ्च नवसादरम् ॥५०॥

प्रयोगक्रमः—सुवर्णलवणं १ गुञ्जा, जलं २॥ तो० मेलयेत्, द्वादशविन्दवोऽस्य मात्रा। पुनर्जले आसवादौ वा मेलयित्वा च पेयेति । रसौषधेषु प्रयोगयोग्यन्तु भस्मैवेति विशेषः ॥४२-४४॥

अथ क्रमप्राप्तः भस्मीकरणप्रकारः—अग्निवीजं स्वर्णम्, रसेशं पारदम्, लुङ्गद्रवः मातुलुङ्गरसः, रसगर्भचूर्णं शुद्धहिङ्गुलक्षोदः, मार्तण्डवारं द्वादशवारम्, अत्र च प्रतिवारं केवलं हिङ्गुलक्षेपः, पारदभस्मनस्त्वेकवारमेवेति । अत्र हि स्मरणीया प्राचीनपरिभाषा—"रसीभवन्ति लोहानि मृतानि सुरवन्दिते ! । विनिघ्नन्ति जराव्याधीन् रसयुक्तानि किम्पुनः ॥ लोहानां मारणं श्रेष्ठं सर्वेषां रसभस्मना । मध्यमं मूलिभिः प्रोक्तमधम गन्धकादिभिः॥" "अरिलोहेन मारण दुर्गुणप्रदम्" इति च ॥४५-४८॥

अपरः प्रकारः—सूतं हिङ्गुलोत्थं शोधितम्वा, प्रक्षालनञ्च वर्णोज्ज्वलता-

पृथक् पृथक् कर्षमितं निक्षिप्याम्लेन मर्दयेत् ।
संशोष्य चातपे सम्यक् श्लक्ष्णचूर्णञ्च कारयेत् ॥५१॥
पुटेत्तावत्प्रयत्नेन यावन्निश्चन्द्रिकं भवेत् ।
इत्थं स्वल्पपुटैरेव काञ्चनं याति पञ्चताम् ॥५२॥

तृतीयो मारणप्रकारः ।

स्वर्णपत्राणि शुद्धानि समादाय भिषग्वरः ।
कर्तर्या कर्तयेच्चाथ कणान् सूक्ष्मांस्तु कारयेत् ॥५३॥
स्वर्णतुल्यं रसं दत्त्वा खल्वे सम्मर्दयेद् दृढम् ।
निम्बुद्रवेण सम्मर्द्य बहुशः क्षालयेद्भिषक् ॥५४॥
कुनटीं रससिन्दूरं स्वर्णतुल्यं विनिक्षिपेत् ।
सुवर्णपादिकञ्चैव मृतं कनकमाक्षिकम् ॥५५॥
रविदुग्धेन सम्पेष्य श्लक्ष्णचूर्णञ्च कारयेत् ।
पुटेत्तावद्विधानज्ञो यावन्निश्चन्द्रिकं भवेत् ॥५६॥
एवं स्वल्पपुटैरेव कनकं मृतिमाप्नुयात् ।
निश्चन्द्रिकञ्च मसृणं स्वर्णभस्म भवेच्छुभम् ॥५७।
द्वितीयादिपुटेष्वत्र मृतं कनकमाक्षिकम् ।
न निक्षिपेद्विधानज्ञो रहस्यमिदमीरितम् ॥५८॥

चतुर्थो मारणप्रकारः ।

शुद्धेषु स्वर्णपत्रेषु समानं शुद्धपारदम् ।
दत्त्वा सम्पेषयेदम्लैः सुचिरं क्षालयेत्ततः ॥५९॥
संशोष्य गन्धकं दत्त्वा पुटेत्पुटविधानवित् ।
एवं चतुर्दशपुटैः सुवर्णं मृतिमाप्नुयात् ॥६०॥
षोडशांशं प्रतिपुटं रसेशं ह्रासयेद् बुधः ।
अन्यथा पञ्चतां नैति रहस्यमिति दर्शितम् ॥६१॥

पञ्चमो मारणप्रकारः ।

सूचीवेध्यानि पत्राणि सुवर्णस्य समाहरेत् ।

रक्षार्थम् । अत्र च प्रतिवारं पारदादीनां क्षेपः । पुटनञ्च लघुपुटेनैव । स्वल्पपुटैः यथासम्भवं सप्तभिः । निश्चन्द्रिकञ्च भस्मलक्षणम् ॥४९-५२॥

तृतीयः प्रकारः—बहुशः क्षालनं अवश्यं कार्यम्, अन्यथा वर्णहानिः । कुनटीं मनःशिलाम् । द्वितीयादिपुटेष्वत्र माक्षिकं न क्षिपेत् । अन्येषान्तु क्षेपो विधेय एवेति । व्याख्यासमानमन्यत् ॥५३-५८॥

चतुर्थो मारणप्रकारो व्याख्यातप्रायपाठः सरलप्रकारश्च, अन्यथा पञ्चतां नैति सुवर्णम् ॥५९-६१॥

रसेशं तत्समं दत्त्वा मर्दयेत्तु दिनत्रयम् ॥६२॥
निम्बूनीरेण सम्मर्द्य वारिणा क्षालयेद्भृशम् ।
श्वेतपाषाणचूर्णञ्च स्वर्णार्द्धं तत्र निक्षिपेत् ॥६३॥
जम्बीरस्य द्रवं दत्त्वा पेषयेच्च दिनत्रयम् ।
शोषयित्वा द्रवं सम्यक् विदध्यात् श्लक्ष्णचूर्णकम् ॥६४॥
शुद्धगन्धकचूर्णञ्च ततः स्वर्णोन्मितं क्षिपेत् ।
शरावसम्पुटे न्यस्य विदध्यात्सन्धिरोधनम् ॥६५॥
पुटेल्लघुपुटेनैव यावन्निश्चन्द्रिकं भवेत् ।
काञ्चनारत्वचोत्थेन वारिणा भावितं ततः ॥६६॥
पुटेत्त्रिधा लघुपुटे स्वाङ्गशीतं समाहरेत् ।
एवं जाम्बववर्णाभं भस्म हाटकजं भवेत् ॥६७॥
श्रीमत्परमपूज्येन धन्वन्तरिमहर्षिणा ।
भिषग्घिताय सुगमः प्रकारोऽयं निरूपितः ॥६८॥

मृतसुवर्णस्य गुणाः ।

मृतं सुवर्णं मधुरञ्च वृष्यं हृद्यञ्च नेत्र्यं परमञ्च मेध्यम् ।
रसायनं पुंसवनोपयोगि विषापहं कान्तिकरञ्च शस्तम् ॥६९॥

अपि च ।

स्वर्णं स्निग्धं मधुरमधुरं वृष्यमायुष्यमग्र्यं
वर्ण्यं बल्यं विषगरहरं त्वन्नशोषक्षयघ्नम् ।
रुच्यं पुण्यं पवनशमनं दीपनञ्चातिकेश्यं
हन्यादेतन्नियतमचिरादेव रोगानशेषान् ॥७०॥

विशिष्टा गुणाः ।

मृतं सुवर्णं शिशिरं वयःस्थापनमुत्तमम् ।
स्मृतिप्रदं परञ्चैव त्रिदोषज्वरनाशनम् ॥७१॥

पञ्चमो मारणप्रकारः—श्वेतपाषाणं "सङ्गमर्मर" इति ख्यातम्, अत्र च श्वेतपाषाणस्यैकवारमेव क्षेपः । प्रतिवारन्तु पारदगन्धकयोरिति विशेषः । श्रीमत्परमपूज्येनेति सम्प्रदायनिर्देश आदरार्थम् ॥ व्याख्यासमानमन्यत् ॥६२-६८॥

अथ मृतसुवर्णगुणाः—पुंसवनोपयोगि गर्भिण्यां पुंसवनकार्यकरम् । मधुरमधुरं अत्यन्तमधुरम् । अशेषान् रोगान् हन्यादिति, तथा च सस्मरुः प्राञ्चः "सर्वौषधिप्रयोगेण व्याधयो न गता हि ये । कर्मभिः पञ्चभिश्चापि सुवर्णं तेषु योजयेत् ॥ शिलाजतुप्रयोगैस्तु ताप्यसूतकयोस्तथा । अन्यै रसायनैश्चापि प्रयोगो हेम्न उत्तमः" ॥६९-७०॥

विशेषतो गुणनिर्देशः शिष्यमतिवैशद्यार्थः सर्वत्रानुसन्धेयः प्राचीनतन्त्रा-

सौन्दर्यं मुखलावण्यं ललनानां विवर्धयेत् ।
चित्तहारित्वमङ्गेषु जनयेच्च विशेषतः ॥७२॥
मृतं सुवर्णं सुस्निग्धं वाग्विशुद्धिकरं परम् ।
चिन्ताशोकभयक्रोधसम्भूतामयनाशनम् ॥७३॥
शिरोदेशे प्रवृद्धान्तु रक्तसञ्चरणक्रियाम् ।
आत्मघाताभिलाषां च प्राबल्येन समुत्थिताम् ॥७४॥
अस्थिक्षतं त्वस्थिशोथं तथा जङ्घास्थिवेदनाम् ।
फिरङ्गजां मुष्कमांसवृद्धिञ्चापि चिरन्तनीम् ॥७५॥
उन्मादमथ वैचित्यं योषापस्मारकं तथा ।
चित्तोद्वेगं भ्रमं ग्लानिं नाशयेदविकल्पतः ॥७६॥
हृद्वेपनप्रशमनं मुष्कशोथप्रणाशनम् ।
अस्थिशोषहरं चैव मूर्च्छायपरिकृन्तनम् ॥७७॥
कासश्वासप्रशमनं परमोजोविवर्द्धनम् ।
अतीसारग्रहणिकापाण्ड्वामयनिषूदनम् ॥७८॥

अपि च ।

मृतं सुवर्णं शमयेन्नितान्तं प्रसादसंज्ञं पवनं प्रवृद्धम् ।
क्षीणं तथैनं परिबृंहयेच्च समं समं पोषयतीह काये ॥७९॥
प्रक्षीणमेधास्मृतिपाटवानां प्रशुष्यदाम्लानकलेवराणाम् ।
प्रमुह्यतां शास्त्रगतौ च नित्यं यूनां शिशूनाञ्च परं प्रशस्तम् ॥८०॥

सुवर्णभस्मनो मात्रानिरूपणम् ।

समारभ्याष्टमाद् भागाद् रक्तिकाया भिषग्वरः ।

निर्दिष्टश्चेति । अत्र केचिद् भ्रान्ताः सुवर्णमुष्णं निरूपयन्ति, तन्न, अनुभवविरोधात् प्राचीनसंवादाच्च। उक्तं हि—"स्वर्णं स्निग्धकषायतिक्तमधुरं दोषत्रयध्वंसनं शीतं स्वादु रसायनञ्च रुचिकृच्चक्षुष्यमायुष्यदम् । प्रज्ञावीर्यबलस्मृतिस्वरकरं कान्तिं विधत्ते तनोः संधत्ते दुरितक्षयं श्रियमिदं धत्ते नृणां धारणात्" इति । अपि च "सुवर्णं शीतलं वृष्यं बल्यं गुरु रसायनम्। स्वादुतिक्तं च तुवरं पाके च स्वादु पिच्छिलम् ॥ पवित्रं बृंहणं नेत्र्यं मेधास्मृतिमतिप्रदम् । हृद्यमायुष्करं कान्तिवाग्विशुद्धिस्थिरत्वकृत् ॥ विषद्वयक्षयोन्मादत्रिदोषज्वरशोकजित् । अपक्वमपि संशुद्धं, पक्वं तत्तु रसायनम्" इति च । व्याख्यासमानमन्यत् । समं समं पोषयतीति-सम पवनं समं यथा स्यात्तथा पोषयति न न्यूनयति न वा वर्धयतीति भावः। शास्त्रगतौ प्रमोहश्च तदभिप्रायानाधिगमात्। एतत्सेवनाच्च मनोमतिबलवृद्धिरतो भवति सामर्थ्यं शास्त्रतात्पर्य्यावधारणे इति ॥७१-८०॥

योजयेत्तुर्यभागान्तं मृतं स्वर्णं तु कालवित् ॥८१॥

अस्य आमयिकः प्रयोगः ।

विल्वत्वक्स्वरसोपेतं रससिन्दूरसंयुतम् ।
सुवर्णं शीलितं यत्नान्नाशयेद्वातिकज्वरम् ॥८२॥
पर्पटस्वरसोपेतं रससिन्दूरमिश्रितम् ।
शीलितं तपनीयन्तु नाशयेत्पैत्तिकं ज्वरम् ॥८३॥
तुलसीरससंयुक्तं ससिन्दूरं निषेवितम् ।
काञ्चनं ह्यचिरादेव कफज्वरमपोहति ॥८४॥
सजीरं साभ्रकं स्वर्णं मृतं खलु निषेवितम् ।
अचिरादेव चिरजं जीर्णज्वरमपोहति ॥८५॥
विल्वपेशिकया युक्तं सुवर्णन्तु सजीरकम् ।
शीलितं नाशयेच्चूर्णमतीसारमसंशयम् ॥८६॥
रसपर्पटिकोपेतं सुवर्णं परिशीलितम् ।
ग्रहणीं चिरसञ्जातां नाशयेदविकल्पतः ॥८७॥
गुडूचिकालस्वरजोविमिश्रं स्वर्णं सलोहं परिशीलितन्तु ।
नवोत्थितं वा सुचिरोत्थितं वा पाण्ड्वामयं नातिचिरान्निहन्यात् ॥८८॥
साभ्रकं वा ससिन्दूरं समौक्तिकमथापि वा ।
सुवर्णं नाशयेच्चूर्णं राजयक्ष्माणमुल्वणम् ॥८९॥
क्षीरकाकोलिकोपेतं चोपचीनीसमन्वितम् ।
सुवर्णं शोधयेच्चूर्णं गर्भाशयमसंशयम् ॥९०॥

मात्रानिर्माणं बलकालापेक्षया योग्यम्—यद्यपि प्राचीनतन्त्रेषु "यववृद्ध्या प्रयोक्तव्यं हेम गुञ्जाष्टकम्" इत्युक्तम् तथापि तन्नाधुनोपयोगि इति सर्वादि मात्रामानान्तरमुक्तमाचार्यैरिति । एवं, सर्वत्र । तदेतत् ध्वनयति कालवित् इत्यनेन पदेन ॥८१॥

अथ सुवर्णभस्मन आमयिकः प्रयोगः प्राचीनतन्त्रानिर्दिष्टप्राय. प्रकटित आचार्यैः । रक्ताङ्गं रक्तचन्दनम्, तुङ्गः पुन्नाग. पद्मकेशरो वा, उत्पलं नीलोत्पलम्, यष्टी मधुयष्टी, समङ्गा मञ्जिष्ठा, रुधिरं कुङ्कुमम्, आदिपदेन रक्तशोधकवर्धक-चोपचीन्यादिद्रव्यपरिग्रहः। गायत्री खदिरः।रिष्टप्रादुर्भावेऽन्यःप्रयोगोऽपि तन्त्रान्तरे "मध्वामलकचूर्णन्तु सुवर्णञ्चेति तत्त्रयम् । प्राश्यारिष्टगृहीतोऽपि मुच्यते प्राण-सङ्कटात्" इति । मेधाभिवृद्धिं जनयेच्चितान्तमिति—उक्तं हि "मेधाकामस्तु वचया श्रीकामः पद्मकेसरैः । शङ्खपुष्प्या वयोर्थी च विदार्या च प्रजार्थकः" इति च । स्थिरा शालपर्णी, विदारी स्वनामख्यातःशुक्लकन्दः, वरदा अश्वगन्धा, अजरा कपिकच्छू ॥ जीवनीयगण—"जीवन्ती काकोल्यौ मेदे द्वे मुद्गमाषपर्ण्यौ च । ऋषभक-

गुडूचिकाकुङ्कुमसारिवाद्यैर्वनौषधैः शोणितशोधनीयैः ।
स्वर्णं प्रयुक्तं रसपुष्पयुक्तं हरेत्फिरङ्गं चिरजन्तु तूर्णम् ॥९१॥
शट्यादिभिः श्वासहरैर्द्रव्यैस्तु चरकोदितैः ।
स्वर्णं नातिचिरादेव नाशयेच्छ्वासमुल्वणम् ॥९२॥
धात्रीचूर्णसमायुक्तं सुवर्णं खलु शीलितम् ।
अम्लपित्तं निहन्त्याशु चिरोत्थमपि दारुणम् ॥९३॥
सिन्दूराभ्रसमायुक्तं सुवर्णं शङ्खिनीयुतम् ।
अपस्मारं निहन्त्याशु योषापस्मारकं तथा ॥९४॥
रससिन्दूरसंयुक्तं सुवर्णं परिशीलितम् ।
बलाक्वाथेन नियतं शीर्षवेपथुनाशनम् ॥९५॥
पुनर्नवाकज्जलिकायुक्तं सुमृतकाञ्चनम् ।
गोमूत्रेण प्रयुक्तं तु मुष्कशोथं विनाशयेत् ॥९६॥
द्राक्षाकणाकट्फलयष्टिकाभिः सुवर्णचूर्णस्य निषेवणेन ।
वाणी जयत्याशु रुतं विशेषात् पुंस्कोकिलानां मधुमादितानाम् ॥९७॥
रक्ताङ्गतुङ्गोत्पलयष्टिकाभिः सितासमङ्गारुधिरादिभिर्वा ।
स्वर्णं प्रयुक्तं खलु सुन्दरीणां लावण्यवृद्धिं प्रकरोत्यनल्पाम् ॥९८॥
विश्वालवङ्गमरिचैः सक्षौद्रैस्तु निषेवितम् ।
सुवर्णं नाशयेत्तूर्णमुन्मादन्तु त्रिदोषजम् ॥९९॥
धात्रीचूर्णयुतं स्वर्णं गायत्रीरसभावितम् ।
शीलितं चरमे काले हन्ति रिष्टान्यशेषतः ॥१००॥
सुवर्णचूर्णं परिशीलितन्तु वचामृताविश्वशतावरीभिः ।
षण्मासमात्रं तु निषेवणेन मेधाभिवृद्धिं जनयेन्नितान्तम् ॥१०१॥
मृतं सुवर्णं परिशीलयन्तः स्थिराविदारीवरदाजराभिः ।
मासत्रयेणैव कृशाः पुमांसः प्रपुष्टदेहाश्च बहुप्रजाः स्युः ॥१०२॥
सुवर्णचूर्णं परिशीलयन्तो धात्रीस्थिराविश्वपुनर्नवाभिः ।
अधृष्यदेहा बलिभिर्भवन्ति तारुण्यलावण्यविलासपूर्णाः ॥१०३॥
जीवनीयगणोद्दिष्टभेषजैः परिशीलितम् ।
सुवर्णं सर्वदा पुंसां जीवनीयं परं स्मृतम् ॥१०४॥
नागकेशरचूर्णेन सुवर्णं परिशीलितम् ।
ऋतौ सीमन्तिनीनान्तु गर्भधारणमुत्तमम् ॥१०५॥

जीवकमधुकं चेति गणो जीवनीयाख्यः" इत्युक्तः ॥ काकोल्यादिगणः—"काको-

## अथ रजतविज्ञानीयः षोडशस्तरङ्गः ।

रजतस्य नामानि ।

रजतं रुचिरं रौप्यं तारं सौधञ्च शुभ्रकम् ।
चन्द्रलोहं चन्द्रहासं रूपकं चन्द्रसंज्ञकम् ॥१॥

ग्राह्यरजतस्य स्वरूपम् ।

छेदे निकाषफलके दहने प्रकामं
रम्यञ्च शारदकलाधरमण्डलाभम् ।
नाराचिकाधृतमलं गुरुतामुपेयात्
स्निग्धं तदेव कथितं रजतन्तु जात्यम् ॥२॥

त्याज्यरजतस्य स्वरूपम् ।

दाहेऽतिमलिनं पीतं रक्तं रूक्षं लघु स्फुटम् ।
कठिनं सदलञ्चैव रजतं त्याज्यमुच्यते ॥३॥

प्रकारान्तरेण जात्यरजतस्य स्वरूपम् ।

निर्मलं पिच्छिलं स्निग्धं मृदुलं निर्दलं घनम् ।
शरदिन्दुनिभं यच्च रजतं जात्यमुच्यते ॥४॥

रजतशोधनस्य प्रयोजनम् ।

तारं विवर्द्धयति सर्गजगात्रतापं
वीर्यं विनाशयति हन्ति शरीरपुष्टिम् ।
विड्बन्धनं रचयतीह तथाङ्गसादं
ईषन्मृतं त्वपि मृतं यदि शुद्धिहीनम् ॥५॥

रजतस्य प्रथमः शोधनप्रकारः ।

पत्रीकृतं तु रजतं ज्वलने प्रतप्तं
निर्वापयेन्मुनितरोः स्वरसे त्रिवारम् ।

रजतनामानि व्यवहार्य्याणि तन्त्रे । चन्द्रसंज्ञकं यावच्चन्द्रनामपर्य्यायम् ॥

जात्यं उत्कृष्टम् । उक्तञ्च प्राचीनैः—"गुरु स्निग्धं मृदु श्वेतं दाहच्छेदघनक्षमम् । वर्णाढ्यं चन्द्रवत्स्वच्छं रूप्यं नवगुणं शुभम्" इति ॥ प्रकारान्तरेण जात्यरजतनिरूपणं व्याख्यावैशद्यार्थम् ॥२-४॥

रजतशोधनप्रयोजनम्—सर्गजं स्वाभाविकम् । प्राचीनैरप्युक्तम् "तारं शरीरस्य करोति तापं विड्बन्धतां यच्छति शुक्रनाशम् । वीर्यं बलं हन्ति तनोश्च पुष्टिं महागदान् पोषयति ह्यशुद्धम्" इति ॥५॥

रजतशोधनम्—अगस्त्यपत्रस्वरसे त्रिवारं निर्वापणेन । उक्तञ्च—"पत्री-

इत्थं विशुद्धममलं खलु चन्द्रलोहं
संयोजयेन्मृतिविधौ भिषजां वरेण्यः ॥६॥

द्वितीय. शोधनप्रकारः।

प्रदीप्य वह्निं खलु चुल्लिकायां तस्यां कटाहञ्च ततो निदध्यात्।
तदन्तरे चाथ वनोपलोत्थभूत्यालवालं परितो विदध्यात् ॥७॥
अथालवालस्य तु मध्यदेशे रौप्यं क्षिपेद्वै भिषजां वरेण्यः।
तारोन्मितं शोधितसीसकञ्च निक्षिप्य दर्व्या परिचालयेच्च ॥८॥
द्रुतन्तु तारं त्वथ सीसकञ्च विलोक्य टङ्कं प्रददीत कामम्।
सीसं मृतं धूमविवर्जितञ्च समाहरेद्रौप्यमलं विशुद्धम् ॥६॥

तृतीयः शोधनप्रकारः।

पत्तलीकृतपत्राणि राजतानि भिषग्वरः।
वह्नौ प्रतापयेत्कामं बङ्कनालप्रदीपिते ॥१०॥
ततो निम्बूकजद्रावे चाङ्गेरीस्वरसेऽपि वा।
स्नपयेत्तप्ततप्तानि भूयो भूयः प्रयत्नतः ॥११॥
यावद्राजतपत्राणि मार्दवं यान्ति निर्भरम्।
वीतशङ्कस्ततो वैद्यो मारणाय प्रयोजयेत् ॥१...

अथ रजतदलस्य नामानि।

चन्द्रलोहदलं चैव स्मृतं रजतमण्डलम्।
तदेव तारपटलं मतं तारदलञ्च तत् ॥१३॥

अस्य गुणाः।

चन्द्रलोहदलं शीतं तुवराम्लरसं सरम्।
विपाकमधुरं चल्यं स्निग्धं रुच्यञ्च लेखनम् ॥१४॥
शुक्रमेहघ्नमायुष्यं वयःस्थापनमुत्तमम्।
वृष्यं मेध्यं विशेषेण वातपित्तप्रणाशनम् ॥१५॥

रजतपटलानां प्रयोगः।

ताम्बूलवीटिकादौ वा मिष्टान्नेषु विशेषतः।

कृतन्तु रजतं प्रतप्तं जातवेदसि। निर्वापितमगस्त्यस्य रसे वारत्रयं शुचि" इति ॥६॥

अपरः शोधनप्रकारः सुगमपाठः। टङ्कं टङ्कणम्। सीसं मृतमिति टङ्कण-क्षेपाद् हठाग्नितापाच्च भस्मीभूतम्। तच्चाल्पं उड्डीन भवति अवशिष्टञ्च भस्ममिलितं भवति। धूमवर्जितमिति यावत् सीसं तावत् धूमनिर्गम इति भावः ॥

तृतीयः शोधनप्रकारः—सर्वदा सुलभक्रमः। वीतशङ्कः अशुद्धिशङ्का-रहितः ॥१०-१२॥

रजतदलं खण्डादिना सह निश्चन्द्रं यावन्निष्पेष्य शुक्रमेहादौ

साम्प्रतं विनियुज्यन्ते चन्द्रलोहदलानि तु ॥१६॥

रजतस्य प्रथमो मारणप्रकारः ।

कर्षद्वयमितं तारं विशुद्धन्तु समाहरेत् ।
रसेश्वरं तारतुल्यं निर्मलञ्च हरेद्भिषक् ॥१७॥
खल्वे सम्पेष्य यत्नेन पिष्टिकां कारयेत्ततः ।
निम्बूकस्वरसं दत्त्वा दिनमेकं सुपेषयेत् ॥१८॥
ततः प्रक्षालयेत्कामं सलिलेन भिषग्वरः ।
शुद्धं सौगन्धिकं तुल्यं तथैव नटभूषणम् ॥१९॥
निक्षिप्य चाथ सम्पेष्य श्लक्ष्णचूर्णञ्च कारयेत् ।
शरावसम्पुटे न्यस्य पुटेत्स्वल्पपुटे ततः ॥२०॥
एवं पुटत्रयेणैव रजतं मृतिमाप्नुयात् ।
भस्म सञ्जायते चैवं रक्तोत्पलसमप्रभम् ॥२१॥

द्वितीयो मारणप्रकारः ।

रौप्यपत्राणि शुद्धानि समादाय भिषग्वरः ।
कर्तर्या कर्तयेच्चाथ कणान् सूक्ष्मांस्तु कारयेत् ॥२२॥
रौप्यपत्रमितञ्चाथ तालं गन्धञ्च शोधितम् ।
निक्षिपेच्चाथ सम्पेष्य शरावद्वयसम्पुटे ॥२३॥
निधाय पुटयेद्यत्नात्पुटे कुक्कुटसंज्ञके ।
एवं पुटत्रयेणैव तारं यात्याशु पञ्चताम् ॥२४॥
भस्म सञ्जायते चैवं कालाञ्जनसमप्रभम् ।
एवं मृतं चन्द्रलोहं वीतशङ्कः प्रयोजयेत् ॥२५॥

तृतीयो मारणप्रकारः ।

पत्तलीकृतपत्राणि राजतानि समाहरेत् ।
कर्तर्या कर्तयित्वा च कणान् सूक्ष्मांस्तु कारयेत् ॥२६॥
तारपत्रसमं सूतं गन्धञ्च विमलं हरेत् ।
कुमारीस्वरसं दत्त्वा सम्यक् सम्पेषयेद् बुधः ॥२७॥

प्रयोज्यम् ॥१३-१६॥

रजतस्याद्यो मारणप्रकारः—प्रक्षालयेत् कामं सलिलेन इति पिष्टिनैर्मल्यार्थम् । सम्पुटशरावकान्तर्लग्नन्तु रजतभस्म सावधानतया विलेख्यमिति । उक्तं हि—"विधाय पिष्टिं सूतेन रजतस्याथ मेलयेत् । तालं गन्धं समं शुद्धं तन्मर्द्यं निम्बुकद्रवैः ॥ गोलकीकृत्य संशुद्धं मूषायां स्वर्णवद् दहेत् । द्वित्रैः पुटैर्भवेद् भस्म योज्यमेतद् रसादिषु" इति ॥१७-२१॥

द्वितीयः प्रकारः—सुगमः ॥२२-२५॥

शरावसम्पुटे न्यस्य करीषाग्नौ पुटेद्भिषक् ।
एवं स्वल्पपुटैरेव रौप्यं याति हि पञ्चताम् ॥२८॥

चतुर्थो मारणप्रकारः ।

पत्रीकृतं शुद्धतारं चतुस्तोलकसंमितम् ।
द्वितोलकमितं चैव सुमृतं स्वर्णमाक्षिकम् ॥२९॥
सुधादुग्धेन सरुपेण पेषयेद्याममात्रकम् ।
आतपे चाथ संशोष्य श्लक्ष्णचूर्णञ्च कारयेत् ॥३०॥
शरावसम्पुटस्थञ्च पुटेद्वन्योपलैर्भिषक् ।
एवं स्वल्पपुटैरेव रजतं मृतिमाप्नुयात् ॥३१॥
द्वितीयादिपुटेष्वत्र रसतन्त्रविचक्षणः ।
माक्षिकं न प्रयुञ्जीत रहस्यमिति कीर्तितम् ॥३२॥

पञ्चमो मारणप्रकारः ।

शुद्धानि तारपत्राणि समादाय भिषग्वरः ।
विशोधितं हिङ्गुलं तु क्षिपेत्तारमितं भिषक् ॥३३॥
तथैव सुमृतं ताप्यं क्षिप्त्वा संपेषयेद् बुधः ।
निम्बूकस्वरसं दत्त्वा शुष्कचूर्णञ्च कारयेत् ॥३४॥
सम्पुटस्थं ततः कृत्वा पुटयेत्तु प्रयत्नतः ।
एवं स्वल्पपुटैरेव रजतं मृतिमाप्नुयात् ॥३५॥
द्वितीयादिपुटेष्वत्र रसतन्त्रविचक्षणः ।
माक्षिकं न प्रयुञ्जीत रहस्यमिह कीर्तितम् ॥३६॥

षष्ठो मारणप्रकारः ।

समाहरेत्सुविमलतारपत्रकणोच्चयम् ।
निम्बूकद्रवसंशुद्धं निरम्लीकृतहिङ्गुलम् ॥३७॥
ताराद्द्विगुणितं दत्त्वा पिष्ट्वा चूर्णञ्च कारयेत् ।
ऊर्ध्वपातनयन्त्रेण पचेत्पाकविधानवित् ॥३८॥
भूयोभूयः पचेद्यावद्रजतं मृतिमाप्नुयात् ।
अधःस्थं सुमृतं तारं कृष्णाभमतिसुन्दरम् ॥३९॥
आहरेदूर्ध्वसंस्थन्तु रसेशञ्चातिनिर्मलम् ।
एवं मृतं चन्द्रलोहं तत्तद्योगेषु योजयेत् ॥४०॥

तृतीयः प्रकारस्तालकक्षेपरहितः प्रायश्चतुर्दशपुटैः साध्यश्चेति ॥२६-२८॥
चतुर्थः प्रकारो माक्षिकभस्मयोगी क्षुधावर्धकः उदरविकारहरश्च विशेषात् ॥
पञ्चमः प्रकारः माक्षिकभस्महिङ्गुलयोगजातसिद्धिः सुगमसाध्यः प्राय. ॥
षष्ठः प्रकारः—हिङ्गुलसाध्यः प्रयत्नैक्येऽपि कार्यद्वयसाधकः सरल-प्रायश्च ॥३७-४०॥

सप्तमो मारणप्रकारः ।

राजतानि विशुद्धानि पत्राणीह समाहरेत् ।
रसेश्वरं समं दत्त्वा पिष्टिकां कारयेत्ततः ॥४१॥
गौरीपाषाणचूर्णञ्च समं निक्षिप्य मर्दयेत् ।
आतपे चाथ संशोष्य शुष्कचूर्णञ्च कारयेत् ॥४२॥
सम्पुटस्थं ततः कृत्वा पुटेद् गजपुटेन तु ।
पुटमेकं प्रदायाथ खल्वे सञ्चूर्णयेत्ततः ॥४३॥
हिङ्गुलं विमलञ्चैव तत्तुल्यं मेलयेद् बुधः ।
एवं पुटद्वयं दद्याद्रसतन्त्रविचक्षणः ॥४४॥
एवं पुटत्रयेणैव रजतं मृतिमाप्नुयात् ।
एवं मृतन्तु रजतं वीतशङ्कः प्रयोजयेत् ॥४५॥

मृतरजतस्य गुणाः ।

तारं मृतं सुशिशिरं तुवरञ्च रुच्यं
स्निग्धं विपाकमधुरं परमञ्च मेध्यम् ।
वर्ण्यं परं पवनहारि कफप्रणाशि
त्वम्लं सरं परमलेखनकञ्च वृष्यम् ॥४६॥
सुमृतं चन्द्रलोहन्तु वयःस्थापनमुत्तमम् ।
बल्यं परं दाहहरं स्मृतिकान्तिविवर्द्धनम् ॥४७॥
तृष्णाशोषप्रशमनं परमञ्च रसायनम् ।
भ्रमहारि विशेषेण गर्भाशयविशोधनम् ॥४८॥
पित्तामयप्रशमनं प्रमेहाद्यामयापहम् ।
आयुष्यञ्च विशेषेण विष्टम्भाजीर्णनाशनम् ॥४९॥
मदात्ययात्ययकरं वह्निमान्द्यप्रणाशनम् ।
विषघ्नं ज्वरहञ्चैव प्लीहोदरविनाशनम् ॥५०॥
क्षयक्षयकरं नाडीशूलापस्मृतिनुत् परम् ।
हृद्यं खलु विशेषेण जाठरामयनाशनम् ॥५१॥

विशिष्टा गुणाः ।

मृतन्तु तारं शमयेन्नितान्तं प्रकोष्ठगं वातमतिप्रवृद्धम् ।

सप्तमः प्रकारः—शङ्खविषयोगसाध्यः निर्माणसुगमश्चेति। अत्र च भस्मावस्थायां शङ्खविषं नावशिष्यते इति समवधानीयम् ॥४१-४५॥

अथ मृतरजतगुणाः—सामान्यतः प्राचीनतन्त्रेष्वपि निर्दिष्टप्रायाः, विस्तरेणाचार्यैरुदाहृताः ॥४६-५१॥

शाखाश्रयं पित्तमलं विचूर्ण्य जत्रूर्ध्वसंस्थञ्च कफं मलाख्यम् ॥५२॥
प्रक्षीणबुद्धिस्मृतिसाहसानां शिरोभ्रमेणातिविमोहितानाम् ।
अध्यापनादौ सुचिरं रतानां यूनां शिशूनाञ्च परं प्रशस्तम् ॥५३॥

मृतरजतस्य मात्रानिरूपणम् ।

रक्तिकायास्तुरीयांशाद्रक्तिकैकमितं परम् ।
मृतं तारं नियुञ्जीत बलकालाद्यपेक्षया ॥५४॥

अस्य आमयिकः प्रयोगः ।

यवानिकादेवपुष्पचूर्णेन रजतं मृतम् ।
शीलितं नाशयत्याशु कोष्ठवातं चिरोत्थितम् ॥५५॥
एलाचूर्णयुतं तारं सततं परिशीलितम् ।
अजीर्णरोगजनितं हृदयस्पन्दनं हरेत् ॥५६॥
एलासितोपलाचूर्णयुतं तारं तु शीलितम् ।
सूर्यावर्तं च तथा निहन्त्यर्धावभेदकम् ॥५७॥
रससिन्दूरलोहाढ्यं सशिलाजतुताप्यकम् ।
शीलितं चन्द्रलोहं तु वरावारा विशेषतः ॥५८॥
वामडिम्बाशयोद्भूततीव्रवेदनयान्वितम् ।
गर्भाशयच्युतिं घोरां नाशयत्यविलम्बितम् ॥५९॥
टङ्काभ्ररससिन्दूरसंयुक्तं चन्द्रलोहकम् ।
युक्तं बलावराक्वाथैस्तीव्रोरुव्यथयान्वितम् ॥६०॥
वामडिम्बाशयोद्भूतव्यथया ह्युपलक्षितम् ।
विनिहन्ति विशेषेण त्वण्डाधारभवामयम् ॥६१॥
रससिन्दूरसौभाग्यसंयुतं चन्द्रलोहकम् ।
शीलितं रजनीवारा सप्ताहहितयोन्मितम् ॥६२॥
क्षतान्वितं चातिमात्रं पूतिस्रावसमायुतम् ।
गर्भाशयस्य सङ्कोचं नाशयत्यविकल्पतः ॥६३॥
तारं सलोहं माक्षीकरससिन्दूरसंयुतम् ।
यवानीचित्रकक्वाथयुतं तु परिशीलितम् ॥६४॥

विशेषगुणास्तु पूर्वाचार्यैरनुक्ता अपि अनुभूतचराः शिष्यमतिवैशद्याय प्रकटीक्रियन्ते मृतन्तु तारमिति । निगदव्याख्यातमन्यत् ॥५२-५३॥

मात्रानिरूपणा बलकालापेक्षया योग्यमेव ॥५४॥

अथास्य रोगयोग्य प्रयोगः—वरावारा त्रिफलाजलेन, डिम्बाशयो बीजाधारः "Ovary" इत्याङ्ग्लभाषायाम्, तस्मिन्नुद्भूता या तीव्रा वेदना तया

गृध्रसीं चैव विश्वाचीं तथैव त्रिकवेदनाम् ।
विविधस्थानसंभूतं नाडीशूलं व्यपोहति ॥६५॥
पर्पटोशीरधान्यादिपित्तघ्नक्वाथसंयुतम् ।
चन्द्रलोहं निहन्त्याशु पित्तं शाखासमाश्रितम् ॥६६॥
राजावर्तसमायुक्तं रजतं परिशीलितम् ।
मदात्ययाल्ययकरं समाख्यातं विशेषतः ॥६७॥
चोपचीनीसमायुक्तं रजतं परिशीलितम् ।
आध्मानं चिरसंजातं नाशयत्याशु निश्चितम् ॥६८॥
सितोपलायुतं रौप्यं यत्नतः परिशीलितम् ।
सत्वरं नाशयत्येव दाहं शाखाश्रितं ध्रुवम् ॥६९॥
सिताघृतैलासंयुक्तं रजतन्तु निषेवितम् ।
उन्मादं नाशयत्येव ह्यचिरादेव दारुणम् ॥७०॥
त्रिजातकसमायुक्तं रजतं परिशीलितम् ।
प्रमेहादिकरोगांश्च द्रुतमेव निवारयेत् ॥७१॥
क्षीरकाकोलिकोपेतं चोपचीनीसमन्वितम् ।
रससिन्दूरसंयुक्तं रजतं परिशीलितम् ॥७२॥
गर्भाशयाज्जायमानं सशूलं सस्तुमोद्गमम् ।
श्लैष्मिकन्तु कलास्रावं द्रुतमेव विनाशयेत् ॥७३॥

स्थिरात्मगुप्ताशतमूलिकाभिर्निषेवितं वै खलु चन्द्रलोहम् ।
मासद्वयेनैव निहन्ति कार्श्यं वल्यञ्च वृष्यञ्च परं प्रदिष्टम् ॥७४॥
कृमिघ्नभल्लातकविश्वरक्तैर्यत्नेन तारं परिशीलितन्तु ।
मासैकयोगेन हि सुन्दरीणां सौन्दर्यवृद्धिं जनयेन्नितान्तम् ॥७५॥

युक्तां गर्भाशयस्य स्वस्थानात् च्युतिं हरतीति । अत्र वामडिम्बाशय इत्युपलक्षणं तेन दक्षिणडिम्बाशयोद्भूतवेदनान्वितां गर्भाशयच्युतिमपि नाशयति इति ज्ञेयम् । अण्डाधारभवामयः—"रमणातिशयाच्छैत्यादभिघाताद्विषादपि । अण्डाधारगदः कृच्छ्रो जायते चाहिताशनात् ॥ उदरोरुव्यथा तीव्रा मूत्रे स्यादल्पत्वरक्तते । ज्वरारोचकहृल्लासा अरतिर्बलसंक्षयः ॥ धमनी वेगिनी क्षुद्रा जिह्वा रक्तोत्पला तथा । अण्डाधारगदस्यैताः प्रोक्ता आकृतयो बुधैः" इत्युक्तः ॥ गर्भाशयाज्जायमानमित्यादिना तु "Membranous Dysmenorrhœa" इत्याख्यस्य रोगस्योपवर्णनं तं विनाशयत्ययं योगः । कृमिघ्नो विडङ्गः । रक्तं कुङ्कुमम् ॥५५–७५॥

अथ सोरकाम्लीयरजतस्य निर्माणप्रकारः ।

सूचीवेध्यानि पत्राणि रजतस्य समाहरेत् ।
कर्तर्या कर्तयेच्चाथ कणान् सूक्ष्मांस्तु राजतान् ॥७६॥
निधाय काचचषके विशुद्धं सोरकाम्लकम् ।
विन्दुशो निक्षिपेत्तारं यावन्न द्रुतिमाप्नुयात् ॥७७॥
सोरकद्रावसम्पाते धूमोऽत्युग्रोऽभिजायते ।
अतो द्रावं क्षिपन् वक्त्रमन्यतः परिवर्तयेत् ॥७८॥
सताम्रं चेद्भवेत्तारं तदा नीलो भवेद् द्रवः ।
निर्मलं चेद्भवेत्तारं द्रवः शुक्लस्तदा भवेत् ॥७९॥
द्रवेऽस्मिन्नथ वै तीक्ष्णं लवणद्रावकं क्षिपेत् ।
यावत्तत्र किलाटाभं तारं विनिपतत्यधः ॥८०॥
निवृत्ते तु किलाटाभवस्तुपाते तु निश्चितम् ।
न क्षिपेल्लवणद्रावं रसायनविधानवित् ॥८१॥
अल्पकालावसानेऽथ जलीयांशं तदूर्ध्वगम् ।
निपातयेत्प्रयत्नेन किलाटाभपदार्थतः ॥८२॥
पीताश्वघ्नसुमाकारप्रणाल्यां सारकं दलम् ।
विन्यस्य चेमं रजतं क्षालयेद्विमलाम्भसा ॥८३॥
जलं सारकपत्रान्तर्निर्यातं तलपात्रगम् ।
परीक्षेत प्रयत्नेन रसायनविधानवित् ॥८४॥
आदायैतज्जलं प्राज्ञः शरावे स्वल्पमात्रकम् ।
नृसारवाष्पसंयुक्तं द्रवं किञ्चिद्विनिक्षिपेत् ॥८५॥
नृसारवाष्पसंयुक्तद्रवक्षेपेण चेदिदम् ।
जलं नीलत्वमायाति तदा धौतं तु रौप्यकम् ॥८६॥
सताम्रमधुनापीति व्यवस्येद्रसकोविदः ।
तारं प्रक्षालयेद्यावन्न जहाति हि नीलताम् ॥८७॥
ताम्रांशरहितं रौप्यं काचपात्रे ततो न्यसेत् ।
जलेनाप्लाव्य स्वल्पं तु लवणद्रावकं क्षिपेत् ॥८८॥
यशदस्य च पत्राणि स्वल्पानीह क्षिपेत्तथा ।
अल्पकालावसानेऽथ रौप्यं ताम्रादिवर्जितम् ॥८९॥

अथ नवीनपरिभाषितः सोरकाम्लीयरजतनिर्माणप्रकारः—पीताश्वघ्नसुमं पीतवर्णकरवीरपुष्पम्, तदाकारायां काचप्रणाल्याम्, 'Funnel' इत्याङ्ग्लभाषाप्रसिद्धायाम्। सारक दलं "Filter Paper" इति प्रसिद्धम्। सूचीवेध्यानीत्यारभ्य

भस्मप्रभं काचपात्रतलगं जायते ध्रुवम् ।
ततः खलु व्यतिक्रान्ते सप्ताहे वा दिनाष्टके ॥९०॥
रौप्यं रक्षन् जलीयांशं प्रयत्नेनापसारयेत् ।
ततः सारकपत्रेण रौप्यं भस्मप्रभं पुनः ॥९१॥
वार्षिकेणाम्भसा विज्ञः क्षालयेदविलम्बितम् ।
ततः सारकपत्रान्तर्निर्यातं सलिलं पुनः ॥९२॥
प्रयत्नेन परीक्षेत रसायनविशारदः ।
आदायैतज्जलं स्वल्पं काचपात्रे तु विन्यसेत् ॥९३॥
नृसारबाष्पसंयुक्तं जलं किञ्चिद्विनिक्षिपेत् ।
नृसारबाष्पसंयुक्तजलक्षेपेण चेदिदम् ॥९४॥
जलं शुक्लत्वमायाति तदा तारन्तु निश्चितम् ।
सद्भावमधुनापीति व्यवस्येद्रसकोविदः ॥९५॥
तावत्प्रक्षालयेद्यावत्तन्न त्यजति शुक्लताम् ।
द्रावकांशोज्झितं तारं ततः काचशरावके ॥९६॥
न्यस्याथ सोरकद्रावं दत्त्वा संद्रावयेत्सुधीः ।
ततः सुराप्रदीपाग्नौ पचेद्यत्नेन कोविदः ॥९७॥
यथा नोत्प्लवते तोयं तथा संशोषयेद् द्रवम् ।
क्षीणे जले भवेच्छुक्लं शलाकाकारचूर्णकम् ॥९८॥
सोरकाम्लीयरजतमेतदुक्तं भिषग्वरैः ।
ततो निधापयेन्नीलकाचकुप्यां विधानवित् ॥९९॥
इदं विनिहितं शुक्लकाचकुप्यामिनांशुभिः ।
स्पृष्टं कृष्णत्वमायाति तस्मात्संरक्षयेत्तथा ॥१००॥

प्रसङ्गान्नवसादरबाष्पद्रवस्य निर्माणप्रकारः ।

सुदग्धं चूर्णपाषाणं वारा निर्वापितं भृशम् ।
द्विभागिकं शुष्कचूर्णं, भागिकं नवसादरम् ॥१०१॥
चूर्णीकृतं प्रयत्नेन काचकुप्यां तु विन्यसेत् ।
त्रिपादिकायां विन्यस्य कूपीं, कूपीमुखे ततः ॥१०२॥
मेलयेत्काचनलिकामुखमेकं प्रयत्नतः ।

तन्न त्यजति शुक्लतामिति पर्यन्तं रजतशोधनम् । ततः प्रक्षालनादिशुद्धस्य सोरकद्रावकक्षेपपूर्वकं सुराप्रदीपे पाकः, ततः शलाकाकारचूर्णतेति क्रमोऽनुसन्धेयः । इनांशुभिः सूर्यकिरणैः । व्याख्यासमानमन्यत् ॥७६–१००॥

१ प्रसङ्गान्नवसारबाष्पद्रवस्य निर्माणप्रकारः—वारा जलेन । स्पष्टप्रायमन्यत् ।

अपरं च मुखं त्वस्या विन्यसेज्जलपूरिते ॥१०३॥
अन्यस्मिन्काचकूपे तु तोयमज्जनपूर्वकम् ।
ततस्त्रिपादिकाधस्तात्सुरादीपं प्रदीपयेत् ॥१०४॥
रसायनविधानज्ञस्तावन्मन्दाग्निना पचेत् ।
नृसारवाष्पं द्रवतां याति यावज्जले भृशम् ॥१०५॥
संजायते स्वच्छजलप्रकाशो द्रवः सुतीव्रः खलु चातिरम्यः ।
समीरितोऽयं भिषजां वरेण्यैर्नृसारवाष्पद्रवनामधेयः ॥१०६॥

नवसादरवाष्पद्रवस्य गुणाः ।

नवसादरवाष्पोत्थद्रवोऽयमतिशोभनः ।
वरटीवृश्चिकादीनां विशेषाद्विषनाशनः ॥१०७॥
सम्मेल्य प्रचुरं तोयं रसायनपरीक्षणे ।
द्रवोऽयं विनियोक्तव्यो रसायनविशारदैः ॥१०८॥

अस्य आमयिकः प्रयोगः ।

सजलोऽयं द्रवो युक्त्या भृशमाघ्रापितो द्रुतम् ।
विनाशयति मूर्च्छायं तत्तदुत्थानसम्भवम् ॥१०९॥

अथ सोरकाम्लीयरजतस्य गुणाः ।

सोरकाम्लीयरजतं द्रवशक्तिप्रभेदतः ।
अभिष्यन्दहरं कामं पोथक्यादिविकारनुत् ॥११०॥
विसर्पस्फोटशमनं व्रणमेहक्षतापहम् ।
तथैव च समाख्यातं श्वेतप्रदरनाशनम् ॥१११॥

सोरकाम्लीयरजतद्रवस्य निर्माणप्रकारः ।

परिस्रुतं तु सलिलं हरेत्सार्द्धपलद्वयम् ।
विमले काचचषके विन्यसेद्रसकोविदः ॥११२॥

काचनलिकामुखमन्यस्यां जलपूर्णायां काचकूप्या जले निमग्नं विधेयम् । एव मति वाष्पं जललीनमेव भवतीति । सुतीव्रः आघ्राणादिना परिचेयः । अतिरम्य स्वच्छत्वात् ॥१०१–१०६॥

अथैतस्य गुणाः प्रयोगप्रकारश्च व्याख्यासमपाठः । मूर्च्छायमित्युपलक्षणम् । कफजातां शिरोव्यथामपीति सोऽयममोनियाद्रव (Liq Ammonia Fort) इति नाम्ना नवीनैर्व्यवहृत इति ॥१०७–१०९॥

सोरकाम्लीयरजतगुणाः—बाह्यप्रयोगतः पोथक्यादिविकारनुत् । पोथकी—"स्राविण्यः कण्डुरा गुर्व्यो रक्तसर्षपसन्निभाः । रुजावत्यश्च पिडकाः पोथक्य इति कीर्तिताः" इत्युक्तलक्षणो नेत्रवर्त्मरोगविशेषः, लोके प्रायः "कुकरे" शब्दवाच्य., "Trachoma" इत्याङ्ग्लभाषायाम् ॥११०–१११॥

सोरकाम्लीयरजतद्रवस्य त्रिविधस्य निर्माणप्रकारः त्रिविधरोगप्रयोगयोग्य

सोरकाम्लीयरजतं गुञ्जाष्टकमितं क्षिपेत् ।
द्रवीभूतं ततो नीलकाचकुप्यां निधापयेत् ॥११३॥
सोरकाम्लीयरजतद्रवोऽयं भाषितो बुधैः ।
विशेषतो ह्यभिष्यन्दपोथक्याद्यक्षिरोगनुत् ॥११४॥

अस्य आमयिकः प्रयोगः ।

सोरकाम्लीयरजतद्रवस्यास्य निरन्तरम् ।
अक्ष्णोः सुविस्फारितयोर्नरस्योत्तानशायिनः ॥११५॥
बिन्दुक्षेपकयन्त्रेण द्वित्रिर्बिन्दुप्रयोगतः ।
पोथक्यभिष्यन्दभवा बाधा शीघ्रं प्रशाम्यति ॥११६॥

द्वितीयः सोरकाम्लीयरजतद्रवः ।

सोरकाम्लीयरजतं द्वात्रिंशद्गुञ्जसंमितम् ।
सार्द्धद्वितोलकमिते परिस्रुतजले क्षिपेत् ॥११७॥
विज्ञाय विद्रुतं नीलकाचकुप्यां न्यसेद् द्रुतम् ।
सोरकाम्लीयरजतद्रवोऽयं स्फोटकादिनुत् ॥११८॥

अस्य प्रयोगविधिः ।

विसर्पशोथं परितो द्रवोऽयं खलु लेपितः ।
विनिहन्त्यचिरादेव विसर्पस्य विसर्पिताम् ॥११९॥
अनेनैव प्रकारेण विस्फोटश्वयथौ भृशम् ।
लिप्तो द्रवोऽयं हन्त्याशु विस्फोटस्य विसर्पिताम् ॥१२०॥

तृतीयः सोरकाम्लीयरजतद्रवः ।

परिस्रुते तु सलिले पञ्चतोलकसम्मिते ।
सोरकाम्लीयरजतं गुञ्जैकं वा तदर्धकम् ॥१२१॥
क्षिप्त्वाथ विद्रुतं नीलकाचकुप्यां तु विन्यसेत् ।
सोरकाम्लीयरजतद्रवोऽयं प्रदरादिनुत् ॥१२२॥

अस्य प्रयोगविधिः ।

उत्तराद्ययवस्त्युक्तरीत्या युक्तस्त्वयं द्रवः ।
निहन्ति व्रणमेहञ्च श्वेतप्रदरजां रुजम् ॥१२३॥

इति रजतविज्ञानीयो नाम षोडशस्तरङ्गः ।

---

प्रकारभेदभिन्नमात्रश्चेति । बिन्दुक्षेपकयन्त्रं "Dropper" इति । नीलकाचकुप्यान्तु सर्वस्यापि निधानं भेषजरक्षार्थमेवेति ॥११९-१२३॥

## अथ ताम्रविज्ञानीयः सप्तदशस्तरङ्गः ।

### ताम्रस्य नामानि ।

ताम्रं शुल्वं रक्तकं म्लेच्छवक्त्रं नेपालीयं त्र्यम्बकं सूर्यलोहम् ।
त्वाष्ट्रं त्वर्कं सूर्यपर्यायसंज्ञं द्विष्टं ह्यग्र्यं त्वम्बकं कीर्तितं तत् ॥१॥
उदुम्बरञ्चारविन्दं सूर्याङ्गं लोहितायसम् ।
रविप्रियं भास्वरं च ताम्रकं च प्रकीर्तितम् ॥२॥

### ग्राह्यताम्रस्य स्वरूपम् ।

घनघातसहं सुचिक्कणं विमलञ्चाथ जपासुमप्रभम् ।
मृदु चैव सदाकरोद्भवं रविलोहं खलु कीर्तितं वरम् ॥३॥

### प्रकारान्तरेण जात्यताम्रस्य स्वरूपम् ।

स्निग्धं मृदु घनं स्वच्छं जपाकुसुमसंप्रभम् ।
लोहनागादिरहितं जात्यं ताम्रं प्रकीर्तितम् ॥४॥

### त्याज्यताम्रस्य स्वरूपम् ।

सदलं पाण्डुरञ्चैव कठिनं लघु भङ्गुरम् ।
समलं त्वरविन्दन्तु वर्जयेद्रसकर्मणि ॥५॥
घनघातासहं कृष्णं श्वेतं लोहादिसङ्गतम् ।
अतिस्तब्धञ्च रूक्षञ्च ताम्रं त्याज्यं निगद्यते ॥६॥

### ताम्रस्य द्वैविध्यम् ।

नेपालं म्लेच्छकं चेति ताम्रं द्विविधमुच्यते ।
नेपालं जात्यमाख्यातं म्लेच्छकं त्ववरं स्मृतम् ॥७॥

### नेपालस्य लक्षणम् ।

घनघातसहं स्निग्धं कोमलं गुरु लोहितम् ।
निर्मलं गुणकृच्चैव नेपालं ताम्रमुच्यते ॥८॥

ताम्रनामानि यावदुपलब्धग्रन्थव्यवहृतानि ॥१-२॥

ग्राह्यताम्रं घनघातसहादिगुणं सदाकरोद्भवं इति योग्यतानिर्णायकं वचनम्, सदाकरजातं हि उक्तगुणं भवतीति। प्रकारान्तरेण निर्देशः स्फुटार्थः। स्वच्छं निर्मलम् ॥३-४॥

त्याज्यताम्रस्वरूपं निगदव्याख्यातम् ॥ उक्तञ्च—"कृष्णं रूक्षमतिस्तब्धं श्वेतं चापि घनासहम्। लोहनागयुतं शुल्वं म्लेच्छं दुष्टं मृतौ त्यजेत्" इति। अत्र च व्यस्तैः समस्तैरपि लक्षणैर्भवति त्याज्यतेत्यवधेयम् ॥५-६॥

एवञ्च ताम्रं नेपालं म्लेच्छकमिति द्विविधं प्राचीनैः देशभेदोत्पत्तिगुणरूपविशेषादुक्तम् ॥७॥

म्लेच्छकस्य स्वरूपम्।

कृष्णच्छायं सुकठिनं सितञ्चारुणकं तथा।
सुधौतमपि कृष्णं स्यान्म्लेच्छकं ताम्रमुच्यते ॥९॥

ताम्रशोधनस्य प्रयोजनम्।

ताम्रं निहन्ति विमलां खलु कायकान्ति
नूनं नितान्तमचिराज्जनयेच्च वान्तिम्।
भ्रान्ति तथा जनयतीह हि नैति शान्ति
चेत्ताम्रकं त्वविमलं खलु मारितं स्यात् ॥१०॥
शुल्वं विवर्द्धयति सर्वजगात्रतापं
क्षिप्रं नयत्यपि च शोपमशेपधातून्।
कामं विरेचयति वै जनयेच्च मूर्च्छां
संशुद्धिहीनमिह चेत्खलु मारितं स्यात् ॥११॥

ताम्रस्य प्रथमः शोधनप्रकारः।

पत्रीकृतन्तु तरणिं ज्वलने प्रतप्तं
चाङ्गेरिकादलरसे स्नपयेद्विधिज्ञः।
इत्थं विशोधितमलं खलु सूर्यलोहं
संयोजयेन्मृतिविधौ भिषजां वरेण्यः ॥१२॥

द्वितीयः शोधनप्रकारः।

रविलोहदलं पिठरीनिहितं खलु शीतसहस्वरसे तु दिनम्।
परिपाचितमत्यचिरान्नियतं विमलत्वमुपैत्यतिवेलमिदम् ॥१३॥

नेपालम्लेच्छकयोः यथाक्रमं लक्षणञ्च व्याख्यातप्रायपाठमिति ॥८-९॥

ताम्रशोधनप्रयोजनम्—विमलां शरीरशोभां निहन्ति रक्तविकारहेतुत्वात्। अचिरात् शीघ्रम्, नितान्तं अत्यर्थम्, नूनं अव्यभिचारेण अवश्यमित्यर्थः। नैति शान्ति अशुद्धताम्रभक्षक इति शेषः, मनस्तापकत्वादित्यर्थः। उक्तञ्च—"न विषं विषमित्याहुस्ताम्रन्तु विषमुच्यते। एको दोषो विषे ताम्रे त्वष्टौ दोषाः प्रकीर्तिताः। भ्रमो मूर्च्छा विदाहश्च स्वेदक्लेदनवान्तयः। अरुचिश्चित्तसन्ताप एते दोषा विषोपमाः" इति। "तैलतक्रादिशुद्धस्य तद्दोषविनिवृत्तये। शुल्वस्य शोधनं प्राज्ञैर्विशेषात्समुदाहृतम्" इति च। स्पष्टमन्यत् ॥१०-११॥

प्रथमः शोधनप्रकारः—तरणिं ताम्रम्, चाङ्गेरिकादलरसे शोधनम् "ताम्रमम्लेन शुद्ध्यतीति" प्राचीनसंवादात् ॥१२॥

द्वितीयः शोधनप्रकारः—पिठरी स्थालिका, शीतसहो नीलसिन्दुवारः, "नीलपुष्पः शीतसहो निर्गुण्डी नीलसिन्दुका" इति धन्वन्तरिः। अतिवेलं अत्यर्थम् ॥१३॥

तृतीयः शोधनप्रकारः।

नेपालशुल्वस्य दलानि सूक्ष्माण्यादाय सिन्धूत्थसमन्वितानि।
संस्वेदयेन्मन्दिरवारिपूरे त्वनुत्तमां शुद्धिमिहोपयाति ॥१४॥

चतुर्थ. शोधनप्रकारः।

सिन्धूत्थवज्र्यर्कपयःप्रलिप्तान्यादाय पत्राणि रविप्रियस्य।
प्रताप्य वह्नावथ सिन्दुवारद्रवे निषिञ्चेत् खलु सप्तवारम् ॥१५॥
अनेन तु विधानेन विशुद्धं लोहितायसम्।
मारणाय प्रयुञ्जीत वीतशङ्को भिषग्वरः ॥१६॥

पञ्चमः शोधनप्रकारः।

वस्वंशसिन्धूत्थसमन्वितानि नेपालशुल्वस्य दलानि कामम्।
गोमूत्रयुक्तानि पचेद् द्वियामं रविप्रियं शुद्ध्यति नात्र शङ्का ॥१७॥

षष्ठ' शोधनप्रकारः।

क्षाराम्ललिप्तानि तु ताम्रपत्राण्यग्नौ प्रताप्य क्षययेत्तु तक्रे।
क्वाथे कुलत्थप्रभवे च ताम्रं प्रयाति शुद्धिं खलु निर्विशेषाम् ॥१८॥

ताम्रस्य प्रथमो मारणप्रकारः।

तुल्यांशसंशोधितहिङ्गुलेन सलुङ्गनीरेण रवेर्दलानाम्।
पिष्टिं विधायाथ विशोष्य घर्मे सुश्लक्ष्णचूर्णञ्च ततो विदध्यात् ॥१९॥
ऊर्ध्वपातनयन्त्रे च विधानज्ञस्ततः पचेत्।
निर्विशेषविशुद्धञ्च रसराजं समाहरेत् ॥२०॥
एवं वारत्रयं कुर्याद्वारद्वयमथापि वा।
रविचूर्णसमञ्चाथ गन्धं दत्त्वा विमर्दयेत् ॥२१॥
त्रिवारं पुटयेदेवं वारद्वयमथापि वा।
इत्थं मृतं ताम्रकं स्यादमृतीकरणोचितम् ॥२२॥

द्वितीयो मारणप्रकारः।

पादांशसंशोधितपारदेन सुसूक्ष्मपत्राणि रवेर्विमर्द्य।
चाङ्गेरिकापत्ररसप्रपिष्टतुल्यांशगन्धेन च पेषयेद्वै ॥२३॥
विशोष्य घर्मे खलु सम्पुटस्थं पुटेत् त्रिवारं भिषगप्रमत्तः।
इत्थं मृतं ताम्रकमामयज्ञः प्रयोजयेत्खल्वमृतक्रियायै ॥२४॥

तृतीये शोधनप्रकारे—मन्दिरवारि काञ्जिकम्। चतुर्थे—वज्री सेहुण्डः॥ पञ्चमे—वस्वंश अष्टमांशः ॥१४-१८॥

अथ मारणप्रकारः प्रथमः—द्विवारं त्रिवारं वेति भस्मयोग्यतापेक्षया ज्ञेयम्। अमृतीकरणोचितं न तु भक्षणयोग्यम्, अमृतीकरणमनुपदं वक्ष्यते॥

ताम्रापेक्षया चतुर्थांशेन शुद्धसूतेन ताम्रदलानां प्राङ्मर्दनं ततश्चाङ्गेरीरस-पिष्टगन्धकेन पेषणम्, ततः संशोष्य पुटनम्, एवं त्रिधा। ततोऽमृतीकरणयोग्यतेति ॥२३-२४॥

तृतीयो मारणप्रकारः ।

विशुद्धशुल्वस्य दलानि निम्बुद्रवप्रपिष्टेश्वरगन्धलेपात् ।
विशोष्य घर्मे पुटितानि नूनं वारत्रयेणेह मृतिं प्रयान्ति ॥२५॥

चतुर्थो मारणप्रकारः ।

ताम्रं पत्रीकृतं शुद्धं भिषग् दशपलोन्मितम् ।
ताम्रद्विगुणितञ्चैव गन्धं दत्त्वा विमर्दयेत् ॥२६॥
सम्पुटस्थं ततः कृत्वा मृदा सन्धिं निरोधयेत् ।
अहोरात्रं पचेद्यत्नाद् वालुकायन्त्रगं भिषक् ॥२७॥
स्वाङ्गशीतन्तु विज्ञाय सम्पुटं त्ववतारयेत् ।
ताम्रोन्मितं बलिं दत्त्वा शुल्वं खल्वेऽथ पेषयेत् ॥२८॥
इत्थं त्रिवारं पुटयेत्तुल्यं गन्धं विनिक्षिपन् ।
एवं मृतं ताम्रकं स्यादञ्जनादौ गुणावहम् ॥२९॥

पञ्चमो मारणप्रकारः ।

नेपालशुल्वस्य दलानि शुद्धान्यादाय पूर्वं भिषजां वरेण्यः ।
तुल्यांशगन्धेशजकज्जलञ्च पादांशिकीं रोगशिलाञ्च शुद्धाम् ॥३०॥
दत्त्वा तदर्धं हरितालकञ्च कन्याद्रवेणेह विमर्द्य वैद्यः ।
विशोष्य घर्मे पुटयेद्विधिज्ञः प्रयाति ताम्रं मृतिमभ्रपूर्वाम् ॥३१॥

षष्ठो मारणप्रकारः ।

सूचीसुवेध्यं खलु ताम्रपत्रं तुल्यांशगन्धेशजकज्जलञ्च ।
समं समादाय भिषग्वरेण्यः सम्पेषयेद्द्वै स्वरसैः कुमार्याः ॥३२॥

तृतीयः प्रकारो निम्बूद्रवपेषितया समपारदगन्धककृतकज्जलया त्रिधा पुटनात्साध्य एवेति ॥२५॥

चतुर्थो मारणप्रकारः केवलगन्धसाधितो वालुकायन्त्रपाकानन्तरं त्रिधा पुटितोऽञ्जनाद्युपयोगी ॥२६–२९॥

पञ्चमः प्रकारः—पारदगन्धकहरितालशिलाभिः साधनीयः सत्वरसिद्धिश्चेति । तुल्यांशौ समानभागिकौ यौ गन्धेशौ गन्धकपारदौ ताभ्यां जातं निष्पादितमिति यावत् यत्कज्जलं कज्जलिका तदित्यर्थः । तच्चानुक्तमानत्वेन ताम्रपत्रसमं ग्राह्यम् ॥३०–३१॥

षष्ठः प्रकारः—कज्जलीलेपसाध्यो लवणयन्त्रपाकी प्राचीनतन्त्रसम्मतश्चेति उक्तं हि—"ताम्रपादांशतः सूतं ताम्रतुल्यञ्च गन्धकम् । मर्दयेद् याम्युग्मं च यावत्कज्जलिका भवेत् ॥ तां तु कन्यारसैः पिष्ट्वा ताम्रपत्राणि लेपयेत् । संशुष्काणि ततस्तानि शेषकज्जलिकान्तरम् ॥ निक्षिप्य हण्डिकामध्ये शरावेण निरोधयेत् । सन्धिरोधं द्वयोः कुर्यादस्तुमस्तविलेपनम् ॥ हण्डिकां पटुनाऽऽपूर्य भस्मना वा

विशोष्य घर्मेऽथ शरावसंस्थं पुटेद्विधिज्ञो लवणाख्ययन्त्रे।
इत्थं दिनार्द्धं परिपाचनेन ह्यनुत्तमां याति मृतिन्तु ताम्रम् ॥३३॥

अमृतीकरणस्य प्रयोजनम्।

मृतमप्यरविन्दन्तु ह्यमृतीकरणोज्झितम्।
सेवितं दर्शयत्यष्टौ दोषानाशु विषोपमान् ॥३४॥
तस्मान्मृतस्य ताम्रस्य दोषाष्टकनिवृत्तये।
अमृतीकरणं यत्नाद् विदध्याद्भिषजाग्रणीः ॥३५॥

दोषाष्टकनिरूपणम्।

वान्तिर्भ्रान्तिश्चित्तसन्तापशोषौ गाढोत्क्लेदश्चारुचिर्दाहमोहौ।
इत्यष्टौ वै सूर्यलोहस्य दोषाः पूर्वाचार्यैः क्लेशदाः सम्प्रदिष्टाः ॥३६॥

प्रथमोऽमृतीकरणप्रकारः।

सुमृतं ताम्रचूर्णन्तु तदर्धं गन्धकं तथा।
पञ्चामृतेन सम्पेष्य विधानज्ञो भिषग्वरः ॥३७॥
शरावसम्पुटे न्यस्य ताम्रं विहितचक्रिकम्।
त्रिवारं पुटयेदेवं रसतन्त्रविचक्षणः ॥३८॥
श्लक्ष्णखल्वेऽथ सम्पेष्य काचकुप्यां तु विन्यसेत्।
अमृतीकरणादेवं ताम्रं स्यादमृतोपमम् ॥३९॥

द्वितीयोऽमृतीकरणप्रकारः।

सम्यङ्मृतं सूर्यसखस्य चूर्णं तदर्धसंशोधितगन्धकञ्च।
दत्त्वा ततोऽम्लैः खलु निम्बुकोत्थैः सम्पेषयेद् याममलं रसज्ञः ॥४०॥
गोलं विधायाऽथ रविप्रियस्य ह्युपर्यधःसूरणकन्दसंस्थम्।
मृत्कर्पटैश्चाथ विलिप्य गोलं पुटे गजाख्ये पुटयेद्विधिज्ञः ॥४१॥

गलावधि। पिधाय चुल्ल्यामारोप्य वह्निं प्रज्वालयेद् दृढम्॥ चतुर्यामं ततः स्वाङ्गशीतल तत्समुद्धरेत्" इति ॥३२-३३॥

अमृतीकरणप्रयोजनम्—सुबोधम् ॥३४-३५॥

दोषाष्टकं ताम्रे वर्त्तमानं स्वभावतो वान्तिभ्रान्तिप्रभृति, तच्च प्राचीनैरपि स्फुटमुक्तमेवेत्याह पूर्वाचार्यैरिति। उक्तं हि—"ताम्रे त्वष्टौ दोषाः प्रकीर्तिताः" इति ॥३६॥

तत्रायमाद्योऽमृतीकरणप्रकारः—सुमृतं ताम्रचूर्णन्तु इत्यादिना निर्दिष्ट निगदव्याख्यात। यद्यपि प्राचीनतन्त्रेषु गन्धकसहचरितं नामृतीकरणमुक्तं, अपितु केवलं पञ्चामृतसूरणद्रवैरेव तथापि गन्धकस्यापि सह क्षेपाद् बहुलगुण भवति गन्धकस्य सूक्ष्मज्वलनेन ताम्राणवंशपर्यन्तमपि पञ्चामृतादिगुणाधावनात्, इत्यभिसन्धायामृतीकरणप्रकारोऽयमनुभूत उद्भावित आचार्यैः। शार्ङ्गधरसंहितायामपिऽर्धगन्धकलेपद्वारा अमृतीकरणमुक्तमित्यवधेयम् ॥३७-३९॥

द्वितीयोमृतीकरणप्रकारो निम्बुद्रवपेषणसूरणकन्दमध्यस्थापनसाध्यो

रसागमज्ञैरनया तु रीत्यामृतक्रियायां खलु पाचितन्तु ।
वान्त्यादिकं न प्रकरोति नूनं ताम्रं निकामं त्वमृतोपमं स्यात् ॥४२॥

तृतीयोऽमृतीकरणप्रकारः ।

सम्यङ्मृतं सूर्यसखस्य चूर्णं सम्पेषयेद्वै स्वरसे कुमार्याः ।
विशोष्य घर्मेऽथ शरावसंस्थं पचेद् वराहाख्यपुटेऽश्ववारम् ॥४३॥
रीत्यानया वै ह्यमृतीकृतन्तु रविप्रियं शीलितमप्यमन्दम् ।
दोषाष्टकं नैव करोति नूनं ताम्रं निकामं त्वमृतोपमं स्यात् ॥४४॥

मृतताम्रस्य गुणाः ।

ताम्रं तिक्तं तुवरमधुरं पाकतश्चोष्णवीर्यं
त्वम्लं स्निग्धं खलु विषहरं सारकं लेखनञ्च ।
पित्तोद्भूतानपि च कफजान् श्लेष्मपित्तोत्थितान् वा ।
घोरान् रोगानपि हि चिरजानप्यशेषांश्च हन्यात् ॥४५॥

अपि च ।

ताम्रं दीपनमुत्तमं क्रिमिहरं कुष्ठामयध्वंसनं
कासश्वासविधूननं क्षयहरं पाण्ड्वामयघ्नं परम् ।
दुर्नामग्रहणीगदप्रशमनं नेत्रामयेषूत्तमं
स्थौल्यध्वंसकरं त्वलं बहुगिरा नानामयध्वंसनम् ॥४६॥
ताम्रं मृतं ज्वरहरं व्रणरोपणञ्च रुच्यं परं गरहरं ह्युदरामयघ्नम् ।
आयुष्यमप्युभयतः परिशोधनञ्च वैद्यैर्मतं खलु रसायनतन्त्रविज्ञैः॥४७।

अपि च ।

रविप्रियन्तु सुमृतं परं शूलनिषूदनम् ।
अम्लपित्तप्रशमनं यकृत्प्लीहोदरापहम् ॥४८॥
अपस्मारप्रशमनं विषूचीवमिनाशनम् ।
आक्षेपापहमत्यन्तं तथा खल्लीप्रणाशनम् ॥४९॥

गन्धकसहभावी चेति ॥४०-४२॥

तृतीयः प्रकारः—सूर्यसखस्य ताम्रस्य । अयं हि केवलकुमारीरससाध्यः । अत्रानुक्तोऽपि गन्धकः क्षेप्यः । अश्ववारं सप्तवारमत्र पुटनम् ॥४३-४४॥

अथ मृतताम्रगुणाः—पाकतश्चोष्णवीर्यमिति प्राचीनतन्त्रेषु तु "ताम्रं कषायं मधुरञ्च तिक्तमम्लञ्च पाके कटु सारकञ्च । पित्तापहं श्लेष्महरञ्च शीतं" इत्युक्तम्, तत्र शीतत्वं लघीयस्यां मात्रायां प्रयोगात् अथवा स्पर्शतो ज्ञेयम् ॥४५॥

ताम्रं उत्तमं दीपनम् इति समन्वयः । दुर्नाम अर्शांसि ॥४६॥

उभयतः परिशोधनं पक्वशुद्धामृतीकृतदशायां प्रभावात् दोषनिःसारक-

अग्निमान्द्यहरञ्चैव परिणामाख्यशूलनुत् ।
अन्त्रशोपान्तकृच्चापि समाख्यातं भिषग्वरैः ॥५०॥

विशिष्टा गुणाः ।

मृतन्तु ताम्रं शमयत्यवश्यं शाखाश्रितं कोष्ठसमाश्रितञ्चा ।
जत्रूर्ध्वगञ्चापि मलाभिधानं पित्तं कफञ्चापि परं प्रवृद्धम् ॥५१॥

ताम्रस्य मात्रानिरूपणम् ।

अष्टमांशाद्रक्तिकाया रक्तिकार्द्धमितं परम् ।
मृतं ताम्रं प्रयुञ्जीत बलकालाद्यपेक्षया ॥५२॥

अथ मृतताम्रस्य आमयिकः प्रयोग ।

समरसबलिनिम्बूद्रावपिष्ट्या विपक्वं
त्रिकटुमरिचयुक्तं रक्तिकार्द्धं तु ताम्रम् ।
अपहरति नितान्तं हस्तकम्पादिवातं
त्वपनयति च कामं पक्षघातादिरोगान् ॥५३॥

गुञ्जार्द्धमात्रं खलु सूर्यलोहं द्विरक्तिकोशीररजोविमिश्रम् ।
सनागपुष्पं शिशिरेण वारा पीतं हरत्येव जवेन मूर्च्छाम् ॥५४॥
रविप्रियं शीलितमाल्ययुक्तं दुरालभाक्वाथविमिश्रितन्तु ।
विनाशयत्याशु गदं भ्रमाख्यं यथा समीरः खलु मेघवृन्दम् ॥५५॥
करञ्जबीजोत्थरजोविमिश्रं गुञ्जार्द्धमात्रं मृतसूर्यलोहम् ।
पित्तोद्भवं वापि कफोत्थितं वा शूलं निहन्यान्नहि संशयोऽत्र ॥५६॥
कटुत्रिकाढ्यं मृतशङ्खयुक्तं गुञ्जार्द्धमात्रं खलु सूर्यलोहम् ।
प्लीहानमत्युग्ररुजं समन्तात् निहन्ति मासैकनिषेवणेन ॥५७॥

वराटभस्मसंयुनं द्विगुञ्जजीरकान्वितम् ।
रविप्रियन्तु शीलितं निहन्ति सूतिकामयम् ॥५८॥

त्वादिति। विपूची च वमिश्चेति समुच्चयः। आक्षेपो वातव्याधिविशेषः ॥४७-५०॥

अवश्यमिति नियतानुभवः। शाखाः बाहू सक्थिनी चेति, यत्तु शाखा रक्तादयस्त्वक् चेति प्राचीनपरिभाषितम्, तस्यात्र नोपयोगः तावता कोष्ठादिग्रहणाभावप्रसङ्गात्। जत्रु ग्रीवासन्धि। मलाभिधानमिति प्रसादमलभेदेन धातुद्वैविध्यं प्रसिद्धं चरकाद्यैः, तत्र मलरूपमिति भावः ॥५१॥

मात्रानिर्देशः कालबलापेक्षया अवश्यं करणीय इति तदेतदुक्तं बलकालाद्यपेक्षयेति ॥५२॥

मृतताम्रस्य रोगयोग्यः प्रयोग.—समरसबलिनिम्बूद्रावपिष्ट्या विपक्वमिति रीत्या नया सपारदं ताम्रभस्मैव कृतमपनयति वातरोगसङ्घमिति भावः। ताम्रभस्म ½ गुञ्जा, उशीररजः २ रक्तिका, नागकेसरम् २ गुञ्जा, शीतजल पलैकमिति मूर्च्छानाशो·

कणाचूर्णसमायुक्तं मधुना परिशीलितम् ।
रविप्रियं समाख्यातं त्वग्निसन्दीपनं परम् ॥५६॥
धात्रीचूर्णसमायुक्तं ताम्रं गुञ्जार्धसम्मितम् ।
अम्लपित्तं निहन्त्याशु वृक्षं शक्राशनिर्यथा ॥६०॥
भार्ङ्गीबिभीतकोपेतं गुञ्जार्धप्रमितं मृतम् ।
ताम्रं क्षौद्रेण संलीढं कासश्वासं व्यपोहति ॥६१॥
नागपुष्पाभयामिश्रं ताम्रकं मधुसंयुतम् ।
शीलितं मासमात्रेण सर्वाण्यर्शांसि नाशयेत् ॥६२॥
अश्वत्थवल्कभस्माढ्यं रविलोहन्तु शीलितम् ।
गुञ्जापादांशमात्रेण छर्दिं जयति दारुणाम् ॥६३॥
बीजपूरद्रवोपेतं रविलोहं समाक्षिकम् ।
निषेवितं निहन्त्याशु हिक्काः पञ्च सुदारुणाः ॥६४॥
रविलोहं तु सुमृतं केवलं बलिजारितम् ।
अञ्जनाद्धि निहन्त्याशु दोषान्पटलसंश्रितान् ॥६५॥
कटुत्रिकाढ्यं खलु सूर्यलोहं कणाशिफाचूर्णयुतं तु लीढम् ।
क्षौद्रेण सप्ताहनिषेवितं तु द्रुतं यकृद्दाल्युदरं निहन्ति ॥६६॥
कटुत्रिकक्षौद्युतं सघृतं रविलोहकम् ।
निहन्ति मधुना गुल्मानतीसारान् विशेषतः ॥६७॥
ताम्रं समविषं धूर्तद्रवेण परिभावितम् ।
शीलितं त्वार्द्रकद्रावैः सन्निपातं व्यपोहति ॥६८॥
आर्द्रकस्वरसोपेतं ताम्रं तु परिशीलितम् ।
नागिनीदलमध्यस्थं गुल्मरोगं व्यपोहति ॥६६॥
रससिन्दूरसंयुक्तं रविलोहमनारतम् ।
कण्टकारीफलोद्भूतरजसा परिशीलितम् ॥७०॥
सशब्दमाक्षेपयुतमानीलाननमण्डलम् ।
प्ररुद्धश्वासनिश्वासं कासं नाशयति द्रुतम् ॥७१॥
अत्यल्पमात्रया ताम्रं दग्धाश्वत्थत्वचाम्भसा ।
बर्हिपक्षविभूतिर्वा छर्दिं जयति दुर्जयाम् ॥७२॥

प्रयोगी योगः। भ्रमाख्यं रजःपित्तानिलाज्जाता चक्रारूढस्येव चेष्टा शिरोघूर्णनप्रायकार्या भ्रमः,' नतु मिथ्याज्ञानरूप इति। करञ्जबीजोत्थरजोविमिश्रमिति— आहुश्च—"एक एव कुबेराक्षो हन्ति शूलशतानि च। किम्पुनर्यदि लभ्येत ताम्र-

व्योषचित्रकणामूलमांसीभार्ङ्गीकषायतः ।
पिप्पल्यादिगणक्वाथयुतं वा रविलोहकम् ॥७३॥
तीव्रहृच्छूलसंयुक्तं तथाक्षेपसमन्वितम् ।
शीलितं नाशयत्याशु शूलं मक्कल्लसंज्ञकम् ॥७४॥
ताम्रं समस्वर्णयुतं जटामांसीरजोन्वितम् ।
शीलितं विनिहन्त्याशु त्वाक्षेपमतिदारुणम् ॥७५॥
प्रवद्धमुष्टिकं काममानीलाननमण्डलम् ।
पानाशनादिसमये घुर्घुरायितकण्ठकम् ॥७६॥
अत्यल्पकालिकं वापि दारुणं दैर्घकालिकम् ।
तथा पादोदरगतां खल्लीं खल्वतिदारुणाम् ॥७७॥
रेणुकाशुण्ठिकाकन्यासारदारुसितान्वितम् ।
अनारतं विशेषेण रविलोहं तु शीलितम् ॥७८॥
निम्नोदरे वक्षसि वा युतमाक्षेपपीडया ।
सचीत्कारं सप्रलापं दारुणव्यथयान्वितम् ॥७९॥
सवमिं वा विवमिषायुतं खल्लीसमन्वितम् ।
वाधकं वा रजारोधं विनाशयति सत्वरम् ॥८०॥
रससिन्दूरसंयुक्तं सुमृतं ह्यमृतीकृतम् ।
शीलितं रविलोहं तु मदकर्पूरसंयुतम् ॥८१॥
श्वेताऽतितरलात्यच्छमलां भूयस्तृषान्विताम् ।
पादयोरुदरे वापि भृशं खल्लीसमन्विताम् ॥८२॥
प्रक्षीणनाडिकां काममानीलाननमण्डलाम् ।
शीलितं शमयत्याशु दारुणां तु विषूचिकाम् ॥८३॥

भस्मसमन्वितः" इति । तदेतद् ध्वनित नहि संशय इति ॥ मासैकनिषेवणेन इत्यवधिः क्रमापचययोगदर्शिका प्रीह्लः । सूतिकामयः "अङ्गमर्दो ज्वरः कम्पः पिपासा गुरुगात्रता । शोफः शूलातिसारौ च सूतिकारोगलक्षण" मित्युक्तः । कणा पिप्पली । वृक्षं शक्राशनिर्यथेति शीघ्रतायां दृष्टान्तः । नागपुष्पं नागकेसरम् । समाक्षिकं समधु । कणाशिफा पिप्पलीमूलम् । समविषं वत्सनाभसमानमात्रम् । नागिनीदलं ताम्बूलपत्रम् । अनारतं निरन्तरम् । कासविशेषणं अङ्गमातिमोहमोपाय । दग्धाश्वत्थत्वचाम्भसा इति पूर्वयोगात् किञ्चिद्विशेषः । मक्कल्लशूलं सूत्यामये प्रसिद्धम् । प्रवद्धमुष्टिकमित्यादिना दारुणाक्षेपस्यैव वर्णनं कृतमिति । तथा इति समुच्चयार्थं । कन्यासारः "मुसब्बर" इति ख्यातः, दारुसिता त्वक्, विवमिषा वमनेच्छा । अमृतीकृतामिति विशेषतः सावधानीकरणम् । सर्वत्र

कज्जलीरससिन्दूरयुतं ताम्रं तु शीलितम् ।
आनीलोष्ठं चातिफेनं परिभ्रान्तकनीनिकम् ॥८४॥
सक्रन्दनं सचीत्कारं वारंवाराक्षेपसुल्वणम् ।
आरटत्प्रचलद्दन्तमपस्मारं विनाशयेत् ॥८५॥
लोहस्वर्णसमायुक्तं ताम्रं गन्धकजारितम् ।
शीलितं नाशयत्याशु श्वासं परमदारुणम् ॥८६॥
प्रचुराक्षेपसंयुक्तमानीलमुखमण्डलम् ।
आश्वासपथसङ्कोचक्रियाप्रत्ययकारिणम् ॥८७॥
तिक्तामृतापर्पटककिराताब्दकषायतः ।
ताम्रं तु शीलितं हन्ति पुनरावर्तकज्वरम् ॥८८॥
पुनर्नवानिशामेषश्रृङ्गीद्रवविभावितम् ।
ताम्रं गन्धहतं ख्यातं व्रणशोधनरोपणम् ॥८९॥
रविलोहं बलिहतं तोलकैकमितं शुभम् ।
तोलकाष्टमितं चैव सुघृष्टं रक्तचन्दनम् ॥९०॥
भावितं भृङ्गनीरेण तत्त्ववारं प्रयत्नतः ।
मधुनाञ्जनतः ख्यातं तिमिरापमुहत्तमम् ॥९१॥
तारताप्ययुतं ताम्रं चित्रकद्रवभावितम् ।
सूर्यावर्तादिकान् घोरान् शिरोरोगान् विनाशयेत् ॥९२॥
यवजाऽऽलसमायुक्तं रसगन्धकजारितम् ।
शीलितं रविलोहं तु मतं कुष्ठापहं परम् ॥९३॥

रवितापडवरसः ।

पत्रीकृतं सुविमलं पलैकं रविलोहकम् ।
सूताद्विगुणगन्धाश्मकृतकज्जलिकां समाम् ॥९४॥
दत्त्वा कुमारीतोयेन पेषयेत्तु दिनत्रयम् ।
विधाय गोलकमथ शोषयेदातपे भृशम् ॥९५॥

भक्षणेऽमृतीकृतस्यैव प्रयोगव्यवहारात् । मदः कस्तूरिका । श्वेतातितरलात्यच्छ-मलां मण्डसङ्काशमलामिति भावः । खल्ली वातव्याधिविशेषः—"खल्ली तु पाद-जङ्घोरुकरमूलावमोटनी" इत्युक्तः । निगदव्याख्यातमन्यत् ॥ अपस्मारविशेषण-न्यासः तत्रैव व्यवहाराय । प्रत्ययोऽनुभूतिः । पुनरावर्तकः निवृत्त्य पुनरागतः । पुनर्नवादिस्वरसविभावितं केवलगन्धहतं ताम्रं लेपात् व्रणान् शोधयति रोपयति च । तत्त्ववारं चतुर्विंशतिवारम् । आदिपदेन अर्धावभेदकादिग्रहणम् ॥४३-९३॥

रवितापडवरसः—पुटयेदिति कपोताख्यपुटेनैव । शुभं वान्तिभ्रान्ति-

सम्पुटस्थं ततः कृत्वा हाण्डिकायां निधापयेत् ।
आपूर्य भस्मनाऽऽकण्ठं चुल्लिकायां तु विन्यसेत् ॥९६॥
प्रखरेणानलेनाथ पचेद् यामत्रयं ततः ।
स्वाङ्गशीतमथोद्धृत्य रविलोहं समाहरेत् ॥९७॥
निम्बूद्रवेण सम्पेष्य पुटयेत्सप्तधा ततः ।
म्रियते रविलोहं तु भस्म स्यात्कपिशं शुभम् ॥९८॥

अस्य गुणः ।

रविलोहमिदं ख्यातं रविताण्डवसंज्ञकम् ।
परं भगन्दरहरं विशेषात्परिकीर्तितम् ॥९९॥

हृदयार्णवरसः ।

कज्जलीद्विगुणं ताम्रं ह्यमृतीकृतमुत्तमम् ।
वरावारा काकमाचीद्रवेण परिमर्दयेत् ॥१००॥
वटिकाः कारयेद्वैद्यो रक्तिकापादसंमिताः ।
हृदयार्णवसंज्ञोऽयं रसो हृद्रोगनाशनः ॥१०१॥

त्र्यम्बकेश्वररसः ।

सूक्ष्मपत्रीकृतं ताम्रं त्रिधा गोमूत्रशोधितम् ।
समाहरेद्भिषग्वर्यस्तोलकाष्टकसंमितम् ॥१०२॥
रसेश्वरं च विमलं पलपञ्चकसंमितम् ।
पेषयेदतियत्नेन निम्बूकद्रवयोगतः ॥१०३॥
चत्वारिंशत्तोलमितं गन्धकं विमलीकृतम् ।
दत्त्वा तु नागिनीवारा पेषयेद् दिवसद्वयम् ॥१०४॥
विधाय गोलकमथो सम्पुटस्थं तु कारयेत् ।
सन्धिलेपं ततः कृत्वा त्वतिमन्दाग्नियोगतः ॥१०५॥
पचेद्भूधरयन्त्रेण यत्नतो यामपञ्चकम् ।
स्वाङ्गशीतमथोद्धृत्य मृतं ताम्रं समाहरेत् ॥१०६॥
रविलोहमिदं ख्यातं सव्योषं वह्निमान्द्यहृत् ।
परमर्द्धाङ्गवातघ्नं कम्पवातहरं परम् ॥१०७॥

सूर्यावर्तरसः ।

सुमृतं रविलोहं तु तोलकाष्टकसंमितम् ।

विवर्जितम् । अत्र हि निम्बुद्रवेण सप्तधा पुटनमेवामृतीकरणम् ॥९४-९९॥
हृदयार्णवरसे—वरावारा त्रिफलाजलेन ॥१००-१०१॥
त्र्यम्बकेश्वरः—नागिनीवारेति ताम्बूलपत्ररसेन ॥१०२-१०७॥

सूतार्धगन्धककृतकज्जलीं ताम्रसंमिताम् ॥१०८॥
दत्त्वा कुमारीनीरेण पेषयेदतियत्नतः ।
विधाय गोलकं सम्यगातपे परिशोषयेत् ॥१०९॥
सम्पुटस्थं ततः कृत्वा वालुकायन्त्रगं पचेत् ।
स्वाङ्गशीतमथोद्धृत्य रविलोहं समाहरेत् ॥११०॥
सूर्यावर्तरसो ह्येष समाख्यातस्तु नामतः ।
विशेषेण मतश्चैतत्खलु श्वासनिषूदनम् ॥१११॥

शूलेभकेशरीरसः ।

पलैकप्रमितं ताम्रं पारदं विमलं समम् ।
द्विपलं गन्धपाषाणं त्रिपलं शुद्धतालकम् ॥११२॥
सम्मेलय सर्वं यत्नेन पेषयेत्प्रहरद्वयम् ।
विशोष्य घर्मे च ततः सम्पुटस्थं तु कारयेत् ॥११३॥
अजापयःपिष्टटङ्कपिण्या सन्धिं प्रलेपयेत् ।
ऊर्ध्वाधो लवणं दत्त्वा हण्डिकायां तु विन्यसेत् ॥११४॥
प्रखरेणानलेनाथ वारणाख्यपुटे पुटेत् ।
एवमेकपुटेनैव म्रियते रविलोहकम् ॥११५॥
समाख्यातो रसोऽयं तु नाम्ना शूलेभकेशरी ।
अमोघास्त्रमिह ख्यातं शूलनिर्मूलने परम् ॥११६॥

अथ भूनागसत्वपातनप्रकारः ।

वर्षतौं भूभुजगान् उर्णायूद्दीपगुडैः ।
सौभाग्यालक्तझषैः पिण्याकक्षोदयुतैः ॥११७॥
सम्पेष्य प्राज्ञवरो मूषास्थं वै प्रधमेत् ।
ताम्राभं सत्वमथो मुञ्चति क्षिप्रतरम् ॥११८॥

भूनागसत्वस्य मारणम् ।

भूनागसत्वं पलसंमितन्तु रसेश्वरं द्व्यक्षमितञ्च शुद्धम् ।

सूर्यावर्तरसः—विशेषतः श्वासरोगहरः ॥१०८-१११॥

शूलेभकेसरीरसः—वारणाख्यं पुटं गजपुटम् ॥११२-११६॥

भूभुजगाः—भूनागाः । ऊर्णायुः ऊर्णनाभिः (मकडी का जाला इति हिन्दीभाषायाम्) । उद्दीपः गुग्गुलुः । सौभाग्यं टङ्कणम् । अलक्तं लाक्षा । झषो मत्स्यः । पिण्याकक्षोदः तिलकिट्टचूर्णमिति यावत् ॥ उक्तञ्च—"ताम्रभूभवभूनागान्निशापिष्टान् समेन तान् । गुडगुग्गुलुलाक्षोर्णामत्स्यपिण्याकटङ्कणैः ॥ दृढमेतैश्च संयोज्य मर्दयित्वा धमेत्सुखम् । मुञ्चन्ति ताम्रवत्सत्वं ते पक्षा अपि वर्हिणाम्" इति ॥११७-११८॥

पलोन्मितं शुद्धसुगन्धचूर्णं दत्त्वा पुटेद् वन्यकरीषवह्नौ ॥११९॥
भूनागसत्वं पुटितं त्रिधैवं त्वनुत्तमां याति मृतिं निकामम् ।
रसागमाम्भोनिधिकर्णधारः प्रयोजयेत्ताम्रविधानरीत्या ॥१२०॥

अस्य गुणाः ।

भूनागसत्वं सुमृतं तुवरं कुष्ठनाशनम् ।
विषघ्नञ्च विशेषेण ताम्रवद्गुणकारकम् ॥१२१॥

अस्य आमयिकप्रयोगः ।

भूनागसत्वं मतिमान् ताम्रवद्धिनियोजयेत् ।
ताम्रवच्चानुपानानि सहपानानि चादिशेत् ॥१२२॥

मयूरपक्षस्य सत्वपातनम् ।

भूनागसत्वमार्गेण सत्वं मायूरपत्रजम् ।
निपातयेन्मारयेच्च रसतन्त्रविचक्षणः ॥१२३॥
भूनागसत्ववच्चास्य गुणान् खलु समादिशेत् ।
आमयेषु च यत्नेन ताम्रवद्धिनियोजयेत् ॥१२४॥

इति ताम्रविज्ञानीयो नाम सप्तदशस्तरङ्गः ।

---

## अथ वङ्गविज्ञानीयोऽष्टादशस्तरङ्गः ।

अथ वङ्गस्य नामानि ।

वङ्गञ्च वङ्गकं रङ्गं रङ्गकं शुक्रलोहकम् ।
कुरूप्यं त्रपुसञ्चैव त्रपुपं त्रपु कीर्तितम् ॥१॥

वङ्गस्य द्वैविध्यम् ।

खुरकं मिश्रकं चेति वङ्गकं द्विविधं मतम् ।
खुरकं श्रेष्ठमाख्यातं मिश्रकं त्ववरं स्मृतम् ॥२॥

खुरकस्य लक्षणम् ।

मृदुलं निर्मलञ्चैव चन्द्रलोहसमप्रभम् ।

अत्र ताम्रवदिति ताम्राद्भिन्नं सत्व न ज्ञेयम् । इदं हि विशुद्धं ताम्रमेव भवति । अस्य मारणप्रकारो निगदव्याख्यातः । मारणानन्तरममृतीकरणं ताम्रोक्तविधानेन कार्यमेव ॥११९-१२०॥

भूनागसत्व विशेषतो विषनाशकम् । तुवरमिति रसे कषायम् । गुणतस्ताम्रसमञ्चेति । अस्यानुपानादिकं सर्वं ताम्रवदेवेति ॥ मयूरपक्षसत्वस्याप्येवमेवेति ॥

अथ वङ्गवर्णनम्—वङ्गनामानि तन्त्रव्यवहारविषयाणि ॥१॥

खुरकं मिश्रकञ्चेति द्विविधं वङ्गम्, तयोः खुरकं श्रेष्ठं निर्मलत्वात् ॥२॥

द्रुतद्रावञ्च निःशब्दं खुरकं समुदीरितम् ॥३॥

मिश्रकस्य लक्षणम् ।

द्रावेऽतिकठिनं रूक्षं त्वन्यधातुविमिश्रितम् ।
धूसरं कठिनञ्चैव मिश्रकं वङ्गमुच्यते ॥४॥

वङ्गस्य ग्राह्याग्राह्यत्वनिरूपणम् ।

खुरकाख्यं शुक्लोहं मारणाय प्रशस्यते ।
मिश्रकं हेयमाख्यातं रसतन्त्रविचक्षणैः ॥५॥

वङ्गशोधनस्य प्रयोजनम् ।

विशुद्धिहीनं खलु शुक्लोहं निषेवितं वाप्यमृतं तु नूनम् ।
निहन्ति सर्वां खलु कायकान्तिं कुष्ठं किलासञ्च परं विदध्यात् ॥६॥
गुल्मप्रमेहक्षयपाण्डुशोथश्लेष्मज्वरार्दांश्च भगन्दरञ्च ।
शुक्राश्मरीं रक्तविकारजातान् रोगाननेकान् जनयेच्च नूनम् ॥७॥

अथ वङ्गशोधनस्य प्रथमः प्रकारः ।

खुराभिधानं खलु शुक्लोहं निधाय दर्व्यां भिषजां वरेण्यः ।
चुल्लीगतञ्चाप्यथ गालयित्वा विशुद्धचूर्णोदकपूर्णगर्भे ॥८॥
गाढन्तु सच्छिद्रपिधानकेन क्षिपेत्समाच्छन्नमुखे तु कुम्भे ।
इत्थं निषिक्तं भिषजाश्ववारं वङ्गं विशुद्धिं समुपैति नूनम् ॥९॥

द्वितीयः शोधनप्रकारः ।

वङ्गकं गालितं लोहदर्वीगतं सूर्यदुग्धे भृशञ्चैव निर्वापयेत् ।
पूर्वमार्गेण वै शेषकर्माचरेत् सत्वरं वङ्गकं याति शुद्धिं पराम् ॥१०॥

खुरकलक्षणमुपादेयतारतम्यकारणम्—चन्द्रलोहसमप्रभं रजतसदृशम्, निःशब्दं गालने समुदीरितं प्राचीनैरिति शेषः ॥३॥

अन्यधातुमिश्रितमिति मिश्रकरूपयोग्यताहेतुः ॥४॥

खुरकवङ्गं तयोरुपादेयमाहुः, तथा चोक्तम्—"खुरकन्तु गुणैः श्रेष्ठं मिश्रकं न रसे हितम्" इति ॥५॥

शोधनप्रयोजनं दोषजनकत्वादिति । किलासं श्वित्रम् । नूनं अवश्यम् । आहुश्च—"अशुद्धममृतं वङ्गं प्रमेहादिगणप्रदम् । गुल्महृद्रोगशूलार्शःकासश्वासवमिप्रदम्" इति ॥६-७॥

वङ्गशोधनप्रकारः प्रथमः—अश्ववारं सप्तवारम् । निगदव्याख्यातमन्यत् ॥८-९॥

सूर्यदुग्धे अर्कक्षीरे, भृशं त्रिवारं सप्तवारम्वा । पूर्वमार्गेण अव्यवहितप्रदर्शितेन वङ्गशोधनस्य प्रथमप्रकारोक्तमार्गेण शेषकर्म इहानुक्तमवशिष्टं कर्म कुम्भस्य अर्कदुग्धेन गर्भदेशपर्यन्तापूरणम्, सच्छिद्रसुदृढपाषाणपिधानकेन तन्मुखस्याच्छादनम्, गालितवङ्गस्य परिषेकसमये समुत्प्लवननिरासार्थं पाषाणेष्टकादिभिः स्थिरीकरणादिकञ्च विदध्यादिति ग्रन्थाभिप्रायः ॥१०॥

तृतीयः शोधनप्रकारः ।

वङ्गकं द्रावितं सिन्दुवारद्रवे रात्रियुक्ते त्रिधा चेह निर्वापयेत् ।
शेषकर्माचरेत् पूर्वमार्गेण वै शुक्लोहं द्रुतं याति शुद्धिं पराम् ॥११॥

द्रावितस्य तु वङ्गस्य द्रवादौ परिषेचने ।
औचित्येनाचरेन्नोचेदुत्प्लुत्योत्प्लुत्य निर्दहेत् ॥१२॥

चतुर्थः शोधनप्रकारः ।

वङ्गं प्रद्राव्य यत्नेन लोहदर्वीगतं ततः ।
निर्वापयेदम्लतक्रे पूर्वोक्तविधिना भिषक् ॥१३॥
ततः कुमारिकाद्रावे तद्वदेव निषेचयेत् ।
अनेन विधिना वङ्गं शुद्धिमायाति सर्वथा ॥१४॥

अथ वङ्गमारणस्य प्रथमः प्रकारः ।

विशुद्धं वङ्गमादाय कटाहे चुल्लिकास्थिते ।
विनिक्षिपेद् भिषग्वर्यश्चुल्लिकाग्निं प्रदीपयेत् ॥१५॥
वङ्गात् कलांशिकं सूतं विशुद्धं तत्र निक्षिपेत् ।
विशुद्धं हरितालञ्च स्वल्पं स्वल्पं मुहुर्मुहुः ॥१६॥
निक्षिप्य वनकार्पासदण्डेन परिचालयेत् ।
यावद्भस्म भवेत्तावत्तालचूर्णं समापयेत् ॥१७॥
ततः शरावेणाच्छाद्य पचेत्तीव्राग्निना भिषक् ।
अनेन विधिना वङ्गं पञ्चतां यात्यनुत्तमाम् ॥१८॥

द्वितीयो मारणप्रकारः ।

विमलं वङ्गमादाय चुल्लिकोपरिसंस्थिते ।
विनिक्षिपेत् कटाहे तु ततो वह्निं प्रदीपयेत् ॥१९॥
विद्रुतं वङ्गकं ज्ञात्वा रसकर्मविशारदः ।
पादांशापामार्गचूर्णं स्वल्पं स्वल्पं मुहुर्मुहुः ॥२०॥
निक्षिप्य लोहदण्डेन यत्नतः परिचालयेत् ।

सिन्दुवारो नीलनिर्गुण्डी, रात्रिः हरिद्रा । उक्तं हि—"द्रावयित्वा निशायुक्ते क्षिप्तं निर्गुण्डिकारसे । विशुद्ध्यति त्रिवारेण खुरवङ्गं न संशयः" इति । औचित्येन द्रुतवङ्गोत्प्लवनरोधनयुक्त्या आचरेत् शोधनमिति शेषः ॥११-१२॥

तक्रे कुमारीरसे च त्रिधा त्रिधा निर्वापणेन च शुद्ध्यति इति ॥१३-१४॥

मारणस्य प्रथमः प्रकारः—कलांशिकं षोडशभागिकम् । हरितालं यथायोग्यमानम् । तालचूर्णक्षेपस्य भस्मपर्यन्तं समापनम् । भस्मोत्तरमपि शरावेणाच्छाद्य तीव्राग्निदानं निरुत्थताकरणार्थमित्यनुसन्धेयम् । एवमग्रेऽपि ज्ञेयम् । पञ्चतां मृत्युम् ॥१५-१८॥

वङ्गभस्म भवेद्यावच्चूर्णं तावत्समापयेत् ॥२१॥
राशीकृत्य ततो भस्म शरावेण पिधापयेत् ।
ततो दिनैकपर्यन्तं तथा वह्निं प्रदीपयेत् ॥२२॥
ज्वलदङ्गारवर्णं स्याद् वङ्गभस्म यथा ध्रुवम् ।
स्वतःशीतं ततो ज्ञात्वा वङ्गभस्म समाहरेत् ॥२३॥
शङ्खकुन्देन्दुधवलं वङ्गभस्म भवेद् ध्रुवम् ।
इत्थं मृतं वङ्गकन्तु वीतशङ्कः प्रयोजयेत् ॥२४॥

तृतीयो मारणप्रकारः ।

विशुद्धं वङ्गमादाय कटाहे गालयेद्भिषक् ।
पादांशिकं विशुद्धञ्च तत्र सूतं विनिक्षिपेत् ॥२५॥
दत्त्वा सम्मर्द्य यत्नेन द्रुतमेवावतारयेत् ।
वङ्गार्द्धं तालकं दत्त्वा खल्वे सम्पेषयेत्ततः ॥२६॥
श्लक्ष्णचूर्णं ततः कृत्वा रविदुग्धेन मर्दयेत् ।
पिप्पलत्वक्समुत्थाच्छक्षारमध्यगतं भिषक् ॥२७॥
शरावसम्पुटे न्यस्य लावकाख्यपुटे पुटेत् ।
इत्थं पुटद्वयेनैव वङ्गं तु मृतिमाप्नुयात् ॥२८॥

चतुर्थो मारणप्रकारः ।

विशुद्धं वङ्गमादाय कटाहे गालयेद्भिषक् ।
शुष्कपिप्पलवल्कोत्थं चूर्णं तुल्यं विनिक्षिपेत् ॥२९॥
स्वल्पं स्वल्पं मुहुश्चैव लोहदर्व्या प्रचालयेत् ।
वङ्गभस्म भवेद्यावच्चूर्णं तावत्समापयेत् ॥३०॥
राशीकृत्य ततो भस्म शरावेण पिधापयेत् ।
ज्वलदङ्गारवर्णं स्याद् वङ्गभस्म यथा चिरम् ॥३१॥
तथा प्रदीपयेदग्निं दिनमेकं भिषग्वरः ।
स्वतःशीतं ततो ज्ञात्वा सुमृतं वङ्गमाहरेत् ॥३२॥

अपामार्गचूर्णक्षेपाद् वङ्गभस्मनिर्माणं द्वितीयम् । वीतशङ्कः अपक्वताशङ्कारहितः । निगदव्याख्यातमन्यत् ॥१६-२४॥

तृतीयः प्रकारः पारदतालकयोगसाध्यः पिप्पलत्वक्समुत्थनिर्मलक्षारमध्ये स्थापनप्रकारश्च तालकभस्मीकरणप्रकरणे भणितपरिभाषः ॥२५-२८॥

चतुर्थः प्रकारः—पिप्पलत्वक्क्षारक्षेपनिर्माणीयः । अस्य च क्षारांशबहुलतया प्रक्षालनम् । रक्तं वर्णकपत्रं आङ्ग्लभाषायां "Red Litmus Paper" इति

वहुशः क्षालयेत्तोयैः क्षारहीनं यथा भवेत् ।
ततः सर्वप्रयोगेषु वीतशङ्कः प्रयोजयेत् ॥३३॥

प्रसङ्गात् क्षारशून्यत्वपरीक्षणम् ।

क्षारशून्यत्वविज्ञानं भिषजां स्यात्कथं त्वतः ।
रसायनोक्तमार्गेण सर्वं तदुपदिश्यते ॥३४॥
रक्तं वर्णकपत्रं चेद्धावनाम्भसि संस्थितम् ।
सर्वथा नीलतां नैति क्षारशून्यं ततो वदेत् ॥३५॥

पञ्चमो मारणप्रकारः ।

वङ्गं विशुद्धं प्रद्राव्य मृदुपत्राणि कारयेत् ।
ततोऽर्कदुग्धपिष्टेन तालेन परिलेपयेत् ॥३६॥
घर्मे संशोष्य यत्नेन वङ्गपत्राणि वै पृथक् ।
चिञ्चात्वक्क्षारमध्यस्थानीह कृत्वा पुटेद्भिषक् ॥३७॥
एवं पुटत्रयेणैव वङ्गकं याति पञ्चताम् ।
इत्थं मृतं वङ्गकन्तु वीतशङ्कः प्रयोजयेत् ॥३८॥

सुमृतवङ्गस्य गुणाः ।

वङ्गं मृतं लघु सरं शिशिरञ्च रूक्षं
मेध्यं सतिक्ततुवरं लवणञ्च किञ्चित् ।
मेदोहरं रुचिकरञ्च रसायनञ्च
श्लेष्मामयप्रशमनं खलु सम्प्रदिष्टम् ॥३९॥
वङ्गं वान्तिहरं परं व्रणहरं सर्वप्रमेहापहं
चक्षुष्यं सुमतिप्रदं क्षयहरं शुक्रैकसम्वर्द्धनम् ।
श्वेतासृग्दरनाशनं व्रणहरं जन्त्वामयध्वंसनं
कामं कामविवर्द्धनं धृतिकरं वर्ण्यं निकामं तथा ॥४०॥

नाम्ना प्रसिद्धम् । वङ्गभस्म धावनाम्भसि निक्षिप्तं, चेन्नीलवर्णतां नोपेयात्तदा वङ्गभस्म क्षारशून्यं सञ्जातमिति जानीयात् । अन्यथा सक्षारमिति व्यवस्येत् ॥

पञ्चमः प्रकारः—सुगम ॥३६-३८॥

अथास्य गुणाः—शिशिरं शीतम् । यद्यपि कैश्चित् वङ्गं उष्णमिति लिखितम्, तथापि वङ्गं प्रायः शिशिरम्, तालादिमारितन्तु उष्णवीर्यं भवत्येवेति । वक्ष्यति हि—"वङ्गं गन्धादियोगेनेत्यादिनाऽनुपदमेवेति । श्लेष्मामयप्रशमनं खलु सम्प्रदिष्टं भिषग्भिरिति शेषः । स्मरन्ति हि—"वङ्गं तिक्तोष्णकं रूक्षमीषद्वात प्रकोपणम् । मेहश्लेष्मामयघ्नञ्च मेदोघ्नं क्रिमिनाशनम्" इति । न चोष्णमेव वङ्गमिति शङ्कनीयं प्राचीनैरपि वङ्गाशीततोल्लेखात् । तथाहि—"बल्यं दीपन पाचनं रुचिकरं प्रज्ञाकरं शीतलं सौन्दर्यैकविवर्धनं हितकरं नीरोगताकारकम् ।

वङ्गं कामं मदनजननं स्वप्नमेहामयघ्नं
कासश्वासप्रशमनपटु प्रीणनं कार्श्यभाजाम् ।
वृष्यं बल्यं पवनशमनं पाण्डुहृच्चातिवेलं
वाग्जालैः किं भवति नितरां सौख्यदं देहभाजाम् ॥४१॥
गर्भाशयच्युतिहरं श्वासकृच्छ्रप्रणाशनम् ।
शोषोद्भूतनिशास्वेदोल्बणश्लेष्महरं परम् ॥४२॥

विशिष्टा गुणाः ।

मृतन्तु वङ्गं परिशीलितन्तु विनाशयेन्नातिचिरेण नूनम् ।
चिरोत्थितं श्वासनलीविलग्नं कफं प्रवृद्धं मलनामधेयम् ॥४३॥

अपि च ।

मृतन्तु वङ्गं परिशीलितं वै निवारयेन्नातिचिरेण कामम् ।
सर्वाङ्गगं मानसवैकृतोत्थं प्रसादसंज्ञं पवनं प्रवृद्धम् ।.४४॥

वङ्गस्य औष्ण्यशैत्यजनने हेतुः ।

वङ्गं गन्धादियोगेन मारितं तूष्णतां व्रजेत् ।
क्षारादिना मृतश्चेह शीततां याति निर्भरम् ॥४५॥

अस्य मात्रानिरूपणम् ।

रक्तिकातः समारभ्य रक्तिद्वितयसंमिताम् ।
पूर्णमात्रां प्रयुञ्जीत मृतवङ्गस्य कोविदः ॥४६॥

अस्य आमयिकः प्रयोगः ।

गुडूचिकासत्वरजोविमिश्रं मृतन्तु वङ्गं मधुनावलीढम् ।

धातुस्थौल्यकरं क्षयिक्षयहरं सर्वप्रमेहापहं वङ्गं भक्षयतो नरस्य न भवेत्स्वप्नेऽपि शुक्रक्षयः" इति । तस्मादाचार्य्योक्तं निर्बाधमिति । सुमतिप्रदं वर्धमानकामवासनानियमनात् शुक्रक्षयदौर्बल्यादिदशायामिति भाव । कामविवर्द्धनन्तु क्रमशः क्षीणे शुक्रे सञ्चिते स्वयमेवोद्दीपनात् । निकाम अत्यर्थम् । कामं यथेच्छं मदनजननमिति प्रथमं क्षीणं शुक्रमाप्याय्य ततः कामवासनोद्दीपकमिति भावः । पवनशमनं प्रसादनामधेयं प्रवृद्धं पवनं शमयतीति ज्ञेयम् । मलत्वातस्य तूत्पादकमिति विशेषः। अतिवेलं अत्यर्थम् । शोषोद्भूतं निशास्वेद उल्बणं श्लेष्माणञ्च हरतीति। निगदव्याख्यातमन्यत् ॥३९-४२॥

नूनमिति दृढानुभवख्यापनम् । एतच्च प्राचीनतन्त्रानुक्तमपि अनुभववैशेष्यात् शिष्यबुद्धिवैशद्यार्थमुक्तमिति । एवमेव प्रसादवातशान्तिरपि वङ्गाज्जायमाना नवाविष्काररूपैवेति विशेषः ॥४३-४४॥

वङ्गस्यौष्ण्यशैत्यभावहेतुस्तु अनुक्तपूर्वः पूर्वैः स्फुटीकृत आचार्य्यैः ॥४५॥
अस्य मात्रानिरूपणं देशकालापेक्षया ज्ञापितम् ॥४६॥

विनाशयेन्नातिचिरेण मेहान् मत्तद्विपानत्र यथा मृगेन्द्रः॥४७॥
वङ्गं शिलाजतुयुतं मधुनावलीढं
मासं निषेवितमलं विनिहन्ति मेहान्।
क्षीणाल्पशुष्ककृशदूषितरेतसाञ्च
वीर्याभिवर्द्धनविशुद्धिविधौ च शस्तम् ॥४८॥
साज्यं वङ्गं शीलितन्तु द्रुतं पाण्ड्वामयं हरेत्।
सौभाग्यचूर्णसंयुक्तं गुल्मञ्चापि विनाशयेत् ॥४९॥
पिप्पलीचूर्णसंयुक्तं वङ्गन्तु परिशीलितम्।
अग्निमान्द्यं निहन्त्याशु त्वजीर्णं पूगसंयुतम् ॥५०॥
हरिद्रया निषेवितं मृतन्तु वङ्गमुद्धरेत्।
निकाममूर्ध्वमारुतं तथैव रक्तपित्तकम् ॥५१॥
रससिन्दूरसंयुक्तं वङ्गं तु परिशीलितम्।
काममार्द्रनिशावारा व्रणमेहं व्यपोहति ॥५२॥
वरुणादिगणोद्दिष्टभेषजक्वाथयोगतः।
शीलितं वङ्गभसितं मतं व्रणहरं परम् ॥५३॥
चम्पकस्वरसोपेतं सकर्पूरमथापि वा।
वङ्गं निषेवितं हन्यान्मुखदौर्गन्ध्यमुल्वणम् ॥५४॥
वङ्गं कस्तूरिकोपेतं वीर्यस्तम्भकरं परम्।
जातीफलक्षौद्रयुतं शुक्रपुष्टिकरं परम् ॥५५॥
खदिरक्वथितेनेह वङ्गं चर्मामयं हरेत्।
समुद्रफेनसंयुक्तं दुष्टं शुक्रं विशोधयेत् ॥५६॥
अपामार्गस्य चूर्णेन वङ्गन्तु परिशीलितम्।
रक्तिद्वयमितं यत्नात् पाण्ढ्यमाशु विनाशयेत् ॥५७॥
शाल्मलीमूलसंयुक्तं वङ्गं रक्तिद्वयोन्मितम्।
सक्षौद्रं सहरिद्रञ्च वीर्यवृद्धिकरं परम् ॥५८॥

रोगयोग्यः प्रयोगोऽस्य गुडूचिकेत्यादिना। वङ्गभस्म २ गुञ्जे, अमृता-सत्वम् ४ गुञ्जा, मधु २ माषाँ लीढं प्रमेहरोगशान्त्यै प्रभवति। शिलाजतु ४ गुञ्जा., वङ्ग २ गुञ्जामितं, मास यावत् मधुना लीढं शुक्रशोधनम्। साज्यं घृतयुक्तम्, द्रुतं शीघ्रम्। सौभाग्यचूर्णं वह्निभृष्टटङ्कणक्षोदः, पूगयुतं वङ्गमजीर्णं शमयतीत्यन्वयः॥ ऊर्ध्वमारुतम्—"अधः प्रतिहतो वायुः श्लेष्मणा मायुनाऽथवा। करोति भृशमुद्गारमूर्ध्ववातः स उच्यते" इति। आर्द्रा सरसा या

लघुशाल्मलिमूलोत्थचूर्णेन परिशीलितम् ।
साभ्रकं शुक्रलोहन्तु शुक्रसञ्जननं परम् ॥५६॥
वङ्गन्तु शर्करोपेतं पित्तघ्नं समुदाहृतम् ।
निम्बूकस्वरसोपेतं देहदाहहरं मतम् ॥६०॥
तुलसीदलसंयुक्तं वङ्गं मेहान् निवारयेत् ।
नागिनीस्वरसोपेतं विबन्धं नाशयेद् ध्रुवम् ॥६१॥
लोहशुक्तिकयोपेतं वङ्गं तु परिशीलितम् ।
द्विगुञ्जं रालसहितं श्वेतप्रदरनाशनम् ॥६२॥
वङ्गं शशासृजा वापि निशाकुङ्कुमचन्दनैः ।
महिषीक्षीरसंपिष्टं मुखच्छायां व्यपोहति ॥६३॥
रससिन्दूरसंयुक्तं वङ्गन्तु परिशीलितम् ।
नाशयत्यचिरादेव प्रमेहं क्षीणशुक्रताम् ॥६४॥
तालमूलिकयोपेतं वङ्गन्तु परिशीलितम् ।
मासमात्रप्रयोगेण शुक्रतारल्यहृत्परम् ॥६५॥
नृपावर्तायसयुतं रससिन्दूरसंयुतम् ।
चन्दनक्वाथसंपीतं जीर्णज्वरमपोहति ॥६६॥
ताप्यतारसमायुक्तं वङ्गं तु परिशीलितम् ।
ऊर्ध्वजत्रुसमुद्भूतं नाडीशूलं व्यपोहति ॥६७॥

अथ स्वर्णवङ्गस्य प्रथमो निर्माणप्रकारः ।

कर्षत्रयमितं वङ्गं दर्व्यां न्यस्यानले न्यसेत् ।
विद्रुते तत्समं सूतं द्रुतं तत्र विनिक्षिपेत् ॥६८॥
द्रुतं निक्षिप्य खल्वे च पेषयेदतियत्नतः ।
अम्लेन केनचिद्वापि सह सम्मर्दयेत्ततः ॥६९॥
विमर्द्य सैन्धवं दत्त्वा बहुशः क्षालयेत्ततः ।
विशुद्धं गन्धकञ्चाथ दद्यादीश्वरसंमितम् ॥७०॥

निशा हरिद्रा तस्या वारा जलेन । पाण्ढ्यं नपुंसकताम् । नागिनीस्वरसः ताम्बूलदलरसः । लोहशुक्तिवङ्गसर्जरसान् समभागान् सम्मेल्य ततः द्विगुञ्जा मात्रास्यौपधस्य कल्पनीया । शशासृजा शशरुधिरेण, नृपावर्तः राजावर्तः क्षुद्रमणिविशेषः वक्ष्यमाणपरिचयः । आयसं लौहम् । ताप्यं स्वर्णमाक्षिकम् ॥४७-६७॥

अथ स्वर्णवङ्गनिर्माणप्रकारः—अम्लसैन्धवाभ्यां सम्मर्द्य क्षालनं पिष्टिनैर्मल्यार्थम् । ईश्वरसंमितं पारदपरिमाणम् । चूलिकालवणं नवसादरम् । उक्त

चूलिकालवणञ्चैव वलितुल्यं विनिक्षिपेत् ।
सम्पेष्य चातियत्नेन श्लक्ष्णचूर्णन्तु कारयेत् ॥७१॥
सवस्त्रमृत्तिकालिप्तकाचकुप्यां ततो न्यसेत् ।
यत्नतः सिकतायन्त्रे चतुर्यामं पचेत्ततः ॥७२॥
निर्धूमे जायमाने च काचकूपीमुखे भिषक् ।
सन्दंशेन गृहीत्वा च कूपीं भूमौ तु विन्यसेत् ॥७३॥
काचकूपीं विभिद्याथ कूपिकातलसंस्थितम् ।
स्वर्णवर्णं स्वर्णवङ्गं भिषग्यत्नः समाहरेत् ॥७४॥
कूपीभेदनकाले तु सूक्ष्मदर्शी भिषग्वरः ।
सूक्ष्मान् काचकणान् सम्यङ् निरीक्ष्य परिवर्जयेत् ॥७५॥
वङ्गं सञ्जायते यस्मात् कीर्णं स्वर्णकणैरिव ।
तस्माद्रसायनाचार्यैः स्वर्णवङ्गं प्रकीर्तितम् ॥७६॥

द्वितीयो निर्माणप्रकारः ।

वङ्गं सूर्यमितं द्रुतं रसमितं सूतञ्च सम्पेषयेत्
प्रक्षाल्याम्लरसैः क्षिपेद् बुधवरो नागोन्मितं गन्धकम् ।
अङ्गांशं नवसादरञ्च विमलं सम्पेष्य यत्नात्पचेत्
कूपीस्थं सिकताख्ययन्त्रविधिना कूपीं ततस्त्वाहरेत् ॥७७॥
कूपीं विभिद्य यत्नेन रसतन्त्रविचक्षणः ।
स्वर्णरम्यं स्वर्णवर्णं स्वर्णवङ्गं समाहरेत् ॥७८॥
आयुर्वेदमहाम्भोधिकर्णधारधुरन्धरैः ।
मित्रवंशावतंसैस्तु गुरुवर्यमहोदयैः ॥७९॥
श्रीमन्नरेन्द्रनाथाख्यैस्त्वयमाविष्कृतो विधिः ।
प्रकाशितः खलु मया लोकानुग्रहकाम्यया ॥८०॥

अन्यत्रापि—"प्रक्षिपेद् भाजने गन्धमायसे वापि मृण्मये । विद्रुते वह्नितापेन तस्मिन् तन्मानकं रसम् ॥ क्षिप्त्वा सञ्चूर्णयेत्तत्र नरसारञ्च गन्धकम्" इत्यादिना। गन्धकमत्र निःस्नेहं ग्राह्यम् । केचित्तु वालुकायन्त्रं विहाय अङ्गारधानिकायामेव पाचयन्ति, तत्तु वर्णगुणाभ्यां हीनमिति विभावनीयम् ॥६८-७६॥

द्वितीयो निर्माणप्रकारोऽल्पव्ययो बहुफलश्चेति । सूर्यमितं द्वादशभागिकं द्रुतं वङ्गं, रसमितं षड्भागिकं सूतं सम्मेल्य सम्पेषयेत् । नागोन्मितं अष्टभागिकं गन्धकम् । तच्च प्रागुक्तपञ्चमविधिविशुद्धं ग्राह्यम् । अङ्गांशं षड्भागिकञ्च नवसादरं दत्त्वा सम्पेष्य कुप्यां निधाय पचेत् । अन्यत् सर्वं समानं पूर्वेण । अत्र च पूर्वयोगापेक्षयोत्कृष्टवर्णं स्वर्णवङ्गं भवति इति। अत्र च वङ्गपारदादिमारणतारतम्यं मित्रवंशावतंसैराविष्कृतमिति विशेषः ॥७७-८०॥

अस्य गुणाः ।

सुवर्णवङ्गं शिशिरञ्च रूक्षं सरं सतिक्तं लवणञ्च साम्लम् ।
रसायनं मेहहरञ्च मेध्यं बल्यञ्च नेत्र्यं परमं प्रदिष्टम् ॥८१॥
लावण्यदं वह्निविवर्धनञ्च श्लेष्मामयघ्नं परमञ्च वृष्यम् ।
मेदोहरं शुक्रकरं निकामं सुवर्णवङ्गं कथितं रसज्ञैः ॥८२॥

अस्य मात्रानिरूपणम् ।

गुञ्जैकतः समारभ्य गुञ्जाद्वितयसंमितम् ।
सुवर्णवङ्गं युञ्जीत बलकालाद्यपेक्षया ॥८३॥

अस्य आमयिकः प्रयोगः ।

स्वर्णवङ्गं विशेषेण वङ्गोक्तैरनुपानकैः ।
तत्तद्रोगेषु नियतं प्रयुञ्जीत भिषग्वरः ॥८४॥

[ गीतिका ]

बहुलारजोविमिश्रं त्वपि नागकेशराढ्यम् ।
यशदोत्थभूतियुक्तं सुविभं सुवर्णवङ्गम् ॥८५॥
परिशीलितं सपथ्यं दिनसप्तकं प्रयत्नात् ।
विनिवारयेद्धि शुक्रप्रदरोत्थितां तु बाधाम् ॥८६॥
परिशीलितं तथेदं खलु मासमात्रयोगात् ।
विनिहन्ति शुक्रमेहं सुचिरोत्थितं प्रकामम् ॥८७॥
सममाधवोचिताढ्यं सुविभं सुवर्णवङ्गम् ।
परिशीलितं द्विगुञ्जं व्रणमेहहृत्प्रदिष्टम् ॥८८॥
मधुना सुवर्णवङ्गं रजनीरसप्रगाढम् ।
अशितं ह्यमोघशस्त्रं व्रणमेहनाशनाय ॥८९॥
सितसारिवाश्रुतेन ह्यशितं सुवर्णवङ्गम् ।
व्रणमेहमुग्रवेगं खलु नाशयेन्निकामम् ॥९०॥
ससुराप्रियोत्थचूर्णं ह्यशितं सुवर्णवङ्गम् ।
विनिवारयेद्विशेषाद् द्रुतमेव रात्रिमेहम् ॥९१॥
लघुशाल्मलीशिफाया रजसा समन्वितन्तु ।
ह्यशितं सुवर्णवङ्गं बलवीर्यदं प्रदिष्टम् ॥९२॥

अस्य गुणाः—शिशिरं गन्धमारितमपि क्षारसहयोगात् शीतवीर्य्यम् । लवणं सक्षारत्वात् । नेत्र्यं प्रदिष्टं कैश्चित् ॥८१-८२॥

मात्रादिकं वङ्गभस्मवत् सर्वम् ॥८३-८४॥

बहुला स्थूलैला, सुविभं शोभनचाकचक्यम्, सपथ्यं पथ्यरक्षायुक्तं यथा स्यात्तथा । माधवोचितं कङ्कोलम्, शीतलचीनी इति हिन्दीभाषायाम् ।

अपि च—

प्रतनुमधुविमिश्रं मासमेकं सपथ्यं
मृतयशदसमेतं शीलितं स्वर्णवङ्गम् ।
अपनयति विशेषाच्छुक्रतारल्यमारा-
ज्जनयति बलवृद्धिं भूयसीं भावुकानाम् ॥९३॥
समभागिकसिन्दूररससम्मिश्रितं तथा ।
सुवर्णवङ्गं मधुना वासरे तु द्विवारकम् ॥९४॥
सततं मासमात्रेण शीलितं पथ्यभोजिभिः ।
अवश्यं नाशयत्याशु शुक्रदौर्बल्यमुल्बणम् ॥९५॥

अथ सुवर्णवङ्गपञ्चकरसायनम् ।

सुवर्णवङ्गमुज्ज्वलं तु तोलकद्वयोन्मितम् ।
विशोधितं शिलामयं सुवर्णवङ्गसंमितम् ॥९६॥
मृतं तु तीक्ष्णलोहकं शिलामयार्द्धभागिकम् ।
सुशोभनं तथाभ्रकं मतं तु तोलकार्द्धकम् ॥९७॥
स्मरध्वजाङ्कपूर्वकं ध्वजाह्वयं तथा रसम् ।
विमर्द्य खल्वके भृशं वटीं त्रिगुञ्जसंमिताम् ॥९८॥
विधाय काचकूपके न्यसेत्ततो भिषग्वरः ।
यथानुपानयोगतो द्विवारमेकवासरे ॥९९॥
प्रयोजयेद्विशेषविद्बलावलाद्यपेक्षया ।
रसायनं मतं त्विदं सुवर्णवङ्गपञ्चकम् ॥१००॥
वङ्गीयैः श्रीरमानाथसेनवैद्यमहोदयैः ।
विचार्याविष्कृतमिदं सुरम्यन्तु रसायनम् ॥१०१॥
प्रकाशितं खलु मया लोकानुग्रहकाम्यया ।
अमोघास्त्रमिदं ख्यातं शुक्रमेहस्य नाशने ॥१०२॥
बलवर्णकरं वृष्यं परं बुद्धिविवर्द्धनम् ।
समाख्यातं विशेषेण शुक्रतारल्यनाशनम् ॥१०३॥
सितासराज्यसंयुतप्रतप्तदुग्धयोगतः ।
सुवर्णवङ्गपञ्चकं निषेवितं द्विमासकम् ॥१०४॥

"कङ्कोलकं कृतफल कोलकं कटुक फलम् । चूर्णं कन्दफलं द्वीपं मारीचं माधवं ...चिनम् ।" इति धन्वन्तरीयनिघण्टुः । सुरभियं कङ्कोलम् । सपथ्य पथ्यभोजनयुक्तम् ... आरात् दूरादेवेत्यर्थः ॥८५-९५॥

सुवर्णवङ्गपञ्चकरसायनम्—शिलामयं शिलाजतु । स्मरः कामदेवस्तस्... ध्वजाङ्कं ध्वजचिह्नं मकरः, तत्पूर्वकं मकरपूर्वकं ध्वजाह्वयं रस मकरध्वजलक्षणं...

निहन्ति वै चिरोत्थितं तु शुक्रमेहमुल्बणम् ।
तथा करोति कामिनीमदापनाशनक्षमम् ॥१०५॥

इति वङ्गविज्ञानीयो नाम अष्टादशस्तरङ्गः ।

---

## अथ सीसकादिविज्ञानीय एकोनविंशस्तरङ्गः ।

अथ सीसकस्य नामानि ।

सीसकं शीषकं सीसं नागकं नागनामकम् ।
कुवङ्गकं कुरङ्गञ्च तथा सिन्दूरकारणम् ॥१॥

ग्राह्यसीसकस्य स्वरूपम् ।

सुगौरवं मृदु स्निग्धं छेदने मलिनोज्ज्वलम् ।
वहिःश्यामं द्रुतद्रावं सीसकं जात्यमादिशेत् ॥२॥

अग्राह्यसीसकस्य स्वरूपम् ।

वहिः शुक्लं भारहीनं रूक्षं छेदे च निष्प्रभम् ।
समलं कठिनद्रावं सीसकं हेयमादिशेत् ॥३॥

सीसकशोधनस्य प्रयोजनम् ।

सीसं निहन्ति विमलां तु शरीरशोभां
कुष्ठं किलासकमलं जनयेच्च नूनम् ।
सन्धीन् प्रपीडयति पक्षवधं प्रकुर्यात्
संशुद्धिहीनमिह चेत् खलु मारितं स्यात् ॥४॥
शुद्धिपाकविहीनन्तु सीसकं परिशीलितम् ।
गुल्मं प्रमेहमानाहं श्वयथुञ्च भगन्दरम् ॥५॥
वह्निमान्द्यं त्वंसशोथं वाह्वोर्निश्चेष्टतां तथा ।
शूलं क्षयादिकान् रोगान् जनयत्यविकल्पतः ॥६॥

रसं अभ्रतुल्यं दद्यादिति शेषः । सिता खण्डम्, सरः सन्तानिका ॥९६-१०५॥

क्रमप्राप्तसीसकनामानि तन्त्रे व्यवहारार्थम् । सिन्दूरकारणं सिन्दूरहेतुत्वात् नागस्य, सिन्दूरं हि नागसम्भवमिति ॥१॥

ग्राह्यसीसकस्वरूपं सुगौरवमिति-मलिनोज्ज्वल मलिनं कृष्णं, उज्ज्वल चाकचक्ययुतम् । तथाऽतो विपरीत हेयसीसकमिति ॥२-३॥

सीसकशोधनप्रयोजनम्—स्पष्टप्रायम् । अंसशोथवाहुनिश्चेष्टतादि प्राचीनैरनुक्तोऽपि स्फुटप्रतीयमानत्वादुक्तम् । अविकल्पतः सन्देहराहित्येन अवश्यमित्यर्थः । पाकविहीनमिति दोषाश्चैते मनःशिलातालकगन्धकमन्तरा मारितनाग सेवनादप्युजायन्त इति ज्ञेयम् ॥४-६॥

सीसकस्य प्रथमः शोधनप्रकारः ।

सीसकं दर्विकासंस्थं चुल्लिकायां निधापयेत् ।
विद्रुतञ्चाथ विज्ञाय रसतन्त्रविचक्षणः ॥७॥
सिन्दुवारशिफाजातस्वरसापूरितोदरे ।
क्षिपेद् घटे तु सच्छिद्रपिधानपिहितास्यके ॥८॥
निर्वापयेत्सप्तवारं विधानज्ञो भिषग्वरः ।
इत्थं विशोधितं सीसं मारणाय प्रयोजयेत् ॥९॥

द्वितीयः शोधनप्रकारः ।

सीसकं द्रावयेल्लोहदर्वीगतं स्वच्छचूर्णोदके चाथ निर्वापयेत् ।
पूर्वमार्गेण वै शेषकर्माचरेत् सीसकं सत्वरं याति शुद्धिं पराम् ॥१०॥

अथ सीसकस्य प्रथमो मारणप्रकारः ।

सीसकं शुद्धमादाय कटाहे गालयेद्भिषक् ।
विशुष्काश्वत्थवल्कोत्थं समं चूर्णं विनिक्षिपेत् ॥११॥
स्वल्पं स्वल्पं मुहुश्चाथ लोहदर्व्या प्रचालयेत् ।
सीसभस्म भवेद्यावच्चूर्णं तावत्समापयेत् ॥१२॥
राशीकृत्य ततो भस्म शरावेण पिधापयेत् ।
ज्वलदङ्गारवर्णं स्यात्सीसभस्म यथा चिरम् ॥१३॥
स्वाङ्गशीतं ततो ज्ञात्वा मृतं सीसं समाहरेत् ।
बहुशः क्षालयेत्तोयैः क्षारहीनं यथा भवेत् ॥१४॥
सीसतुल्यां रोगशिलां विमलां तत्र निक्षिपेत् ।
निम्बूकवारिणा वापि काञ्जिकेनाथ पेषयेत् ॥१५॥
सम्पुटस्थं ततः कृत्वा पुटयेदतियत्नतः ।
इत्थं त्रिभिः पुटैरेव सीसकं मृतिमाप्नुयात् ॥१६॥
द्वितीयादिपुटे वैद्यस्तुल्यामेव शिलां क्षिपेत् ।

सीसकस्य प्रथम. शोधनप्रकार.—निर्गुण्डीमूलद्रवे परिषेचनं सप्तधा विधाय सम्पाद्यः ॥७–९॥

द्वितीयः प्रकारः चूर्णोदके निर्वापणाद्युक्तः । पूर्वमार्गेण अव्यवहितप्रदर्शितेन सीसकशोधनोक्तप्रथममार्गेण शेषकर्म कुम्भे स्वच्छचूर्णोदकस्य प्रक्षेपणम्, सच्छिद्रमुद्रापिधानकेन कुम्भमुखस्याच्छादनमित्यादिकमिहानुक्तं कर्म समाचरेदिति भावः । केचित् तु अर्कदुग्धे त्रिधा निर्वापणादपि शुद्ध्यति इत्याहुः ॥१०॥

अथास्य मारणप्रकारः प्रथमः—अश्वत्थवल्कलचूर्णक्षेपात् प्रथमं सीसकमारणम् । ततो दोषनिरासाय मनःशिलया त्रिधा पुटनमिति । पुटनञ्च मध्यपुटेनैव न महापुटैः । अन्यथा गलितो नागो दुर्विनश्यतीति अनुसन्धेयम् ।

इत्थं मृतं सीसकन्तु वीतशङ्कः प्रयोजयेत् ॥१७॥
भस्म सञ्जायते श्लक्ष्णं विशदं कज्जलप्रभम्।
पक्षाघातादिकान् नागदोषान् नैव करोति च ॥१८॥

द्वितीयो मारणप्रकारः।

विशुद्धं सीसमादाय कटाहे तु निधापयेत्।
चुल्लिकायां निधायाथ वह्निं प्रज्वाल्य गालयेत् ॥१९॥
सीसकं विद्रुतं ज्ञात्वा स्वल्पं स्वल्पं मुहुर्मुहुः।
विशुद्धकुनटीचूर्णं तुल्यं दत्त्वा विमर्दयेत् ॥२०॥
सीसभस्म भवेद् यावच्चूर्णं तावत्समापयेत्।
स्वतः शीतं ततो ज्ञात्वा सीसभस्म समाहरेत् ॥२१॥
भस्मतुल्यं बलिं दत्त्वा निम्बूनीरेण मर्दयेत्।
घर्मे विशोष्य यत्नेन सम्पुटस्थं ततः पुटेत् ॥२२॥
इत्थं त्रिभिः पुटैरेव सीसकं मृतिमाप्नुयात्।
इत्थं मृतं सीसकन्तु वीतशङ्कः प्रयोजयेत् ॥२३॥

तृतीयो मारणप्रकारः।

नागं विशुद्धन्तु कटाहसंस्थं प्रद्रावयेत्तीव्रतरानलेन।
द्रुतन्तु विज्ञाय भिषग्वरेण्यो मयूरचूर्णं क्रमशः क्षिपेद्धि ॥२४॥
क्षारां विशुष्कां च समान्तु दत्त्वा सञ्चालयेद्धि वृषदण्डदर्व्या।
सुचूर्णितञ्चाथ विलोक्य वैद्यः प्रक्षालयेदच्छजलेन कामम् ॥२५॥
चूर्णं समादाय ततो रसज्ञस्तुल्यां मनोज्ञां विमलां तु दत्त्वा।
वासारसेनाथ विमर्द्य सम्यक् पुटेत् त्रिवारं रसतन्त्रवैद्यः ॥२६॥
भस्म संजायते श्लक्ष्णं विशदं कज्जलप्रभम्।
पक्षाघातादिकान् नागदोपान् नैव करोति च ॥२७॥
सुचिरं सेवनेनापि विकारान्नैव दर्शयेत्।
अतो रसायनाचार्यो वीतशङ्कः प्रयोजयेत् ॥२८॥

भस्म चास्य श्लक्ष्णमपि विशदं न तु पिच्छिलम्। वर्णतस्तु कज्जलप्रभम्। पक्षाघातादिकान् दोपान् न करोति च मन.शिलया पक्वत्वादिति शेप: ॥११-१८॥

द्वितीयः प्रकारो मनःशिलाप्रक्षेपसाध्यः गन्धकेन त्रिधा पुटनात् सम्पादनीयश्च, वीतशङ्कः नागदोपभयरहितः ॥१९-२३॥

तृतीयः प्रकारः—मयूरचूर्णं अपामार्गचूर्णम्, वृषदण्डदर्व्या वासकस्यार्द्रकाण्डमेव दर्वी तया ॥२४-२८॥

चतुर्थो मारणप्रकारः।

नागं विशुद्धन्तु निधाय दर्व्यां प्रद्रावयेत्तीव्रतरानलेन।
द्रुतं समालोक्य भिषग्वरेण्यः पादांशमीशं द्रुतमेव दद्यात् ॥२९॥
द्रुतन्तु भूमाववतार्य खल्वे सम्पेषयेत्सत्वरमेव यत्नात्।
प्रक्षाल्य साम्लेन जलेन नूनं विशोष्य नीरं विदधीत चूर्णम् ॥३०॥
निक्षिप्य सीसाद् द्विगुणन्तु गन्धं सम्पेषयेद्यामयुगं प्रयत्नात्।
विलोक्य चूर्णं खलु कज्जलाभं निधापयेद्वैद्यवरः शरावे ॥३१॥

शरावसम्पुटस्थितं पुटेल्लघौ पुटे ततः।
स्वतः सुशीततां गते शरावमाहरेद्भिषक् ॥३२॥
विभिद्य सम्पुटात्ततः शुभं सुकज्जलप्रभम्।
मृतन्तु सीसमाहरेद्रसायनागमार्यमा ॥३३॥

पञ्चमो मारणप्रकारः।

चूर्णैर्मयूरादिसमुत्थितैस्तु चूर्णीकृतं सीसकमग्नियोगात्।
प्रक्षाल्य च क्षारहतिं विधाय सीसार्द्धमानं विमलालचूर्णम् ॥३४॥
दत्त्वाथ सम्पेष्य शरावसंस्थं पुटेत्प्रमाणार्हपुटै रसज्ञः।
स्वतः सुशीतन्तु विलोक्य विद्वान् समाहरेत्सम्पुटकं प्रयत्नात् ॥३५॥
रीत्यानया नातिचिरेण नूनमनुत्तमां याति मृतिन्तु सीसम्।
विलुप्तशङ्को भिषजां वरेण्यः प्रयोजयेद् भूतिमिमां रसेषु ॥३६॥

षष्ठो मारणप्रकारः।

नागं कटाहनिहितं द्रावयेद् वह्नियोगतः।
ततः शुद्धशिलाचूर्णं स्वल्पं स्वल्पं मुहुर्मुहुः ॥३७॥
समांशेन तु निक्षिप्य लोहदर्व्या प्रचालयेत्।
नागभस्म भवेद्यावच्चूर्णं तावत्समापयेत् ॥३८॥
ततः सीसोन्मितां शुद्धां शिलां दत्त्वा भिषग्वरः।
रविदुग्धेन सम्पेष्य पुटयेदतियत्नतः ॥३९॥
एवं नातिचिरादेव नागकं मृतिमाप्नुयात्।
इत्थं मृतं नागकन्तु सर्वयोगेषु योजयेत् ॥४०॥

चतुर्थः प्रकारः पारदगन्धकयोगसाध्यः। अत्र त्रिवारं गन्धकेन पुटनं कार्यम्। रसायनस्यागम शास्त्र तत्र अर्यमा सूर्यः रसायनशास्त्रान्धकारापसारणकर्मा अनुभवीत्यर्थः ॥२९-३३॥

पञ्चमः प्रकारः—क्षारहतिं प्रक्षालनेन क्षारांशविनाशम्॥ सोऽय तालकद्वारा निर्माणीय इति। विशेषः समानमन्यत्पूर्वेण ॥३४-३६॥

षष्ठः प्रकारः—शिलार्कदुग्धाभ्यां निर्माणीयः समानः पूर्वेण ॥३७-४०॥

सप्तमो मारणप्रकारः ।

सीसकं द्रावयेत्सत्कटाहस्थितं विद्रुतं वीक्ष्य वै वैद्यविद्याचणः ।
निक्षिपेच्चूर्णितं शुद्धसौगन्धिकं सीसकं सर्वथा याति यावन्मृतिम् ।४१
वीक्ष्य सम्यङ् मृतं सीसकं कोविदः स्वाङ्गशीते सति त्वाददीत द्रुतम् ।
सीसमेवं मृतं वीतशङ्को भिषग्योजयेत्सर्वथा बाह्ययोगेऽनिशम् ॥४२॥

अथ मृतसीसकस्य गुणाः ।

मृतन्तु सीसं मधुरञ्च तिक्तं स्निग्धं तथोष्णं गुरु लेखनञ्च ।
सरं तथा वह्निविवर्द्धनञ्च रसागमज्ञैः खलु सम्प्रदिष्टम् ॥४३॥

अपि च—

प्रमेहकरिकेशरी पवनरोगकालानलः
ग्रहण्यतिनिशारुणः खलु गुदाङ्कुरेभाङ्कुशः ।
बलासगदतस्करो व्रणगणैकसङ्कर्षणः ।
परं विजयतेतरां गदहरो भुजङ्गो मृतः ॥४४॥

अपि च—

नागस्तु नागसमतां द्रुतमातनोति
गुल्मद्विपं दलयतीह चिरप्रमत्तम् ।
घोरं हरेत्प्रदरमाशु हि रक्तपूर्वं
तूर्णन्तु रोगनिवहान् विनिहन्ति नूनम् ॥४५॥

मृतसीसकस्य मात्रा ।

पादांशतो रक्तिकाया रक्तिकैकामितं शुभम् ।
मृतं सीसं प्रयुञ्जीत बलकालाद्यपेक्षया ॥४६॥

सप्तमः प्रकारः केवलगन्धकक्षेपसाध्यो भक्षणायोग्यो मनःशिलादिप्रयोगसहयोगाभावात्, अत उक्तम् बाह्ययोगे इति । यथा बाह्यप्रयोगे प्रयुज्यते विदरेऽर्शःसु च नवनीतेन सह ॥४२॥

मृतनागगुणाः—उष्णमिति यद्यपि तन्त्रान्तरीयाः सीसकं स्पर्शशीतमालोक्य शीतवीर्यमाहुः, यद्यपि च वङ्गस्येवास्यापि क्षारयोगात् शैत्यं गन्धादियोगादौष्ण्यं संभवि तथापि मनःशिलादियोगाभावेन सिद्धस्य नागस्य भक्षणायोगात् शीतताऽनुपयोगादुष्णत्वमेवास्योक्तमाचार्यदेशीयैः, अपि च प्राचीनपरिभाषास्वपि नागस्योष्णता प्रतिज्ञातेति । प्रमेहकरिकेसरीत्यादिना रूपकेण प्रमेहरोगादिविनाशो मृतनागेन विशेषत उक्तः । नागसमतां हस्तितुल्यबलताम्, रक्तपूर्वं प्रदरं रक्तप्रदरम्, तूर्णं शीघ्रं, रोगनिवहान् रोगसङ्घान् । नूनं निश्चयेन ॥४३-४५॥

मृतसीसकमात्रा देशकालापेक्षयावधानीयेति आह पादांशतो रक्तिकायाः इत्यादिना ॥४६॥

अथ मृतसीसकस्य आमयिकः प्रयोगः ।

गुञ्जैकप्रमितं सीसं निशामलकसंयुतम् ।
मधुना शीलितं तूर्णं प्रमेहं विनिवारयेत् ॥४७॥
अशोकक्काथसंयुक्तं मृतं सीसन्तु शीलितम् ।
अचिरादेव चिरजं रक्तप्रदरमुद्धरेत् ॥४८॥
गुञ्जैकप्रमितं सीसं नागकेशरसंयुतम् ।
रक्तार्शसं निहन्त्याशु वृत्रमिन्द्राशनिर्यथा ॥४९॥
गुडूचिकासत्वरजोविमिश्रं मृतन्तु सीसं मधुनावलीढम् ।
विनाशयेन्नातिचिरेण नूनं बलासवातप्रभवन्तु मेहम् ॥५०॥
सुवर्णरससिन्दूरताम्राढ्यं खलु सीसकम् ।
शीलितं विनिहन्त्याशु त्वन्त्रशोथं सुदारुणम् ॥५१॥
आत्मगुप्तावलामूलमांसीकाथेन सीसकम् ।
वृक्कशोथसमुद्भूतमाक्षेपं नाशयत्यलम् ॥५२॥
रससिन्दूरताम्राढ्यं सीसकं परिशीलितम् ।
सर्वाङ्गकम्पनारब्धं हन्ति पक्षवधामयम् ॥५३॥
प्रसारणीवलारास्नाकपिकच्छूकषायतः ।
सतारव्यशदं सीसं सुमृतं परिशीलितम् ॥५४॥
अङ्गप्रसारणीपेशीगतदोषसमुत्थितम् ।
विनिहन्ति विशेषेण पक्षाघातं सुदारुणम् ॥५५॥

अन्त्रशोपान्तक रसः ।

शिलया निहतं सीसं तोलकद्वयसंमितम् ।
कान्तपाषाणभसितं सीसकप्रमितं शुभम् ॥५६॥
निश्चन्द्रिकं सुवर्णं तु तथा यशदकारणम् ।
गगनं रविलोहं च पृथक् तोलकसंमितम् ॥५७॥
सर्वार्द्धं गन्धकं दत्त्वा पेषयेत्कन्यकाम्भसा ।
त्रिधा वराहाख्यपुटे पुटयेद्भिपजां वरः ॥५८॥
खल्वे सञ्चूर्ण्य च ततो काचकुप्यां तु विन्यसेत् ।
समाख्यातो रसोऽयं तु ह्यन्त्रशोपान्तकाभिधः ॥५९॥

रोगयोग्य प्रयोगः—निशा हरिद्रा । बलासवातप्रभवमिति बलासः कफः, ततश्च कफवातजातमित्यर्थः । अन्त्रशोथवृक्कशोथसमुद्भूताक्षेपकादिनिवारकोऽस्य गुणः प्राचीनापरिभाषितोऽप्यनुभवादुक्तः । अङ्गप्रसारणीपेशीगतो दोषो वातसंस्थानदुष्टिहेतुः तस्माजातं पक्षाघातम् ॥४७-५५॥

अन्त्रशोपान्तकरसो नवाविष्कृतः—यशदकारणं खर्परम् । रविलोहं ताम्रम्।

श्रीमद्भिर्गुरुवर्यैस्तु ह्ययमाविष्कृतो रसः ।
प्रकाशितः खलु मया लोकानुग्रहकाम्यया ॥६०॥

अस्य गुणाः ।

अन्त्रशोषापहरणो ग्रहणीविनिवारणः ।
जीर्णाजीर्णप्रहरणो यक्ष्मलक्ष्मनिबर्हणः ॥६१॥
अरोचकाद्युपगतं दारुणं दीर्घकालजम् ।
अतीसारं निहन्त्याशु कामं यक्ष्मसमाश्रयम् ॥६२॥
आध्मानापहमत्यन्तं गुल्मप्लीहनिषूदनम् ।
जीर्णज्वरप्रशमनं बलसञ्जननं परम् ॥६३॥
गुञ्जार्द्धतः समारभ्य गुञ्जैकप्रमितं परम् ।
प्राणाचार्यः प्रयुञ्जीत बलकालाद्यपेक्षया ॥६४॥

अथ आरनालीयसीसकस्य नामानि ।

काञ्जिकाम्लीयसीसञ्च त्वारनालीयसीसकम् ।
तदेव च समाख्यातं काञ्जिकाम्लीयनागकम् ॥६५॥

आरनालीयसीसस्य निर्माणप्रकारः ।

चत्वारिंशद्भागिकन्तु सुतीव्रं काञ्जिकाम्लकम् ।
परिस्रुतञ्च विमलं जलं विंशतिभागिकम् ॥६६॥
मृद्दारश्रृङ्गचूर्णन्तु चतुर्विंशतिभागिकम् ।
काचपात्रे सुविमले स्थापयेद्भिषजां वरः ॥६७॥
चुल्लिकायां निधायाथ कामं मन्दाग्निना पचेत् ।
द्रवीभूतं ततो ज्ञात्वा चुल्लीतस्त्ववतारयेत् ॥६८॥
ततः सारकपत्रेण स्रावयेदतियत्नतः ।
पुनर्मन्दानलेनैव स्रावितं सलिलं पचेत् ॥६९॥
किञ्चिज्जलांशशेषे च पात्रमाश्ववतारयेत् ।
स्वाङ्गशीतं समालोक्य ततः पात्रतलस्थितान् ॥७०॥

निगदव्याख्यातमन्यत् ॥५६-६०॥

अस्य गुणाः—जीर्णाजीर्णं पुराणमजीर्णम्, तस्य प्रहरणो नाशक इत्यर्थः। यक्ष्मणो लक्ष्म लक्षणं तस्य निबर्हणो नाशकः। स्पष्टमन्यत् ॥६१-६४॥

अथ नवीनपरिभाषित आरनालीयसीसनिर्माणप्रकारः—तत्रादौ आरनालीयसीसकनामानि काञ्जिकाम्लीयसीसकमित्यादिना ॥ सुतीव्रं काञ्जिकाम्लकं अनुपदं वक्ष्यमाणप्रकारम् । मन्दाग्निना पाको मृद्दारश्रृङ्गान्तर्गतनागभागद्रावसम्भावनार्थः, उत्क्रमानक्षिप्तजलशेषे हि यथा नागभागद्रुतिर्जायेत, न च प्रागेव नागद्रवात् जलांशशोषः स्यादिति भावः । अतियत्नतः सारणञ्च

आरनालीयसीसस्य हिमकुन्देन्दुसन्निभान् ।
सूक्ष्मान् कणान् निपतितान् भिषग्रत्नः समाहरेत् ॥७१॥

अथ आरनालीयकसीसद्रवस्य निर्माणप्रकारः ।

आरनालीयसीसन्तु निर्मलं शरभागिकम् ।
सार्द्धत्रिभागिकञ्चैव शुद्धं मृद्दारश्रृङ्गकम् ॥७२॥
परिस्रुतश्च विमलं जलं विंशतिभागिकम् ।
सम्मेल्य काचपात्रे च चुल्लिकायां निधापयेत् ॥७३॥
पचेन्मन्दाग्निना तावत् यावदेति द्रुतिं पराम् ।
यावज्जलं प्रशुष्येत द्रुतिपर्यन्तमग्निना ॥७४॥
विनिक्षिपेज्जलं तावद्रसतन्त्रविचक्षणः ।
काचकुप्यां निधायाथ भिषग्रत्नः प्रयोजयेत् ॥७५॥

प्रसङ्गात् सुतीव्रकाञ्जिकाम्लस्य निर्माणप्रकारः ।

अत्यम्लं निर्मलं शुक्तं गृहनीरमथापि वा ।
समाहरेद्भिषग्वर्यो रससेरकसंमितम् ॥७६॥
काचालिप्ते तु मृत्पात्रे नाडिकायन्त्रयोगतः ।
पचेन्मन्दाग्निना तावत्पञ्चसेरकसंमितम् ॥७७॥
यावत्तु गृहनीरस्थं जलांशं न परिस्रवेत् ।
परिस्रुताम्बुसन्त्यक्तं जायते तीव्रकाञ्जिकम् ॥७८॥

अथ सजलारनालीयकसीसद्रवस्य निर्माणप्रकारः ।

आरनालीयकाहेस्तु द्रवे शुभ्रांशुभागिके ।
निक्षिपेद्रसतन्त्रज्ञस्तन्मितां निर्मलां सुराम् ॥७९॥

मारितजलस्यात्यन्तनिर्मलतातात्पर्येणोक्तम् ॥६५-७१॥

अथारनालीयकसीसद्रवस्य निर्माणम्—आरनालीयक इत्यत्र "अल्पार्थे कन्" इत्यल्पार्थे कन् प्रत्ययो विहितः। तेनाङ्ग्लभाषाप्रसिद्ध "Sub" इत्युपसर्ग प्रत्यायक इत्यवधेयम्। आरनालीयसीसं पूर्वोक्तसाधनं पञ्चभागिकम्, मृद्दारश्रृङ्गं जलधौतपिष्टं शुद्धं सार्धत्रिभागिकम्, परिस्रुतजलस्य २० भागाः। मन्दाग्नौ द्रावयेत्। द्रुतौ सत्यां परिस्रुतजलस्य यावानंशो वह्निना शुष्कस्तावदेवान्यत् जल तत्र द्रुतौ क्षेप्यम् इत्याशय.। ततः काचकुप्यां निधानमिति ॥७२-७५॥

प्रासङ्गिकः सुतीव्राम्लकाञ्जिकनिर्माणप्रकारः—गृहनीरं काञ्जिकं रससेरक षट् सेरकम्। नाडिकायन्त्रमर्कनिष्कासनयन्त्रम्। ५ सेरकं परिस्रुत च तस्माज्जल त्याज्यम्। एवं सति प्रभूतजलभागापनयात् सुतीव्रता भवति काञ्जिकस्येति ॥७६-७८॥

शुभ्रांशुभागिक इति शुभ्रांशुश्चन्द्रः तस्मादेकभागिके इति सम्पन्नम्।

परिस्रुतश्च सलिलं शुद्धं वस्वश्वभागिकम् ।
दत्त्वा सम्मेलयेद्वैद्यः काचकुप्यां निधापयेत् ॥८०॥
अयमेव समाख्यातो रसायनविचक्षणैः ।
द्रवः खलु ससलिलः काञ्जिकीयकसीसजः ॥८१॥

अथ सजलारनालीयकसीसद्रवस्य प्रयोगक्रमः ।

आरनालीयकाद्युत्थं द्रवन्तु सजलं भिषक् ।
सलिले सप्तगुणिते सम्मेल्य विनियोजयेत् ॥८२॥

अस्य आमयिकः प्रयोग. ।

जलाभस्राविणां दाहवतां पूयवतामपि ।
व्रणानां धावनार्थन्तु विधानज्ञः प्रयोजयेत् ॥८३॥
मेढ्रमार्गेण चेन्नॄणां व्रणमेहस्य हेतुना ।
स्रावो जायेत मतिमान् वस्तिकर्मविचक्षणः ॥८४॥
आरनालीयकाद्युत्थं द्रवन्तु सजलं तदा ।
जलेनोद्दिष्टमानेन युञ्जीतोत्तरवस्तिना ॥८५॥
रक्तिद्वयमितं सारं त्वहिफेनसमुद्भवम् ।
षष्टिविन्दुमितञ्चैव काञ्जिकाम्लीयकाहिजम् ॥८६॥
द्रवन्तु सजलञ्चाथ सार्द्धकोलद्वयं जलम् ।
सम्मेल्य भिषजांवर्यस्त्वक्शोफे तु विसर्पजे ॥८७॥
अभिघातोत्थशोथे च घृष्टसंपिच्चितास्थिषु ।
धावनार्थं प्रयुञ्जीत सर्वथैव विधानतः ॥८८॥
अभिघातोत्थितं दाहं कण्डूतिञ्च हरेद् ध्रुवम् ।
योनिपायुप्रदेशोत्थां कण्डूतिञ्चापि नाशयेत् ॥८९॥
नागद्रवं त्वन्तराले मणिशिश्नाग्रचर्मणोः ।
काचवस्तिप्रयोगेण शल्यवित्तु प्रदापयेत् ॥९०॥
फिरङ्गजं महाघोरं शोथदाहरुजान्वितम् ।
नाशयेदाशु योगोऽयं निरुद्धप्रकशामयम् ॥९१॥

तन्मितामेकभागाम्, वसवोऽष्टौ अश्वाश्च सप्त वामतो गतिन्यायात् ७८ भागिकमिति निष्पन्नम् ॥७९-८१॥

अस्य च प्रयोगसमये भूयः सप्तगुणजलमेलनं विधेयमिति ॥८२॥

अस्य रोगयोग्यः प्रयोगः—फिरङ्गोपद्रवे निरुद्धप्रकशे छेदनेन नव्या रुग्णस्य महतीं व्यापदमापादयन्ति इति तत्रापि उक्तनागद्रवस्यैव काचवस्तिद्वारा निवेशात् लाघीयसी भवति सिद्धिरित्यभिनव एवास्य प्रभूतफलः प्रयोगप्रकार उद्भावित आचार्य्यैरिति तदेतदाह नागद्रवन्त्वन्तराले इति ॥८३-९१॥

अस्य प्रयोगानिषेधः।

अक्ष्णोर्नाञ्जीत मतिमान् खलु द्रवमिमं भिषग्।
अञ्जनेन भवेदान्ध्यं व्रणशुक्रमथापि वा ॥९२॥

अथ अशुद्धामृतसीसकसेवनविकृतौ विधानम्।

अविशुद्धामृताद्युत्थविकारपरिशान्तये।
विशुद्धगन्धचूर्णन्तु योजयेद् भिषजां वरः ॥९३॥

अथ यशदस्य नामानि।

यशदं यसदञ्चैव जशदं जसदं तथा।
रीतिहेतुः खर्परजं समाख्यातं भिषग्वरैः ॥९४॥

ग्राह्ययशदस्य स्वरूपम्।

छेदे समुज्ज्वलं स्निग्धं मृदुलं निर्मलं तथा।
द्रुतद्रावं महाभारं यशदं ग्राह्यमुच्यते ॥९५॥

अग्राह्ययशदस्य स्वरूपम्।

कठिनं कठिनद्रावं रूक्षं रूक्षप्रभं लघु।
मलिनं यशदं यत्तु तदग्राह्यं प्रकीर्तितम् ॥९६॥

अथ यशदशोधनस्य प्रयोजनम्।

विशुद्धिहीनं यशदं मृतञ्चेद् विशोधितं वाप्यमृतं त्वविज्ञैः।
निषेवितं वै जनयेद् विकारान् गुल्मप्रमेहक्षयकुष्ठकादीन् ॥९७॥

यशदस्य प्रथमः शोधनप्रकारः।

जात्यं यशदमादाय लोहदर्व्यान्तु विन्यसेत्।
तीव्राग्निना तु विद्राव्य चूर्णवारिप्रपूरिते ॥९८॥
सच्छिद्रेण पिधानेन पिहितास्ये घटे क्षिपेत्।
सप्तवारं प्रयत्नेन यशदं शुद्धिमाप्नुयात् ॥९९॥

द्वितीयः शोधनप्रकारः।

यशदं द्रावितं यत्नात् सप्तवारं विधानतः।
सिन्दुवारशिफाद्रावे स्नपयेद्भिषजां वरः ॥१००॥

अस्य च द्रवस्य भ्रान्त्यापि चक्षुषोर्नोपयोग इत्याह—अक्ष्णोर्नाञ्जीतेति ॥९२॥
अशुद्धसीसकभक्षणदोषश्च शुद्धगन्धकसेवनादपनेयः ॥९३॥
यशदनामानि व्यवहृतप्रायाणि ॥९४॥
महाभारं भारवत्तरम्, मूर्तिलघुत्वेऽपि बहुभारमित्यर्थः ॥९५-९६॥
अशुद्धं यशदं गुल्मादीन् जनयतीति तस्माच्छोध्यम् ॥९७॥
यशदशोधनं चूर्णवारिणि सप्तधा निर्वापणाद् भवति प्रथमम्। अथवा

रीत्यानया तु यशदं शुद्धिमायात्यनुत्तमाम् ।
एवं शुद्धन्तु यशदं मारणाय प्रयोजयेत् ॥१०१॥

तृतीयः शोधनप्रकारः ।

यशदं द्रावितं यत्नाद् गोदुग्धे स्नपयेद्भिषक् ।
त्रिसप्तवारं यत्नेन यशदं शुद्धिमाप्नुयात् ॥१०२॥

चतुर्थः शोधनप्रकारः ।

प्रद्राव्य यशदं वैद्यः सुधादुग्धे निषेचयेत् ।
सप्तवारं प्रयत्नेन शुद्धिमायात्यनुत्तमाम् ॥१०३॥

अथ यशदस्य प्रथमो मारणप्रकारः ।

शुद्धं यशदमादाय कटाहे तीव्रवह्निना ।
प्रद्राव्य भिषजां वर्यः समपारदगर्भके ॥१०४॥
खल्वे विनिक्षिपेद्यत्नात्ततः सम्पेषयेद् द्रुतम् ।
पिष्टिं विधाय यत्नेन क्षालयेन्निम्बुवारिणा ॥१०५॥
यशदप्रमितं गन्धं दत्त्वा सञ्चूर्णयेत्ततः ।
शरावसम्पुटस्थन्तु पुटयेदथ यत्नतः ॥१०६॥
रीत्यानया तु यशदं मृतिमायात्यनुत्तमाम् ।
इत्थं मृतन्तु यशदं सर्वयोगेषु योजयेत् ॥१०७॥

द्वितीयो मारणप्रकारः ।
[ गीतिका ]

यशदं विशुद्धमादौ विनिधाय वै कटाहे ।
अतितीव्रवह्नियोगात् खलु गालयेन्निकामम् ॥१०८॥
दृढनिम्बदण्डदर्व्या परिचालयेत्प्रयत्नात् ।
सुमृतं ततो विलोक्य त्ववतारयेत्कटाहम् ॥१०९॥
विमलं प्रदाय तालं चरणांशिकं रसज्ञः ।
खलु पेषयेत्प्रयत्नात् पुटवित् पुटेत् पुटस्थम् ॥११०॥
रीत्यानया तु यशदं मृतिमेति निर्विशेषाम् ।
विविधानुपानयोगाद् वितरेत्तु वीतशङ्कः ॥१११॥

सप्तवारं निर्गुण्डीमूलरसे निर्वापणेन शुद्धिः । यद्वा एकविंशतिधा गोदुग्धे निर्वापणात्, स्नुहीदुग्धे सप्तधा निर्वापणात् । प्राचीनैस्तु यशदशोधनमारणं वङ्गस्येवेति परिभाषितम् । तत्तु विस्तरप्रियैराचार्य्यैरनादृतम् अनुभूतचरं निर्णीतञ्चेति ॥९८-१०३॥

अथास्य मारणप्रकारः प्रथमः सूतगन्धकयोगजातः । निम्बुवारिभिः क्षालनं पिष्टिवैमल्यार्थम् । व्याख्यातप्रायपाठमन्यत् ॥१०४-१०७॥

द्वितीयः प्रकारः तालकयोगसाध्यो निगदव्याख्यातश्च १०८-१११॥

तृतीयो मारणप्रकारः ।

यशदं विमलं न्यस्य कटाहे गालयेद्भिषक् ।
अपामार्गस्य चूर्णञ्च स्वल्पं स्वल्पं मुहुर्मुहुः ॥११२॥
विनिक्षिपेद् भिषग्वर्यो लोहदर्व्याथ चालयेत् ।
भस्म यावद् भवेत्सम्यक् चूर्णं तावत् समापयेत् ॥११३॥
राशीकृत्य ततो भस्म शरावेण पिधापयेत् ।
ज्वलदङ्गारवर्णं स्याद्यशदं तु यथा चिरम् ॥११४॥
तथा प्रदीपयेदग्निं दिनमेकं भिषक्तमः ।
स्वतः शीतं ततो ज्ञात्वा यशदं मृतमाहरेत् ॥११५॥

चतुर्थो मारणप्रकारः ।

कटाहसंस्थं यशदं विमलन्तु शनैः शनैः ।
विघट्टयँल्लोहदर्व्या पचेत्तीव्राग्निना भिषक् ॥११६॥
यशदं चूर्णतां यातं वस्त्रपूतन्तु कारयेत् ।
स्थूलांशञ्च पुनः कामं कटाहस्थं विपाचयेत् ॥११७॥
एवं नातिचिरादेव यशदं मृतिमाप्नुयात् ।
कुन्देन्दुधवलं भस्म जायते चातिशोभनम् ॥११८॥
रीत्यानया खलु मृतं यशदन्तु विधानतः ।
नाचनाञ्जनकार्यादौ योजयेद्भिषजां वरः ॥११९॥

अथ सुमृतयशदस्य गुणाः ।

यशदं तुवरं शिशिरं कटुकं परमं नयनामयनाशकरम् ।
कफपित्तसमुत्थितरोगहरं बलवीर्यविवेकसमृद्धिकरम् ॥१२०॥
यशदं पाण्डुशमनं बहुमेहनिषूदनम् ।
कासश्वासप्रशमनं निशास्वेदनिवर्हणम् ॥१२१॥
यशदं परमं श्लेष्मकलासंकोचकृन्मतम् ।
समाख्यातं विशेषेण व्रणसंस्रावरोधनम् ॥१२२॥

तृतीयः प्रकार अपामार्गचूर्णक्षेपसाध्यो वङ्गस्येवाल्पव्ययो बहुफल श्चेति ॥११२-११५॥

चतुर्थः प्रकारः केवलं वाह्यप्रयोगयोग्यो भक्षणायानुपयुक्तः ॥ अत्र अतितीव्राग्निना यशदं पाच्यमित्यवधेयम् ॥११६-११९॥

मृतयशदगुणाः—यशदं शीतलम् । प्राञ्चोऽप्याहु—"यशद तुवरं तिक्तं शीतलं कफपित्तहृत् । चक्षुष्यं परमं मेहान् पाण्डुं श्वासञ्च नाशयेत्" इति ॥ बहुविधो मेहो बहुमेहस्तस्य बहुमेहस्य निषूदनं नाशकम्, निशास्वेद-

अमावसादशमनं रजःस्रावनिषूदनम् ।
कम्पवातापहं चैव विशेषात्परिकीर्तितम् ॥१२३॥

यशदस्य विशिष्टो गुणः ।

संशीलितं वै यशदं मृतन्तु विनाशयेदाशु भृशं विशेषात् ।
प्रसादसंज्ञं पवनं प्रवृद्धमेकाङ्गगं वै सकलाङ्गगं वा ॥१२४॥

मृतयशदस्य मात्रा ।

गुञ्जार्द्धतः समारभ्य गुञ्जैकप्रमितं मृतम् ।
यशदं विनियुञ्जीत बलकालाद्यपेक्षया ॥१२५॥

अथ यशदस्य आमयिकः प्रयोगः ।

एलादारुसितापत्रचूर्णेन परिशीलितम् ।
यशदं सुमृतं यत्नात् त्रिदोषं नाशयेद् ध्रुवम् ॥१२६॥
अग्निमन्थशिफावल्कचूर्णेन यशदं मृतम् ।
शीलितं ह्यचिरादेव दीपयेज्जठरानलम् ॥१२७॥
पुराणेन तु गव्येन सर्पिषा परिशीलितम् ।
भक्षितं यशदं यत्नात् द्रुतं दृष्टिं विवर्धयेत् ॥१२८॥
रक्तिकार्द्धमितं शुभ्रं यशदं वह्निजारितम् ।
सघृतं नस्ययोगेन प्रत्यहं मासमात्रकम् ॥१२९॥
पुनः पुनः समुद्भूतप्रतिश्यायसमुत्थितम् ।
नासिकाश्लैष्मिककलादौर्बल्यं विनिहन्त्यलम् ॥१३०॥
प्रवालभस्मसहितं यशदं परिशीलितम् ।
निहन्यादचिरादेव निशास्वेदं क्षयोत्थितम् ॥१३१॥
लिप्ता यशदविभूतिर्गव्येनाज्येन चात्र सप्ताहम् ।
नाशयतीह निकामं चिरजामपि विचर्चिकामचिरात् ॥१३२॥
मृतगगनसमेतं शीलितं क्षौद्रयुक्तं
सुमृतयशदचूर्णं रक्तिकैकप्रमाणम् ।

निवर्हणमित्यारभ्य गुणानां नवानुभवः । श्लेष्मकलासङ्कोचनं नस्यद्वारा वक्ष्यति हि "नासिकाश्लैष्मिककलादौर्बल्यं विनिहन्त्यलम्" इति ॥१२०-१२४॥

मृतयशदभक्षणीया मात्रा गुञ्जार्धतो गुञ्जां यावत् ॥१२५॥

अथास्य रोगयोग्यः प्रयोगः प्राचीनतन्त्रानुक्तोऽपि अल्पायासो बहुफल श्चेति । पत्रम् तेजपत्रम् । पुराणेनेति विशेषः । नचात्रात्यन्तं पुराणं कुम्भाह्वयं सर्पिर्ग्राह्यमिति तस्योन्मादौपयिकत्वेऽपि सर्वत्र भक्षणानर्हत्वात् इत्याचक्षीरन् नव्याः, तस्मात् वार्षिकं द्वित्रिवार्षिकं वा पुराणमादेयं स्यादिति, पुराणं हि स्वल्पश्लेष्मलं भवति तदेतत् ध्वनितं यत्नादित्यनेन पदेन इति, तन्न सम्यक्

हरति झटिति कासं श्वासकञ्चोग्रवेगं
व्यपनयति विशेषाद् राजरोगोत्थकासम् ॥१३३॥
आर्द्रकस्वरसोपेतं सक्षौद्रं यशदं मृतम् ।
शीलितं नाशयत्याशु श्वासं परमदारुणम् ॥१३४॥
आत्मगुप्ताशिफारास्नावलैरण्डकषायतः ।
कम्पयुक्तं पक्षवधं यशदं हन्ति शीलितम् ॥१३५॥
लोहाभ्रकसमायुक्तं यशदं परिशीलितम् ।
कणाक्षौद्रेण हन्त्याशु श्वासं प्रतमकाभिधम् ॥१३६॥
स्वर्णवङ्गसमायुक्तं यशदं परिशीलितम् ।
चित्तावसादसंयुक्तं स्वप्नमेहं व्यपोहति ॥१३७॥
अशोकत्वक्कषायेण यशदं परिशीलितम् ।
त्रिचतुर्मासरसम्भूतरजोरोधसमुत्थितम् ॥१३८॥
अतिप्रचलवेगेन जायमानं सुदारुणम् ।
तीव्रवेदनयोपेतं रजःस्रावं निवारयेत् ॥१३९॥
लोहसर्जरसोपेतं यशदं परिशीलितम् ।
निहन्ति शुक्लप्रदरं रजोरोधसमुत्थितम् ॥१४०॥
यशदं रससिन्दूरयुतं कर्पूरसंयुतम् ।
सप्रलापं कम्पवातं हन्ति वै सान्निपातिकम् ॥१४१॥
टङ्काभ्रवंशजायुक्तं यशदं परिशीलितम् ।
श्वासं निवारयत्याशु सकष्टकफनिर्गमम् ॥१४२॥
यशदं रससिन्दूरयुतं क्षौद्रेण शीलितम् ।
हन्ति मस्तिष्कदौर्बल्यं विषादश्रमसंयुतम् ॥१४३॥

तथाहि यद्यपि "योजयेन्नवमेवाज्यं भोजने तर्पणे श्रमे। बलक्षये पाण्डुरोगे कामलानेत्ररोगयोः" इति प्राचीनसंवादात् नेत्ररोगे नवीनघृतप्रयोगः साधुः, तथापि पुराणघृतस्यैव तिमिरापहत्वम्, नवीनस्य तु सामान्यतो नेत्ररोगनाशकत्वम्, पुराणत्वं च घृतस्य वर्षादूर्ध्वं भवत्येव। उक्तं हि—"वर्षादूर्ध्वं भवेदाज्यं पुराणं तत्त्रिदोषनुत् । मूर्च्छाकुष्ठविषोन्मादापस्मारतिमिरापहम्" इति । अपि च "यथा यथाऽखिलं सर्पिः पुराणमधिकं भवेत्। तथा तथा गुणैः स्वैः स्वैरधिकं तदुदाहृतम्" इत्यप्याहुः, तस्मात् प्रकृते तिमिररोगे पुराणस्यैव घृतस्योपयोग इति सिद्धम्। प्रवालभस्मसहितमिति प्रवालभस्म गुञ्जार्धं गुञ्जैकं वा, मृतं यशदं गुञ्जैकमेतद् द्वयं सम्मेल्य मधुना प्राशयेदिति सम्प्रदायः । राजरोगो यक्ष्मा तत्समुत्थं कासम्। आत्मगुप्ताशिफा मर्कटीमूलम् । कषायत इति सार्वविभक्ति-

सुवर्णभस्मसंयुक्तं यशदं परिशीलितम् ।
समाख्यातं विशेषेण योषापस्मारनाशनम् ॥१४४॥
सतारताप्यं यशदं चित्रककाथयोगतः ।
अर्धावभेदकं सूर्यावर्तं नाशयत्यलम् ॥१४५॥

अथ यशदामृतमलहरः ।

त्रिकर्षं सिक्थतैलन्तु पूर्वोक्तविधिसाधितम् ।
तोलकैकमितं दद्याद् यशदं वह्निजारितम् ॥१४६॥
खल्वेऽतिमसृणे क्षुद्रे मर्दयेदतियत्नतः ।
समाख्यातो मलहरो यशदामृतसंज्ञकः ॥१४७॥

अस्य गुणाः ।

मतो मलहरोऽयं तु विविधव्रणरोपणः ।
विचर्चिकाहरः काममग्निदग्धव्रणापहः ॥१४८॥

अथ गन्धकाम्लीययशदस्य निर्माणप्रकारः ।

विमलयशदचूर्णं काचपात्रे तु पूर्वं
विशदविपुलबुद्धिः स्थापयेद्वैद्यवर्यः ।
तदनु खलु सनीरं गन्धकाम्लं क्षिपेद्वै
द्रवति यशदचूर्णं यावता द्रावकेण ॥१४९॥
ततः सारकपत्रेण सारयेत्तु विधानतः ।
काचपात्रे निधायाथ पचेन्मन्दाग्निना भिषक् ॥१५०॥
द्रवांशं शोषयेद्यत्नाद्रसकर्मविचक्षणः ।
किञ्चिद्द्रवांशशेषे च पात्रं भूमौ निधापयेत् ॥१५१॥
समुज्ज्वलं सुधवलं काचपात्रतलस्थितम् ।
गन्धकाम्लीययशदचूर्णं शुद्धं समाहरेत् ॥१५२॥

गन्धकाम्लीययशदस्य गुणाः ।

गन्धकाम्लीययशदचूर्णं पूयघ्नमुत्तमम् ।
व्रणसंस्रावशमनं नेत्राभिष्यन्दनाशनम् ॥१५३॥
व्रणमेहहरं चैव श्वेतप्रदरकप्रणुत् ।
सङ्कोचकृद्विशेषेण कीर्तितं रसवेदिभिः ॥१५४॥
शुष्कं गन्धाम्लयशदं क्षारकर्मकरं परम् ।

कस्तसिः, तेन कषायेण सहेत्यर्थः । चित्तावसादः मानसः खेदः । टङ्कः टङ्कणम्, वंशजा वंशरोचना ॥१२६-१४५॥

यशदामृतमलहरः—वह्निजारितमिति चतुर्थमारणप्रकारेण साधितम् ॥

गन्धकाम्लीययशदः—अस्य च द्रुतस्यैव प्रायः प्रयोग इत्युक्तं रसवेदिभिः

त्तारकर्मप्रयोगार्थमतस्तद् विनियुज्यते ॥१५५॥
गन्धकाम्लीययशदं शुष्कं प्रायो न युज्यते ।
योजयेद्विधिना वैद्यो द्रवीकृत्य विधानतः ॥१५६॥

अथ गन्धकाम्लीययशदद्रवस्य प्रथमो निर्माणप्रकारः ।

गन्धकाम्लीययशदं रक्तिकैकमितं शुभम् ।
सार्द्धद्वितोलकमिते सलिले तु परिस्रुते ॥१५७॥
संद्राव्य खलु यत्नेन काचकुप्यां निधापयेत् ।
गन्धकाम्लीययशदद्रवोऽयं नामतो मतः ॥१५८॥

अस्य गुणाः ।

गन्धकाम्लीययशदद्रवोऽयं व्रणमेहहृत् ।
नेत्राभिष्यन्दशमनो रोपणो भूतनाशनः ॥१५९॥

अस्य आमयिकः प्रयोगः ।

विन्दुक्षेपकयन्त्रेण द्रवोऽयं लोचनार्पितः ।
विनिहन्त्यचिरादेव नेत्राभिष्यन्दजां रुजम् ॥१६०॥
मेढ्रमूलं दृढं बध्वा स्फीतकेन विधानतः ।
यत्नादुत्तरवस्त्युक्तविधानेन ह्यनारतम् ॥१६१॥
गन्धकाम्लीययशदद्रवोऽयं विनियोजितः ।
सप्ताहद्वितयेनैव व्रणमेहं व्यपोहति ॥१६२॥

गन्धकाम्लीययशदद्रवस्य द्वितीयो निर्माणप्रकारः ।

गन्धकाम्लीययशदं षट्त्रिंशद्रक्तिकोन्मितम् ।
परिस्रुते तु सलिले षष्टितोलकसंमिते ॥१६३॥
संद्राव्य खलु यत्नेन काचकुप्यां निधापयेत् ।
गन्धकाम्लीययशदद्रवोऽयं भाषितो बुधैः ॥१६४॥

अस्य गुणाः ।

गन्धकाम्लीयशदद्रवोऽयं व्रणरोपणः ।
सङ्कोचकृद्विशेषेण श्वेतप्रदरनाशनः ॥१६५॥

अस्य प्रयोगविधिः ।

यत्नादुत्तरबस्त्युक्तरीत्या तु विनियोजितः ।
द्रवोऽयं नाशयत्याशु श्वेतप्रदरमुल्बणम् ॥१६६॥

अथ यशदामृतद्रवस्य निर्माणप्रकारः ।

गन्धकाम्लीययशदं युगरक्तिकसंमितम् ।

नव्यरासायनिकैः ॥१४६-१५६॥

गन्धकाम्लीययशदद्रवः भूतनाशनः जीवाणुध्वंसी । अस्य च द्वितीयः प्रकारो

टङ्कणाम्लद्रवे रम्ये पञ्चतोलकसंमिते ॥१६७॥
निक्षिप्य खलु यत्नेन काचकुप्यां तु विन्यसेत् ।
समाख्यातो द्रवोऽयं तु यशदामृतसंज्ञकः ॥१६८॥

अस्य गुणाः ।

यशदामृतसंज्ञोऽयं द्रवः शोथप्रणाशनः ।
शिशिरश्चैव रक्तार्माभिष्यन्दादिनिषूदनः ॥१६९॥

अस्य आमयिकः प्रयोगः ।

बिन्दुक्षेपकयन्त्रेण द्रवोऽयं नेत्रयोजितः ।
विनिहन्त्याशु रक्तार्माभिष्यन्दाद्यक्षिगामयान् ॥१७०॥

इति सीसकादिविज्ञानीयो नाम एकोनविंशस्तरङ्गः ॥

---

## अथ लौहादिविज्ञानीयो विंशस्तरङ्गः ।

अथ लौहस्य भेदास्तेषां वैशिष्ट्यञ्च ।

मुण्डं तीक्ष्णं तथा कान्तं लौहं त्रिविधमुच्यते ।
मुण्डात्तीक्ष्णं ततः कान्तं प्रशस्तं परिकीर्तितम् ॥१॥

मुण्डलोहस्य नामानि ।

मुण्डं तथा मुण्डलोहं कृषिलोहं शिलात्मजम् ।
कृष्णायसं दृषत्सारमायसञ्च निगद्यते ॥२॥

तीक्ष्णलोहस्य नामानि ।

लोहो लौहं लोहकञ्च शस्त्रलोहञ्च तीक्ष्णकम् ।
सारलोहं काललोहं त्वयश्च तदिहोच्यते ॥३॥

कान्तलोहस्य नामानि ।

कान्तलोहं तथा कान्तं त्वयस्कान्तञ्च तन्मतम् ।
कान्तायसं महालोहं तदेव विनिगद्यते ॥४॥

मुण्डलोहादीनां परिचयः ।

कटाहपिष्टपचनखल्वादीनां विशेषतः ।

व्रणरोपणादिगुणाः सुगमपाठः ॥ युगरक्तिसम्मितमिति द्विरक्तिप्रमाणमित्यर्थः ॥

तत्रादौ लौहभेदाः यद्यपि प्राचीनाचार्यैः बहुविधाः सन्ति निर्दिष्टास्तथापि उपलभ्यमानप्रायिकलौहभेदाभिप्रायेणैव मुण्ड तीक्ष्णं कान्तमिति त्रेधा लोह संख्यानमुक्तमाचार्यैरिति । जातिभेदेन लोहगुणविनिर्णयविस्तरस्तु लोहसर्वस्वादावनुसन्धेयः। प्रकृते तु यथाप्राप्तं लोहत्रिकमेवादाय समन्वय इति। एषु चोत्तरोत्तरं गुणप्रकर्ष इत्याह मुण्डात्तीक्ष्णं ततः कान्तमिति ॥१॥

एतेषां नामानि कानिचित्स्वरूपनिर्णायकानि तन्त्रे व्यवहारार्थञ्चेति ॥२-४॥

निर्माणाय, मुण्डलोहं साम्प्रतं विनियुज्यते ॥५॥
कृपाणादिविनिर्माणे तीक्ष्णलोहं प्रयुज्यते ।
कान्तलोहञ्च कथितं बुधैः परमदुर्लभम् ॥६॥

मारणोचितं लौहम् ।

समलं मुण्डलोहं तु मारणाय न योजयेत् ।
तीक्ष्णलोहं कान्तलोहं यथालाभं प्रयोजयेत् ॥७॥

आद्यतीक्ष्णलोहस्य लक्षणम् ।

उज्ज्वलं लोहफलकं धात्रीकाशीसलेपितम् ।
गिरिशृङ्गाङ्कितं यत्स्यात्तीक्ष्णलोहं तदुत्तमम् ॥८॥

कान्तलोहस्य लक्षणम् ।

कान्तपाषाणजं लोहं कान्तलोहं प्रकीर्त्तितम् ।
आध्मातकान्तपाषाणसत्वभूतं तु तन्मतम् ॥९॥

लोहशोधनस्य प्रयोजनम् ।

हृदामयं पापरुजञ्च शूलं दाहं गुरुत्वं खलु पण्ढभावम् ।

एतेषां परिचयः साम्प्रतमुपयोगद्वारा निर्णीतरूप इत्याह कटाहेत्यादि, कान्तलोहञ्च यद्यपि भक्षणद्वारा गुणैरुत्तम तथापि यन्त्राद्यनुपयुक्तत्वादनुद्धृत प्राय खनेः इति दुर्लभ प्रायः। कान्तपाषाणाध्मानविनिर्गतन्तु क्वचित् प्राप्यत एवाधुनापि इति। आहुश्च रसमाधवाः—"मुण्डन्तु वर्तुलं भूमौ पर्वतेषु च जायते। गजवल्ल्यादि तीक्ष्ण स्यात् कान्तं चुम्बकसंभवम्" इति। "मुण्डात् कटाहपात्रादि जायते तीक्ष्णलोहतः। खड्गादिशस्त्रभेदाः स्युः कान्तलोहन्तु दुर्लभम् ॥" मुण्डात् शतगुणं तीक्ष्ण तीक्ष्णात् कान्तं शताधिकम्। तस्मान्मुण्ड परित्यज्य तीक्ष्णं वा कान्तमुत्तमम्" इति च। तदिदमुक्त समलं मुण्डलोहमित्यादिना ॥५-७॥

उज्ज्वलमित्यादि आद्यतीक्ष्णलोहलक्षणम्। आद्यस्तु—"कासीसामलककल्काक्ते लोहेऽङ्कं दृश्यते स्फुटम्। तीक्ष्णलोह तदुद्दिष्टम्" इत्याहुः। क्ष्माभृच्छिखराकाराण्यङ्कान्यम्लेन लेपिते। लोहे स्युर्यत्र सूक्ष्माणि तत्सारमभिधीयते" इति च ॥८॥

कान्तलोहन्तु आध्मातकान्तपाषाणसत्वभूतमेवेति तत्परिचयः केवलमुक्त। यद्यपि च प्राचीनतन्त्रेषु तत्र तत्र "यत्पात्रे न प्रसरति जले तैलबिन्दुर्निपिक्तो हिङ्गुर्गन्धं त्यजति च निजां तिक्ततां निम्बकल्कः। तप्तं दुग्धं भवति शिखराकारकं नैति भूमिं कृष्णाङ्गः स्यात् सजलचणकः कान्तलोहन्तदुक्तम्" इति कान्तलोह लक्षणमुक्तम्। तथापि एतल्लक्षणलक्षितलोहस्यानुपलभ्यत्वात् उपलभ्यमान कान्तपाषाणसत्वभूते च लोहे उक्तलक्षणानुपलम्भात् यथाप्राप्त तत्स्वरूपमात्र मुक्तमिति विचित्र लक्षण नोपश्लोकितमाचार्यैरित्यवधेयम् ॥९॥

लोहशोधनप्रयोजनं हृदामयमिति—पापरुज कुष्ठम्। उक्तं हि—"पण्ढ त्वक्कुष्ठामयमृत्युद भवेद् हृद्रोगशूलौ कुरुतेऽश्मरीञ्च। नानारुजानाञ्च तथा प्रकोपं करोति हृल्लासमशुद्धलोहम्" इति। अपिच—'गुरुता दृढतोत्क्लेदः कश्मलं दाह

प्रगाढविद्कत्वमथाश्मरीञ्च त्वशुद्धलोहं जनयत्यवश्यम् ॥१०॥

शोधनाय ग्राह्यलौहनिरूपणम्।

तीक्ष्णलोहस्य फलकान्यादय भिषजां वरः।
रेतयेल्लोहकारैस्तच्चूर्णं शुद्धयै प्रयोजयेत् ॥११॥

अथवा—

कृपाणादिविनिर्माणमुख्ययन्त्रालयादितः।
सुरेतितं तीक्ष्णलोहचूर्णं शुद्धयै नियोजयेत् ॥१२॥

अपि वा—

सूक्ष्मकण्टवेधीनि पत्राणि खलु कारयेत्।
लोहस्य लोहकारैस्तु तानि शुद्धयै नियोजयेत् ॥१३॥

शोधनाय लौहपरिमाणम्।

एकसेटकतस्तीक्ष्णं समारभ्य भिषग्वरः।
सेटकत्रयपर्यन्तं शोधयेन्मारयेत्तथा ॥१४॥

अथ लौहशोधनस्य प्रथमः प्रकारः।

तीक्ष्णलौहोत्थितं सूक्ष्मसूक्ष्मं रजो
दर्विकासंस्थितं वह्निसन्तापितम्।
सप्तधा स्नापितं त्रैफलेनाम्भसा
लौहमेवं द्रुतं याति शुद्धिं पराम् ॥१५॥

अत्र जलक्वाथ्यनिषेच्यानां परिमाणम्।

त्रैफलं वल्कलं वै कलाभागिकं नागनेत्रक्षपानाथभागं जलम्।

कारिता। अश्मदोषः सदुर्गन्धो दोषाः सप्तायसः स्मृताः" इत्यप्याहुः। इदमशुद्धस्य दोषकीर्तनम्। असम्यङ्मारितन्तु "जीवहारि मदकारि चायसं देहशूलकृदसंस्कृतं ध्रुवम्। पाटवं न तनुते शरीरके दारुणां हृदि रुजाञ्च यच्छति" इत्युक्तदोषम् ॥१०॥

शोधनाय ग्राह्यलोहरूपम्—यथायोग्यलाभं चूर्णितं पत्रीकृतम्वेति विकल्पः। सूक्ष्मकण्टकवेधीनि इति पत्रस्थूलतापरिमाणम्। प्राञ्चस्तु—"चतुरङ्गुलविस्तीर्णमायामैश्चतुरङ्गुलम्। तिलोत्सेधतनु चैव लोहपत्रं प्रचक्षते" ॥११-१२॥

मारणार्थं परिमाणन्तु एक सेटकतः इत्यादिनोक्तम्। प्राञ्चस्तु—"नायः पचेत् पञ्चपलादर्वागूर्ध्वं त्रयोदशात्" इत्याहुः। एतन्मानगणना च अनायाससम्पादनार्थम्, अत्यल्पमानमारणासंमतिस्तु बह्वायासाल्पफलत्वादुक्तेति ॥१४॥

लोहशोधनस्य प्रथमः प्रकारः—त्रिफलाजले निर्वापणात्, एतेन गिरिदोषशान्तिः इति प्राञ्चः ॥१५॥

अत्र परिभाषामानम्—त्रिफलायाः १६ भागाः, पाकार्थं जलम् १२८ भागिकम्, चतुर्थांशेशषभागेन सेचनीयलोहम् ४ भागिकम् इत्युक्तम्। प्राञ्चोऽप्याहुः "वरां चतुर्गुणां लोहात् ततो वारि चतुर्गुणम्। दत्त्वा निष्क्वाथयेत्तावत् यावत् पाद-

पाचितं शेषितं वेदभागोन्मितं सेचनीयं त्वयः पञ्चभागोन्मितम् ॥१६॥

द्वितीयः शोधनप्रकारः ।

अतिसूक्ष्मरजस्त्वयसो ज्वलने परितप्तमलं मुनिवारमिह ।
कदलीनवमूलजले नियतं विमलत्वमुपैति निषेचनतः ॥१७॥

तृतीयः शोधनप्रकारः ।

वराकषायसंयुते समे गवान्तु मूत्रके ।
निषेचितं तु सप्तधा त्वयो विशुद्धिमाप्नुयात् ॥१८॥

चतुर्थः शोधनप्रकारः ।

शशासृजा प्रलेपितं त्वयोऽर्कदुग्धतोऽपि वा ।
वराजले निषेचनाद् विशुद्धिमेत्यनुत्तमाम् ॥१९॥

अथ लौहशुद्ध्यनन्तरं तत्पाकक्रमः ।

प्रथमं भानुपाकेन स्थालीपाकात्ततः परम् ।
पुटपाकेन पक्वञ्च लौहं सुमृतिमाप्नुयात् ॥२०॥

तत्रादौ भानुपाकलक्षणम् ।

वराक्वाथयुतं लौहं भानोः प्रखरभानुभिः ।
शुष्यन् विपच्यते यस्माद् भानुपाकस्ततः स्मृतः ॥२१॥

अथ भानुपाकविधानम् ।

विमलं खलु लौहन्तु सलिलक्षालितं भिषक् ।
त्रिफलाक्वाथसंयुक्तं ततः खल्वे निधापयेत् ॥२२॥

स्थितं भवेत्" इति । "त्रिफलाष्टगुणे तोये त्रिफलाषोडश पलम् । तत्क्वाथे पादशेषे तु लोहस्य पलपञ्चकम् ॥ कृत्वा पत्राणि तप्तानि सप्तवारं निषेचयेत् । एवं प्रलीयते दोषो गिरिजो लोहसम्भवः" इति च ॥१६॥

अपरः प्रकारः—कदलीमूलजलेन सप्तधा सेचनात् सम्पाद्यः । उक्तं हि—"तप्तानि सर्वलोहानि कदलीमूलवारिणि । सप्तधाभिनिषिक्तानि शुद्धिमायान्त्यनुत्तमाम्" इति ॥१७॥

तृतीयो निगदव्याख्यातः ॥१८॥

चतुर्थः शशरुधिरेणलेपनादर्कदुग्धलेपनाद्वा साध्यः । एतच्च कान्तलोहस्य प्रायः । उक्तं हि—"शशरक्तेन संलिप्तं किम्वार्कपयसायसम् । दग्धं हुताशने तप्त सिक्तं त्रैफलवारिणि ॥ त्रिशः कान्तस्य सशुद्धिरित्येव परमा भवेत्" इति । यद्वा "तप्तं क्षाराम्लसंयुक्तं शशरक्तेन भावितम् । कान्तलोहं भवेच्छुद्ध सर्वदोषविवर्जितम्" इत्याहुः । अपि च "तत्तद्द्रव्याद्युपयुक्तानामौषधानां जलेऽयसः । प्रक्षेप प्राह तत्त्वज्ञ, सिद्धो नागार्जुनः पुरा ॥" इति रसमाधवे ॥१९॥

पाकक्रमो निगदव्याख्यातः ॥२०॥

भानुपाकलक्षणं व्याख्यासमपाठम् ॥२१॥

सोऽयं भानुपाकप्रक्रियाभेदो नागार्जुनादिसमतः साम्प्रतमप्रचलितोऽपि

निदाघे तु निधायाथ भानोः प्रखरभानुभिः ।
शोषयेद्भिषजां वर्यः कुर्यादेवं तु सप्तधा ॥२३॥
भानुपाके लौहतुल्या त्रिफला द्विगुणं जलम् ।
पादावशेषितश्चाथ वराक्वाथं प्रयोजयेत् ॥२४॥

स्थालीपाकस्य लक्षणम् ।

त्रिफलाक्वथितोपेतं लौहं स्थाल्यां खराग्निना ।
शुष्यन् विपच्यते यस्मात् स्थालीपाकस्ततः स्मृतः ॥२५॥

स्थालीपाकविधानम् ।

भानुपाकविपक्वन्तु लोहं प्रक्षालयेदलम् ।
ततः स्थाल्यां तु विन्यस्य चुल्लिकायां निधापयेत् ॥२६॥
वराक्वाथेन सुपचेदतिवेलं खराग्निना ।
शोषयेत्सलिलं यत्नात् लोहकर्मविचक्षणः ॥२७॥
स्थालीपाके त्रिगुणिता वरा, षोडशिकं जलम् ।
अष्टभागावशिष्टश्च क्वाथमानं विधीयते ॥२८॥
शतमूलीभृङ्गराजहस्तिकर्णशिफोत्थितैः ।
रसैः समैर्वापि भिषक् स्थालीपाकं समाचरेत् ॥२९॥
यथादोषौषधेनापि स्वरसं वा कषायकम् ।
आदाय क्वाथमानज्ञः स्थालीपाकं समाचरेत् ॥३०॥

पुटपाकस्य स्वरूपम् ।

रसादिभिर्भेषजानां खल्वे लौहं विमर्दितम् ।
पुटस्थं पच्यते यस्मात् पुटपाकस्ततः स्मृतः ॥३१॥

पुटपाकविधानम् ।

स्थालीपाकविपक्वन्तु लौहं प्रक्षालयेत्ततः ।
यथादोषौषधोत्थेन रसेन क्वथितेन वा ॥३२॥
लोहखल्वे सुसम्पेष्य चक्रिकाः कारयेत्ततः ।
आतपे खलु संशोष्य मृच्छरावे तु विन्यसेत् ॥३३॥
शरावेण पिधायाथ दृढं सन्धिं प्रलेपयेत् ।
वनानीतैः करीषैर्वा ह्युत्पलैर्हस्तपिण्डितैः ॥३४॥

गुणबहुलतयाऽऽदृत आचार्य्यैः ॥२२-२४॥

स्थालीपाकप्रकारोऽपि व्याख्यातप्रायपाठः ॥२५-३०॥

पुटपाकविधानन्तु स्थालीपाकप्रक्रियोत्तरं सहस्रधा शतधा षष्टिधा वा सम्पादनीयम् । प्रतिपुटं गुणतारतम्यसम्पत्त्यै । उक्तं हि—"पुटाद्दोषविनाशः

पुटेद्गजपुटेनेह पुटपाकक्रियापटुः ।
स्वाङ्गशीतं ततो ज्ञात्वा सम्पुटन्तु समाहरेत् ॥३५॥
पुनः पूर्ववदेवेह दत्त्वा क्वाथादिकं पुनः ।
सम्पेष्य सम्पुटे कृत्वा पुटेत्पुटविधानवित् ॥३६॥
सहस्रवारमथवा शतवारमथापि वा ।
षष्टिवारं पुटेद्वापि लौहं गुणविवृद्धये ॥३७॥
गुणोदयो भवत्येवं पुटनादुत्तरोत्तरम् ।
एवं पुटविपक्वन्तु लोहं सुसृतिमाप्नुयात् ॥३८॥

पुटपाके भेषजानां परिमाणम् ।

पुटपाके वरादीनि यथादोषौषधानि तु ।
लोहतुल्यानि गृह्णीयात् पुटपाककलापटुः ॥३९॥
यथा यथा पुटान्यत्र दीयन्ते सुविधानतः ।
भवेत्तथा तथावश्यमतिवेलं गुणोदयः ॥४०॥
न चैवं जनयत्येतल्लौहजां कोष्ठबद्धताम् ।
खरविट्कत्वमपि वा सुचिरं त्वपि सेवनात् ॥४१॥

लौहमारको गणः ।

त्रिफला शतमूली च सिंहिका तालमूलिका ।
नीलोत्पलश्च ह्रीवेरं दशमूलं पुनर्नवा ॥४२॥
वृद्धदारकमूलञ्च भृङ्गं विश्वं विडङ्गकम् ।
करञ्जशिग्रुनिर्गुण्डीसुरसैरण्डमूलकम् ॥४३॥
हस्तिकर्णपलाशश्च पर्पटश्चन्दनं वला ।
समाख्यातो गणोऽयन्तु लौहमारकसंज्ञकः ॥४४॥

अथ वातहरो गणः ।

एरण्डमूलं रास्नाथ दशमूलं प्रसारणी ।
मुद्गपर्णी माषपर्णी शतमूली पुनर्नवा ॥४५॥
अश्वगन्धामृता मांसी वला नागवला तथा ।
गणो वातहरोऽयन्तु वातामयहरः परम् ॥४६॥

स्यात् पुटादेव गुणोदयः । क्रियते च पुटाल्लोहं पुटांस्तस्मात्समाचरेत्" इति। अपि च "यथा यथा प्रदीयन्ते पुटाश्च बहवोऽयसि। तथा तथा प्रवर्धन्ते गुणाः शतसहस्रशः" इति तदेतदभिप्रेत्याह—यथा यथा पुटान्यत्र दीयन्ते सुविधानत इत्यादि ॥३१-४१॥

लौहमारकगणे सिंहिका वृहती । सुरसा तुलसी ॥४२-४४॥

वातहरो गणः—शतमूली शतावरी । अमृता गुडूची ॥४५-४६॥

पित्तनाशको गणः ।

उशीरनीरसिंहिकाकिरातभूरिपुत्रिकाः ।
पटोलचन्दनामृतासरोजतालमूलिकाः ॥४७॥
सुतिक्तशाल्मलीशिफासितामहीरुहामयाः ।
गणस्तु पित्तनाशको ह्ययं तु पित्तरोगहृत् ॥४८॥

कफनाशको गणः ।

रास्ना मरीचं चविका नागिनी विश्वभेषजम् ।
एरण्डः पिप्पलीमूलं तुलसी शृङ्गवेरकम् ॥४९॥
भार्ङ्गी रक्तार्ककुसुमं मूर्वा शिग्रु विभीतकम् ।
परं बलासगदजित् गणोऽयं कफनाशकः ॥५०॥

अथ लौहमारकगणे विशेषवक्तव्यम् ।

तत्तद्रोगघ्नभैषज्यैस्तत्तद्रोगापनुत्तये ।
यथालाभं पुटेत्कामं प्राणाचार्यो विचक्षणः ॥५१॥
पुटितस्यायसोऽभावे तत्तद्रोगघ्नभेषजैः ।
त्रिफलापुटितं लौहं सर्वत्र विनियोजयेत् ॥५२॥

अथ लौहस्य द्वितीयो मारणप्रकारः ।

निर्मलं त्वायसं तत्समं हिङ्गुलं कन्यकावारिणा निर्भरं पेषयेत् ।
घर्मसंशोषितञ्चाथ चूर्णीकृतं वारणाख्ये पुटे सम्पुटस्थं पुटेत् ॥५३॥
स्वाङ्गशीते पुनः खाद्रिसंख्यांशकं हिङ्गुलं मेलयेत् त्रैफलेनाम्भसा ।
भृङ्गवाराथवा पेषयेदायसं पूर्ववद्वै पुटेत् वृत्तसच्चाक्रिकम् ॥५४॥
इत्थमेवायसं खाब्धिसंख्यैः पुटैर्निश्चितं जायते रक्तपद्मप्रभम् ।
तीक्ष्णकं कान्तकञ्चापि लोहद्वयं यात्यवश्यं मृतिं त्वाशु चात्युत्तमाम् ॥५५

पित्तनाशकगणे नीरं बालकम्, भूरिपुत्रिका शतावरी, सुतिक्तः पर्पटः, महीरुहामयो लाक्षा ॥४७–४८॥

कफघ्नगणे—नागिनी ताम्बूलम् । बलासगदजित् कफरोगघ्न इत्यर्थः । अत्र व्याधिभेदेन मारकभेषजभेदो लोहसर्वस्वादावनुसन्धेयो विस्तरभयादत्र नोक्तः । त्रिफलापुटनन्तु सर्वत्र प्रशस्तमेवेति ॥४९–५२॥

अपरः प्रकारः हिङ्गुलकन्यकावारिभ्यां निर्माणीयः । तत्र प्रथमं लोहसमानं दरदं परतश्च विंशांशकमिति कृत्वा चत्वारिंशत्पुटानि सन्ति देयानि । क्वचित्तु "प्रक्षिपेद्द्वादशांशेन दरदं तीक्ष्णचूर्णतः । मर्दयेत्कन्यकाद्रावैर्यामयुग्मं ततः पुटेत् । एवं सप्तपुटैर्मृत्युं लोहचूर्णमवाप्नुयात्" इत्युक्तम् । परमयं प्रकारो नातिसमीचीनः ॥५३–५५॥

परिपेष्य चाथ यत्नाद् विद्धीत वस्त्रपूतम् ।
स्थूलावशिष्टलौहं शिलया पुनः पुटेद्धै ॥६८॥
त्रिफलार्द्रकाग्निभृङ्गद्वयहस्तिकर्णकानाम् ।
कुलिशस्य सूरणस्य स्वरसेन चाग्निमुख्याः ॥६९॥
स्वरसैः पुनर्नवायाः पुटयेच्च भूरिवारम् ।
पुटितन्तु लौहमेवं मृतिमेति निर्विशेषाम् ॥७०॥
विधिना त्वनेन यत्नाद् विहिता तु लौहभूतिः ।
गुदजामयप्रणुत्यै कथिता त्वतिप्रशस्ता ॥७१॥

षष्ठो मारणप्रकारः ।

विमलं कान्तलोहं तु पलपञ्चकसंमितम् ।
पादिकं मृतमाक्षीकं दत्त्वा निम्बूकवारिणा ॥७२॥
सम्पेषयेत्प्रयत्नेन शुष्कचूर्णञ्च कारयेत् ।
सम्पुटस्थं ततः कृत्वा पुटेद्गजपुटे ततः ॥७३॥
स्वाङ्गशीतं ततो ज्ञात्वा वस्त्रपूतञ्च कारयेत् ।
एवं पुटत्रयं दद्याद्रसतन्त्रविचक्षणः ॥७४॥
माक्षिकञ्च प्रतिपुटमवश्यं दापयेत्ततः ।
स्थूलावशिष्टलौहञ्च पुटेदेवं प्रयत्नतः ॥७५॥
उक्तपित्तघ्नभैषज्यैर्यथालाभमथापि वा ।
धात्रीरसेन पुटयेद्यावन्मृतिमवाप्नुयात् ॥७६॥
एतत्तु माक्षिकहतं कान्तलोहं भिषग्वरः ।
तत्तद्विशिष्टयोगेषु प्रयुञ्जीत विधानतः ॥७७॥

सप्तमो मारणप्रकारः ।

विशोधितं कान्तलोहं धात्रीस्वरसपेषितम् ।
पुटेद्गजपुटेनैव शतधा कृतचक्रिकम् ॥७८॥
शतधा पुटितं कान्तं यात्येवं मृतिमुत्तमाम् ।
रसायनं परमिदं तथायुष्करमुत्तमम् ॥७९॥

अथ लौहनिरुत्थीकरणम् ।

मृतं लौहं गव्यमाज्यं तथा शुद्धञ्च गन्धकम् ।

भल्लातकः। निगदव्याख्यातमन्यत् ॥६४-७१॥

तत्तद्विशिष्टयोगेषु इति यत्र यत्राचार्यैर्लौहस्य माक्षिकहतस्य योग उक्त-स्तत्र तत्र ॥७२-७७॥

सप्तमः प्रकारः केवलामलकरसीयो रसायनोपयुक्तः ॥७८-७९॥

दत्त्वा कन्याम्भसा पिष्ट्वा शुष्कचूर्णञ्च कारयेत् ॥८०॥
सम्पुटस्थं ततः कृत्वा पुटेद् गजपुटे भृशम् ।
इत्थमेकपुटेनैव भवेल्लौहं निरुत्थितम् ॥८१॥

निरुत्थीकृतलौहस्य परीक्षणम् ।

विविधविधिहतं यै त्वायसं तीक्ष्णकान्तं
घृतमधुपुरगुञ्जाटङ्कणत्तोदयुक्तम् ।
सुपुटितमनलस्थं चेन्न यात्यात्मभावं
भवति सुमृतमेतत्सर्वयोगोपयुक्तम् ॥८२॥

अथ मृतलौहस्य गुणाः ।

लौहं रूक्षं सुमधुरमलं पाकतश्चाथ तिक्तं
वीर्ये शीतं गुरु च तुवरं लेखनञ्चातिनेत्र्यम् ।
बल्यं वृष्यं जठरगदनुत् श्लेष्मपित्तामयघ्नं
वर्ण्यं मेध्यं खलु किमधिकं हन्त नानामयघ्नम् ॥८३॥

अपि च—

लौहं दीपनमुत्तमं क्षयहरं कुष्ठामयध्वंसनं
गुल्मप्लीहविधूननं क्रिमिहरं पाण्ड्वामयघ्नं परम् ।
मेदोमेहनिवर्हणं गरहरं दुर्नामरोगान्तकृत्
छर्दिश्वासहरं त्वलं बहुगिरा योगेन नानार्तिनुत् ॥८४॥

अपि च—

विसर्पकरिकेशरी प्रबलशूलनिर्मूलनः
क्षयक्षयकरः परं चिरजशोथसङ्कोचनः ।
यकृद्गदविधूननो गुदमहागदेभाङ्कुशः
परं विजयतेतरां विधिहतस्तु लौहो ह्ययम् ॥८५॥

अपि च—

श्वासं नाशयति क्रिमीन् कशयति वैवर्ण्यं क्षिणोति द्रुतं
शोषं शोषयति भ्रमं त्वपहरेच्छूलं समुन्मूलयेत् ।
कासं ह्रासयति क्षयं क्षपयति भ्रान्तिं निहन्त्यन्ततः
स्थौल्यं विह्वलयत्यलं दलयति श्लेष्मामयान् सर्वथा ॥८६॥

लौहनिरुत्थीकरणं रासायनिकप्रक्रियया सुगमम् ॥८०-८१॥

निरुत्थलौहपरीक्षणे—आत्मभावमपक्वलौहरूपताम् ॥८२॥

मृतलौहगुणाः—रूक्षं रूक्षणोपयोगि मेदोहरत्वादित्यर्थं, सुमधुरं विपाके, तिक्तं तुवरं कषायमिति च रसे। अपि च प्रकारभेदेन गुणसमुच्चयः लौहं दीपनमिति। दुर्नामरोगः अर्शांसि, योगेनेति युक्त्या प्रयुक्तमित्यर्थः ॥८३-८६॥

अथापरे गुणाः ।

पुरातनमतीसारं गण्डमालां नवोत्थिताम् ।
रजोरोधं वृक्कशोथं हृद्रोगं विषमज्वरम् ॥८७॥
फिरङ्गजं पाण्डुरोगं कामलाञ्च हलीमकम् ।
योषापस्मारकञ्चैव श्वेतप्रदरजां रुजम् ॥८८॥
मधुमेहं मांसतानं सभेदं शोषमुल्बणम् ।
तथैव ताण्डवगदं सूतिकाज्वरमेव च ॥८९॥
गलक्षतञ्चामवातं यकृद्रोगं भगन्दरम् ।
पीनसञ्चाम्लपित्तञ्च त्वाश्ववश्यं विनाशयेत् ॥९०॥
सामान्यतः श्रुतिपुटनासागर्भाशयादितः ।
अल्पां रक्तस्रुतिं प्रायोभाविनीमाशु नाशयेत् ॥९१॥
यौवनारम्भकालीनयोषित्पाण्ड्वामयं तथा ।
आमपक्वाशयगतक्षतजासृक्स्रुतिं जयेत् ॥९२॥
नाडीशूलमनिद्राञ्च पाण्ड्वामयसमुत्थिताम् ।
आमवातभवामस्थिविकृतिञ्चापि नाशयेत् ॥९३॥
शारीरिकरुजञ्चापि मानसीमवषण्णताम् ।
रजःक्षयसमुद्भूतां वार्द्धक्ये नाशयेद् ध्रुवम् ॥९४॥
वातसंस्थानदौर्बल्यं बहूत्थानसमुत्थितम् ।
अचिरादेव नियतं मृतं लोहं विनाशयेत् ॥९५॥
आरोग्योन्मुखकाले तु यस्य कस्यामयस्य वै ।
मृतं लौहं प्रशंसन्ति विशेषाद्बलवृद्धये ॥९६॥

अथास्य विशिष्टा गुणाः

शाखाश्रितं कोष्ठसमाश्रितं वा पित्तं विवृद्धन्तु मलाभिधेयम् ।

अथापरेऽपि लौहगुणाः प्राचीनतन्त्रानुक्ता अपि अनुभूतप्राया आविष्क्रियन्ते पुरातनमतीसारमिति । फिरङ्गजं पाण्डुरोगमिति विशेषतः तथाविधनिदानजातपाण्डुग्रहणम् । मांसतानम्—"प्रतानवान् यः श्वयथुः सुकष्टो गलोपरोधं कुरुते क्रमेण । स मांसतानः कथितोऽवलम्बी प्राणप्रणुत् सर्वकृतो विकारः" इत्युक्तम् ॥ सभेदं शोषं जराशोषादिसर्वविधशोषम् । ताण्डवगदम्—"वामबाहुं समारभ्य प्राय आदौ ततोऽपरम् । ततः पादौ ततोऽङ्गानि चालयेत्ताण्डवामयी ॥ मुष्टिना किमपि द्रव्यं सम्यग्धारयितुं क्षमः । समर्पयितुमास्ये वाप्यदनीयं न ताण्डवी" इति लक्षितः । आशु अवश्यमिति नियतानुभवज्ञापनम् । प्रायोभाविनीं बहुधा जायमानाम् । पाण्डुरोगोपद्रवामनिद्रामिति सम्बन्धः । अवषण्णतां विषादम् । वातसंस्थानं नाडिकाजालम् बहूत्थान-

मृतन्तु लौहं शमयेन्नितान्तं यथा समीरः खलु मेघवृन्दम् ॥९७॥

अस्य मात्रानिरूपणम् ।

आरभ्य गुञ्जपादांशात् गुञ्जाद्वितयसंमितम् ।
मृतं लौहं प्रयुञ्जीत प्राणाचार्यः प्रयत्नतः ॥९८॥

अस्य आमयिकः प्रयोगः ।

लौहं चतुर्जातयुतं सितया च समन्वितम् ।
शीलितं मात्रया तूर्णं रक्तपित्तं व्यपोहति ॥९९॥
वासाद्राक्षाकणाचूर्णयुक्तं लौहं निषेवितम् ।
विशेषात् खलु कासानां पञ्चतां पञ्चतां नयेत् ॥१००॥
भार्ङ्गीव्योषसमायुक्तं मृतं लौहं निषेवितम् ।
श्वासवेगं निहन्त्याशु मेघवृन्दं यथानिलः ॥१०१॥
कज्जलीपिप्पलीक्षौद्रयुतं लौहं तु शीलितम् ।
विनिहन्त्यचिरादेव विशेषात् श्लैष्मिकामयान् ॥१०२॥
शुण्ठीचूर्णयुतं लौहं वातबाधां व्यपोहति ।
रससिन्दूरसितया लौहं पित्तामयान् हरेत् ॥१०३॥
फलत्रिकसमायुक्तं मृतं लौहं निषेवितम् ।
सम्वत्सरप्रयोगेण वलीपलितनाशनम् ॥१०४॥
ताम्बूलवीटिकोपेतं लौहन्तु परिशीलितम् ।
रससिन्दूरसंयुक्तं वृष्यं वर्ण्यञ्च कीर्तितम् ॥१०५॥
हिङ्गुव्योषघृतोपेतं मृतं लौहं निषेवितम् ।
शूलशुन्मूलयत्याशु मेघवृन्दं यथानिलः ॥१०६॥
धात्रीकणाचूर्णयुतं तुल्यया सितया सह ।
लौहं विनाशयेद्रक्तपित्तञ्चैवाम्लपित्तकम् ॥१०७॥
विडङ्गत्रिफलामुस्ताशिखरीवीजसंयुतम् ।
लौहं विनाशयत्याशु भस्मकाख्यं महागदम् ॥१०८॥
गिरिजतुसमुपेतं शीलितं लौहचूर्णं
त्वभिनवकुशकाशक्वाथसंयोगतो वा ।

समुत्थित बहुहेतुजनितम् । विशेषतस्तु मलपित्तनाशकं भवति लौहमिति ॥८७-९७॥

मात्रानिरूपणं देशकालापेक्षमुचितमेव । प्राचीनैस्तु "गुञ्जामेकां समारभ्य यावत् स्युर्नवरक्तिका । तावल्लोह समश्नीयात्" इत्युक्तं यद्यपि तथापि यथा-दोषबलं द्विगुञ्जैव मात्राऽधुना युक्ततमेति ॥९८॥

रोगयोग्यः प्रयोगो लोहस्य—कासानां पञ्चतां पञ्चविधान् कासान् इति

प्रतनुदिवसमात्रेणैव नात्यल्पहेतुं
व्यपनयति विशेषाद्दारुणं मूत्रकृच्छ्रम् ॥१०६॥
पुनर्नवाढ्यं सुमृतन्तु लौहं प्रभूतगोक्षीररसानुपीतम् ।
मासत्रयेणैव जराकृशानां पुनर्नवत्वं प्रददाति नूनम् ॥११०
मृतसूतयुतं लौहं कटुकीद्रवभावितम् ।
मासद्वयप्रयोगेण सर्वाङ्गैकाङ्गवातहृत् ॥१११॥
घृतमधुविनियुक्तं वा हरिद्रारसाढ्यं
त्वशितमिह हि लौहं वापि कट्वीशिवाभ्याम् ।
अपहरति विशेषान्मासमात्रप्रयोगात्
सुचिरजमपि पाण्डुं कामलाञ्चातिघोराम् ॥११२॥
विमलवलिसमेतं क्षौद्रगव्याज्ययुक्तं
कलितरुफलपथ्याधात्रिकोद्भूतवारा ।
कृतसमुचितपथ्यो वर्षमात्रप्रयोगात्
जनयति युवभावं ज्यायसाञ्चापि पुंसाम् ॥११३॥
लौहं गोक्षुरक्षुद्रैलाचूर्णेन परिशीलितम् ।
विनिहन्त्यचिरादेव मूत्रकृच्छ्रं सुदारुणम् ॥११४॥
खदिरासनसाराभ्यां सप्तधा परिभावितम् ।
लौहं निषेवितं हन्ति कुष्ठादीन् विविधान् गदान् ॥११५॥
गन्धमारिततामाढ्यं लौहं तु परिशीलितम् ।
वलात्मगुप्ताकाथेन सर्वाङ्गैकाङ्गवातनुत् ॥११६॥
धात्रीरसहृतं कान्तलौहं त्रिफलयान्वितम् ।
सेवितं वर्षमात्रं तु परमायुष्करं मतम् ॥११७॥

प्रदरान्तकलोहः ।

लौहं द्वितोलकमितं रङ्गं तोलकसंमितम् ।
सुवर्णगैरिकञ्चैव गव्याज्यपरिपाचितम् ॥११८॥
श्वेतसर्जरसोद्भूतं चूर्णं कर्षद्वयोन्मितम् ।

भावः । पञ्चतां विनाशमित्यर्थः । शिखरीबीजं अपामार्गबीजम् । गिरिजतु शिलाजतु, अभिनवं यत्कुशकाशमूलं तत्क्वाथसंयोगतो वा इति वा शब्दः समुच्चये । नात्यल्पहेतुं प्रबलनिदानामित्यर्थः । दारुणं प्रभूतपीडाकरत्वात् । रसो मांसरसः, कट्वी कटुकी, शिवा हरीतकी । कलितरुफलं बिभीतकम् । ज्यायसां वृद्धानाम् ॥९९-११७॥

प्रदरान्तकलोहः—सर्जरसो रालः, मोचरसं शाल्मलीवेष्टम्, त्रिगुञ्जा मिता

सुचूर्णितं मोचरसं तोलकैकमितं शुभम् ॥११९॥
समादाय भिषग्वर्यः काचकुप्यां निधापयेत् ।
प्रदरान्तकलोहोऽयं नामतः परिकीर्तितः ॥१२०॥
अनुपानविभेदेन सर्वप्रदरनाशनः ।
रक्तचन्दनजक्वाथैर्वाशोकत्वक्कषायतः ॥१२१॥
निहन्ति रक्तप्रदरं विविधास्रावसंयुतम् ।
श्वेतचन्दनपङ्केन श्वेतप्रदरनाशनः ॥१२२॥

अथ मण्डूरस्य स्वरूपम् ।

प्रतापितस्य लोहस्य घनाघातच्युतं मलम् ।
कालेन पिण्डतां यातं क्षितौ, मण्डूरमुच्यते ॥१२३॥

मण्डूरस्य नामानि ।

मण्डूरं तु समाख्यातं किट्टं लोहभवं तथा ।
लोहकिट्टं लोहमलं लोहोच्छिष्टञ्च तन्मतम् ॥१२४॥

मण्डूरस्य प्राशस्त्यम् ।

षष्टिवर्षीयमधमं मध्यं सप्ततिवार्षिकम् ।
सर्वश्रेष्ठं समाख्यातं मण्डूरं शतवार्षिकम् ॥१२५॥

प्रकारान्तरेण ग्राह्यमण्डूरस्य स्वरूपम् ।

स्निग्धं गुरु दृढं चैव कृष्णं कोटरवर्जितम् ।
जीर्णनष्टपुरःस्थञ्च मण्डूरं ग्राह्यमुच्यते ॥१२६॥

मण्डूरस्य शोधनविधिः ।

ध्मातं विभीतकाङ्गारैर्गोमूत्रे परिषेचितम् ।
सप्तवारं लोहमलं शुद्धिमायात्यनुत्तमाम् ॥१२७॥

प्रकारान्तरेण मण्डूरस्य शोधनविधिः ।

प्रखरदहनतप्तं लोहकिट्टं पुराणं
विपुलसुरभिमूत्रे सप्तवारं निषिक्तम् ।

ऽन्य मात्रा प्राय' । स्पष्टमन्यत् ॥११८-१२२॥

अथ मण्डूरम्—तस्य लक्षण सरलपाठम् ॥१२३-१२४॥

मण्डूरप्रशस्तिः कालयोगतारतम्याद् गुणभेदभिन्ना । तथाहि—षष्टिवर्षीय-मधम गुणत इति शेषः, मध्यं सप्ततिवार्षिकम्, अन्यत्र तु "मध्यञ्चाशीति-वार्षिकम्" इत्युक्तम् । सर्वश्रेष्ठमिति पूर्वापेक्षयेति भाव'—वस्तुतस्तु शतवर्षोत्तरमुत्तरोत्तरं पुराणतायां गुणप्रकर्ष इति साम्प्रदायिका संभावयन्ति ॥१२५॥

जीर्णनष्टपुरःस्थमिति प्रायः अनेकशतवर्षपुराणतासम्पत्तेरित्यर्थः ॥१२६॥

ध्मातं विभीतकाङ्गारैरिति शुद्धिः "अक्षाङ्गारैर्धमेत्किट्टमिति" प्राचीनसंवादात ॥१२७॥

निगदितविधियोगान्मारणायानुरूपां
कलयति खलु शुद्धिं सत्वरं निर्विशेषाम् ॥१२८॥

अथ मण्डूरस्य मारणप्रकारः।

चूर्णीकृतं तु मण्डूरं त्रिफलाक्वथिताम्भसा।
सम्पेष्य सम्पुटे कृत्वा त्रिंशद्वारं ततः पुटेत् ॥१२९॥
एवं नातिचिरादेव रक्तचन्दनसप्रभम्।
मण्डूरं जायते तूर्णं ततो योगेषु योजयेत् ॥१३०॥
लोहमारकगणोदितैस्तु तैर्भेषजैरपि सह प्रपेषितम्।
लोहकिट्टमथ सम्पुटीकृतं पाचितं खलु समेति पञ्चताम् ॥१३१॥

मृतमण्डूरस्य गुणाः।

मण्डूरं सुमृतं वृष्यं शिशिरं रुचिरं परम्।
दीपनं पित्तशमनं रक्तवृद्धिकरं परम् ॥१३२॥
पाण्डुप्रमत्तमातङ्गमदमर्दनकेशरी।
कामलाकुड्यकुलिशं मण्डूरं तु विशेषतः ॥१३३॥
शोषप्रशमनञ्चैव तथा शोफप्रणाशनम्।
हलीमकं च प्लीहानं मण्डूरं हन्त्यशेषतः ॥१३४॥

मण्डूरस्य मात्रा।

आरभ्य गुञ्जापादांशाल्लोहमात्राविधानवित्।
गुञ्जाद्वितयपर्यन्तं मण्डूरं विनियोजयेत् ॥१३५॥

मण्डूरस्य आमयिकः प्रयोगः।

पुनर्नवाष्टकक्वाथसंयुक्तं लोहकिट्टकम्।
निषेवितं निहन्त्याशु शोफजां महतीं रुजम् ॥१३६॥
कट्वीफलत्रिकनिशायुग्मचूर्णेन शीलितम्।
मण्डूरमचिरादेव नाशयेत्कामलां ध्रुवम् ॥१३७॥
विडङ्गत्रिफलापञ्चकोलाब्दपरिशीलितम्।
मण्डूरं कृमिशोफार्शोग्रहणीप्लीहपाण्डुनुत् ॥१३८॥

प्रकारान्तरेण शोधनं बिभीतकाङ्गारालाभे सुलभम् ॥१२८॥

मण्डूरमारणप्रकारः—त्रिफलायोगसाधनीयः सुगमप्रायश्च ॥१२९-१३१॥

मण्डूरगुणाः—कामला एव कुड्यं भित्तिः तत्पातने कुलिशं वज्रमिवेति। अशेषतः सर्वथा ॥१३२-१३४॥

मण्डूरमात्रापि लोहवत् ॥१३५॥

मण्डूरस्य रोगयोग्यः प्रयोगः-निगदव्याख्यातः। पुनर्नवाष्टकक्वाथः-'पुनर्न-

रससिन्दूरसंयुक्तं मण्डूरं तु निषेवितम् ।
माससमात्रप्रयोगेण रक्तवृद्धिकरं परम् ॥१३६॥
दशमूलकषायेण मण्डूरं परिशीलितम् ।
सशोथं सज्वरं सातिसारं पाण्डवामयं हरेत् ॥१४०॥

इति लौहादिविज्ञानीयो नाम विंशस्तरङ्गः ।

---

## अथ उपधात्वादिविज्ञानीय एकविंशस्तरङ्गः ।

अथ सुवर्णमाक्षिकस्य नामानि ।

सुवर्णमाक्षिकं स्वर्णमाक्षिकं हेममाक्षिकम् ।
माक्षीकं माक्षिकञ्चैव ताप्यञ्च धातुमाक्षिकम् ॥१॥
माक्षीकधातुश्च तथा तापीजञ्चापि तन्मतम् ।
ईषत्सुवर्णसाहित्यात्सुवर्णगुणसाम्यतः ॥२॥
सुवर्णद्युतिमत्त्वाद्वा स्वर्णमाक्षिकमुच्यते ।
तापीतीरभवत्वाच्च ताप्यं तापीजमुच्यते ॥३॥

ग्राह्यसुवर्णमाक्षिकस्य लक्षणम् ।

स्निग्धं गुरु श्यामलकान्ति किञ्चित् कषे सुवर्णद्युतिसुप्रकाशम् ।
कोणोज्झितं स्वर्णसमानवर्णं सुवर्णमाक्षीकमिह प्रशस्तम् ॥४॥

हेयसुवर्णमाक्षिकस्य लक्षणम् ।

खरं परं वै गुरुताविहीनं प्रवृत्तकोणं खरलोहकाभम् ।
प्रकीर्तितं तत्परिहेयमेव सुवर्णमाक्षीकमिहामयज्ञैः ॥५॥

स्वर्णमाक्षिकशोधनस्य प्रयोजनम् ।

अशोधितं वामृतमप्यशुद्धं निषेवितं माक्षिकमक्षिबाधाम् ।

वानिम्बपटोलशुण्ठीतिक्तामृतादार्व्यभयाकषायः' इत्युक्तः ॥१३६-१४०॥

तत्र प्राधान्यादादौ स्वर्णमाक्षिकं तावद् विशदयति नामगुणकर्मभिः सुवर्णमाक्षिकमिति—नामबहुत्वं व्यवहारसुखायेत्युक्तपूर्वम् । ईषत्सुवर्णसाहित्यादिति सुवर्णमाक्षिकनामनिर्वचनं हेतुगर्भञ्चेति ॥१-३॥

ग्राह्यसुवर्णमाक्षिकं स्निग्धादिगुणम् । उक्तञ्चाभियुक्तैः—"स्वर्णाभं स्वर्णमाक्षीकं निष्कोणं गुरुतायुतम् । कालिमां विकिरेत्तत्तु करे घृष्टं न संशय." इति । 'स्वर्णवर्णं गुरु स्निग्धं ईषन्नीलच्छविस्फुटम् । कषे कनकवद् घृष्टं तद्वरं हेममाक्षिकम्" इति च । अतो विपरीतं हेयमिति तत्स्वरूपनिर्देशो व्याख्यातप्रायः ॥४-५॥

माक्षिकशोधनप्रयोजनं अशोधितं वा मृतमप्यशुद्धमित्यादिना । आहुश्च—"मन्दानलत्वं बलहानिमुग्रां विष्टम्भितां नेत्रगदान् सकुष्ठान् । मालां विधत्तेऽपि

मन्दानलं कुष्ठहलीमकादीन् कोष्ठानिलं वै जनयेन्नितान्तम् ॥६॥

स्वर्णमाक्षिकस्य प्रथमः शोधनप्रकारः।

सुवर्णमाक्षिकं लौहखल्वे तु खलु कुट्टयेत्।
सुकुट्टितं ततो ज्ञात्वा चालन्या परिचालयेत् ॥७॥
ततो माक्षिकचूर्णन्तु चालनीपरिगालितम्।
समादाय कटाहे तु स्थापयेद्भिषजां वरः ॥८॥
निम्बूकस्वरसं दत्त्वा पचेच्चुल्लीगतं ततः।
दर्व्या संचालयेत्तावद्यावत्स्यादुत्पलप्रभम् ॥६॥
ताप्यं तु यावल्लौहित्यं नीते तावत्प्रयत्नतः।
पुनर्निम्बूरसं दत्त्वा पचेत्तीव्राग्नियोगतः ॥१०॥
भृशं दिनत्रयं वापि द्विदिनं वा विधानतः।
पाचितं माक्षिकं नूनं शुद्धिमायात्यनुत्तमाम् ॥११॥

द्वितीयः शोधनप्रकारः।

वरं सुवर्णमाक्षिकं सुचूर्णितं समाहरेत्।
विधाय पोट्टलीगतं ततस्तु दोलिकागतम् ॥१२॥
पचेत्ततः समं श्रृतादशुक्लमारिषोत्थितात्।
ततस्तु पोट्टलीगतं पतत्यधो हि माक्षिकम् ॥१३॥
दिनैकमेवमाक्षिकं विपाचितं विधानतः।
विशुद्धिमेत्यनुत्तमां न कश्चिदत्र संशयः ॥१४॥

तृतीयः शोधनप्रकारः।

वरं सुवर्णमाक्षिकं प्रताप्य तीव्रपावके।
निषेचयेद्विधानवित् प्रशस्तनिम्बुकोदके ॥१५॥
त्रिसप्तवारमेव वै निषेचितं तु माक्षिकम्।

च गण्डपूर्वा शुद्ध्यादिहीनं खलु माक्षिकन्तु" इति ॥६॥

अथास्य शोधनप्रकारः प्रथमः—निम्बूकस्वरसयोगात् संपाद्यः। प्राचीनैस्तु अत्र सैन्धवदानमपि लिखितम् "माक्षिकस्य त्रयो भागाः भागैकं सैन्धवस्य च। मातुलुङ्गद्रवैर्वाथ जम्बीरस्य द्रवैः पचेत्" इत्यादिना, एतच्चात्रावधेयं यत् सैन्धवनिक्षेपद्वारा शोधितं माक्षिकं जलेन लवणांशापगमनपर्यन्तं क्षालनीयम्। अन्यथा वान्त्युत्क्लेशकरं भवतीति ॥७-११॥

द्वितीयः प्रकारः दोलायन्त्रसाध्यः। अशुक्लमारिषः मर्सा इति प्रसिद्धः शाकविशेषः। अत्र च सुसूक्ष्मचूर्णितं माक्षिकं निक्षिप्य शोधनीयं तच्च द्रुतं जलविलीनमधः पतति पाषाणांशश्च न पततीति विशेषः। अयं च प्राचीनोक्तो विधिः॥१२-१४॥

तृतीयः प्रकारो निर्माणसुगमः। गोत्रदूषणं खनिदोषः, अयञ्च प्रकारः

विशुद्धिमेत्यनुत्तमां जवेन नात्र संशयः ॥१६॥
प्रयासशून्यमार्गतस्त्वनेन गोत्रदूषणम् ।
सुवर्णमाक्षिकस्थितं विनश्यतीति निश्चितम् ॥१७॥

चतुर्थं शोधनप्रकारः ।

सुचूर्णितं माक्षिकन्तु कदलीकन्दवारिणा ।
घटिकाद्वितयं पक्कं विशुध्यति न संशयः ॥१८॥

अथ स्वर्णमाक्षिकस्य प्रथमो मारणप्रकार. ।

ताप्यं निम्बुम्लसंपक्कं पुनर्निम्बूकवारिणा ।
सम्पेष्य सम्पुटस्थन्तु पुटयेत् कृतचक्रिकम् ॥१६॥
एवं दशपुटैरेव पञ्चतामेति माक्षिकम् ।
रक्तोत्पलदलच्छायं जायते चातिशोभनम् ॥२०॥

द्वितीयो मारणप्रकार ।

विशोधितं माक्षिकन्तु बलिञ्च समभागिकम् ।
खल्वे सम्पेषयेद्यत्नाद् भृशं निम्बूकवारिणा ॥२१॥
संशोष्य सम्पुटे न्यस्य पुटयेत् कृतचक्रिकम् ।
एवं पञ्चपुटैरेव म्रियते हेममाक्षिकम् ॥२२॥

तृतीयो मारणप्रकारः ।

सुचूर्णिते तु माक्षिके विशोधितं तु हिङ्गुलम् ।
क्षिपेत्तदष्टमांशिकं ततस्तु निम्बुकाम्बुना ॥२३॥
सुपेष्य सम्पुटीकृतं पचेददीर्घचक्रिकम् ।
विपक्कमष्टधैव चै प्रकीर्तितेन वर्त्मना ॥२४॥
प्रयाति पञ्चतां परं जवेन हेममाक्षिकम् ।
क्षिपेत्तु हिङ्गुलं पुनः पुनर्निरुक्तमानतः ॥२५॥

अथ स्वर्णमाक्षिकस्य गुणा' ।

सुवर्णमाक्षिकं वृष्यं मधुरं तु रसायनम् ।

शोधनाय सर्वोत्तम' पाषाणांशस्य द्रवीभावात् इत्यवधेयम् ॥१५-१७॥

चतुर्थः कदलीकन्दवारिणा स्वेदनात् संपादनीय ॥१८॥

अथास्य मारणमाह—निम्बुशोधितं माक्षिकं पुनर्निम्बूरसेनैव पिष्ट्वा दशवार पुटेत्, तद्वर्णतः रक्तं भवतीति ॥१६-२०॥

समगन्धकनिक्षेपद्वारा पुटनेन पञ्चभिरेव पुटै माक्षिकं भस्मीभवतीति । यद्वा हिङ्गुलक्षेपादेवाष्टवार पुटितं भस्म जायत इति । क्वचित्तु एरण्डतैलेन वर्षणं विधाय पुटनमुक्तं प्राचीनैः, तद्रक्तवर्णम् । तथा कुलत्थक्वाथेन तैलेन अजामूत्रेण तक्रेण वा पुटेन म्रियते तच्च कृष्णाभं भवति भस्म इति ॥२१-२५॥

तिक्तं स्वर्यञ्च चक्षुष्यं त्रिदोषघ्नं परं मतम् ॥२६॥
क्षयमर्शांसि मेहानि विविधाः बस्तिवेदनाः ।
पाण्डुश्वयथुकुष्ठानि विषदोषादिकान् हरेत् ॥२७॥
जीर्णज्वरमपस्मारं मन्दानलमरोचकम् ।
अनिद्रां नाशयत्याशु योगवाहि परं मतम् ॥२८॥

स्वर्णमाक्षिकस्य मात्रानिरूपणम् ।

गुञ्जार्धतः समारभ्य बलकालाद्यपेक्षया ।
गुञ्जाद्वितयपर्यन्तं माक्षिकं योजयेद्भिषक् ॥२९॥

अथ स्वर्णमाक्षिकस्य आमयिकः प्रयोगः ।

सुमृतं माक्षिकं शालसारादिगणभावितम् ।
यथालाभं प्रयुक्तं तु सान्द्रमेहं विनाशयेत् ॥३०॥
शिलाजत्वभ्रजन्तुघ्नमधुभिः परिशीलितम् ।
शीलितं मासमेकन्तु यक्ष्माणं विनिवारयेत् ॥३१॥
यवक्षारसमायुक्तं सुमृतं स्वर्णमाक्षिकम् ।
नाशयत्यचिरादेव मूत्रकृच्छ्रं सुदारुणम् ॥३२॥
पुनर्नवामृताशुण्ठीदार्वीकाथेन माक्षिकम् ।
सेवनादचिरादेव शोथं नाशयति ध्रुवम् ॥३३॥
काञ्चनारत्वचोत्थेन क्वाथेन परिशीलितम् ।
ताप्यमन्तःप्रविष्टान्तु बहिःकुर्यान्मसूरिकाम् ॥३४॥

अथ माक्षिकगुणाः सुवर्णमाक्षिकं वृष्यमित्यादिना । तथाहि—"सुवर्णमाक्षिकं स्वादु तिक्तं वृष्यं रसायनम् । चक्षुष्यं बस्तिरुक्कुष्ठपाण्डुमेहविषोदरम् ॥ अर्शः शोफ क्षय कण्डूं त्रिदोषमपि नाशयेत्" इति । किञ्च—"माक्षिकं तिक्तमधुरं मेहार्शःक्षयकुष्ठनुत् । कफपित्तहरं शीतं योगवाहि रसायनम्" इत्युक्तम् । अपि च—"माक्षीकधातुः सकलामयघ्नः प्राणो रसेन्द्रस्य परं हि वृष्यः । दुर्मेललोहद्वयमेलकश्च गुणोत्तरः सर्वरसायनाग्र्यः ॥" इति । तथाच—"नैतन्निषेवी जरसाभिभूयते न पन्नगैर्नापि गरैर्न वृश्चिकैः । न पाण्डुमेहज्वरशोफयक्ष्मभिर्न कण्ठनेत्रश्रवणत्वगामयैः ॥" इति । अनिद्राहरगुणवत्त्वं चास्य बहुधानुभूतचरम् ॥२६-२९॥

अथास्य रोगयोग्यप्रयोगः-शालसारादिगणः सुश्रुतोक्तः, तद्यथा "शालसाराजकर्णखदिरकदरकालस्कन्धक्रमुकभूर्जमेषशृङ्गीतिनिशचन्दनकुचन्दनशिंशपाशिरीषासनधवार्जुनतालशाकनक्तमालपूतीकाश्वकर्णागुरूणि कालीयकञ्चेति ॥" जन्तुघ्नं विडङ्गम् । काञ्चनारत्वचोत्थेनेति—उक्तं हि "काञ्चनारत्वचः क्वाथस्ताप्यचूर्णावचूर्णितः । निर्गत्यान्तः प्रविष्टान्तु मसूरीं बाह्यतो नयेत्" इति । कलिद्रुः विभीतकः । आपन्नसत्वा गर्भिणी । वञ्जुलो जलवेतसः । अम्बु वालकम् । अपि

विषाकरञ्जचूर्णेन शीलितं हेममाक्षिकम् ।
नाशयत्यचिरादेव नियतं विषमज्वरम् ॥३५॥
कणाकालितरूत्थेन चूर्णेन मधुनान्वितम् ।
शीलितं ताप्यभसितं कासबाधां व्यपोहति ॥३६॥
रसगन्धकसंयुक्तं मधुना सह माक्षिकम् ।
शीलितं त्वचिरादेव रक्तपित्तं व्यपोहति ॥३७॥
तुगाक्षीरीरजोमिश्रं शीलितं स्वर्णमाक्षिकम् ।
मासद्वितयमात्रेण ददाति विपुलं बलम् ॥३८॥
सिन्दूराभ्रसमायुक्तं सव्योषं स्वर्णमाक्षिकम् ।
निषेवितं निहन्त्याशु दारुणं गर्भिणीज्वरम् ॥३९॥
भागैकं रससिन्दूरं द्विभागं हेममाक्षिकम् ।
सम्मेल्य मधुना लीढं बलवीर्यकरं परम् ॥४०॥
पिण्डखर्जूरिकोपेतं माक्षिकं गुञ्जसंमितम् ।
निहन्त्यापन्नसत्त्वाया रक्तस्रावमसंशयम् ॥४१॥
विषाबिल्वबलाविश्ववञ्जुलाम्बुकषाययुक् ।
ताप्यमापन्नसत्त्वाया ज्वरातीसारशूलनुत् ॥४२॥

स्वर्णमाक्षिकस्य सत्त्वपातनप्रकारः ।

गोमूत्रैरण्डतैलाभ्यां कदलीकन्दवारिणा ।
घृतेन मधुना चापि भावयेद्धेममाक्षिकम् ॥४३॥
सप्तवारं विभाव्याथ मूषायां विन्यसेत्ततः ।
ध्मापयेत्सुचिरं विज्ञस्त्वतिप्रखरवह्निना ॥४४॥
एवं नातिचिरादेव ध्मातं कनकमाक्षिकम् ।
मृदुलं रविलोहाभं सत्त्वं मुञ्चति शोभनम् ॥४५॥

चान्यदप्याहुः—"गुञ्जामात्रं माक्षिकमुपयुक्तं माहिषेण दुग्धेन । विदधाति नष्टनिद्रे निद्रामाश्वेव दृष्टमिदम्" इति । तथाहि—"सोदश्वित्को माक्षिकधातुः सघृतो वा सक्षौद्रो वा क्षौद्रघृताभ्यां सहितो वा । साम्भस्को वा तैलयुतो वा विनिहन्ता त्वग्दोषाणां सर्वविषाणां सगराणाम् ॥ अक्षद्राक्षाऽयोमलमुस्तामलकानां सव्योषाणां पर्वतनिर्यासयुतानाम् । दत्वा तुल्यं माक्षिकधातुं मधुमिश्रं लिह्यात्पाण्डुव्याध्यभिभूत. शिवमिच्छन् ॥ लोहं सर्पिर्माक्षिकधातुर्मधुमात्रा धात्रीचूर्णं केशरमम्बुप्रभवानाम् । योगः कुर्यादेष सिताभागविमिश्रश्चक्षुर्घ्राणश्रोत्ररसज्ञानविबोधम्" इति वृद्धवाग्भटे । दिङ्मात्रमत्रोदाहृतं विशेषतस्तु गुरुसम्प्रदायादनुमन्धेयः ॥३०-४२॥

अथ माक्षिकसत्त्वपातनप्रकारः गोमूत्रैरण्डतैलाभ्यामित्यादिना । माक्षिक-

द्वितीयः सत्वपातनप्रकारः ।

पादांशटङ्कणोपेतं मर्दितं हेममाक्षिकम् ।
ध्मातं मूषागतं सत्वं मुञ्चत्याशु सुनिश्चितम् ॥४६॥

तृतीयः सत्वपातनप्रकारः ।

समगन्धं पचेत्ताप्यं चतुर्यामं प्रयत्नतः ।
ततोऽर्द्धगन्धकं भूयष्टङ्कणं चार्द्धभागिकम् ॥४७॥
विन्यस्य चान्धमूषायां ध्मापयेदतियत्नतः ।
एवं नातिचिरादेव सत्वं शुल्वनिभं पतेत् ॥४८॥

स्वर्णमाक्षिकसत्वस्य मारणप्रकारः ।

हेममाक्षिकसत्वन्तु पञ्चतोलकसंमितम् ।
तन्मितं विमलं सूतं बलिं दत्त्वा च मर्दयेत् ॥४९॥
जम्बीरस्य रसेनाथ मर्दयेदेकवासरम् ।
संशोष्य सम्पुटे कृत्वा पुटयेत्तीव्रवह्निना ॥५०॥
त्रिवारं पुटयेदेवं निर्दिष्टेनैव वर्त्मना ।
एवं माक्षिकसत्वन्तु पञ्चतां याति निश्चितम् ॥५१॥

स्वर्णमाक्षिकसत्वस्य गुणाः ।

हेममाक्षिकसत्वं तु शिशिरं रुचिरं परम् ।
वृष्यं बल्यं तथा मेध्यं जीर्णज्वरविनाशनम् ॥५२॥
रक्तपित्तं क्षयं कासं दाहं हन्यात्सुदारुणम् ।
योगवाहि परञ्चैतद्रसायनमनुत्तमम् ॥५३॥

मृतस्वर्णमाक्षिकसत्वस्य आमयिकः प्रयोगः ।

हेममाक्षिकसत्वं तु यथादोषानुपानतः ।
ताप्यवच्छीलितं हन्ति दुःसाध्यानामयानपि ॥५४॥

## अथ रजतमाक्षिकस्य नामानि ।

रौप्यमाक्षिकमाख्यातं तारजं तारमाक्षिकम् ।
विमलं श्वेतमाक्षीकं तथा रजतमाक्षिकम् ॥५५॥
ईषद्रौप्यस्य साहित्याद् वा रौप्यगुणसाम्यतः ।

सत्वमारणन्तु समसूतगन्धककृतकज्जल्या जम्बीरजलपिष्टया त्रिवारं पुटनात् सम्पादने। गुणप्रयोगौ च माक्षिकवत्. उत्कर्षे तु विशेषः सत्वस्य निर्मलत्वादिति ॥५२-५४॥

रजतमाक्षिकनामानि तन्त्रे व्यवहृतानि—विमलं श्वेतमाक्षीकं तथा रजतमाक्षिकम् इति रजतमाक्षिकं विमलानाम्ना व्यवहृतम्। आह च रसनाथः

रौप्यवद् द्युतिमत्त्वाद्वा रौप्यमाक्षिकमुच्यते ॥५६॥

जात्यरजतमाक्षिकस्य स्वरूपम्।

स्निग्धं सकोणं गुरु च वर्तुलं रजतोज्ज्वलम्।
रौप्यवच्चाकचिक्याढ्यं जात्यं तद्रौप्यमाक्षिकम् ॥५७॥

हेयरौप्यमाक्षिकस्य स्वरूपम्।

समलं लघु रूक्षञ्च कपेऽतिमलिनच्छवि।
अवर्तुलं विवर्णञ्च हेयं स्याद्रौप्यमाक्षिकम् ॥५८॥

रौप्यमाक्षिकस्य शोधनप्रयोजनम्।

अशुद्धं रौप्यमाक्षीकं स्वर्णमाक्षिकवद्भृशम्।
जनयत्याशु मन्दाग्निं तथा कुष्ठादिकान् गदान् ॥५९॥

रौप्यमाक्षिकस्य प्रथमः शोधनप्रकारः।

[ गीतिका ]

विमलं तु जात्यमादौ सुविचूर्ण्य खल्वमध्ये।
अथ निम्बुकोत्थवारा निदधीत वै कटाहे ॥६०॥
अथ लौहचुल्लिकायां विनिधापयेत् कटाहम्।
चुल्ल्यां प्रदीप्य वह्निं परिचालयेच्च दर्व्या ॥६१॥
विमलस्तु नैति यावत्त्वारक्तपङ्कजाभाम्।
निक्षिप्य निम्बुकाम्भस्तावत्पचेत्प्रयत्नात् ॥६२॥
अरुणोत्पलप्रकाशं विमलं विलोक्य वैद्यः।
अवतारयेद्विशुद्धं विमलं प्रयोगयोग्यम् ॥६३॥

द्वितीयः शोधनप्रकारः।

विमलं तु जात्यमादौ सुविधाय पोट्टलीस्थम्।
अथ दोलिकाख्ययन्त्रे वृषपत्रजोत्थवारा ॥६४॥

"विमला तारमाक्षिकम्" इति ॥५५-५६॥

जात्यं रजतमाक्षिकं स्निग्धमित्याद्युक्तम्। आहुश्च प्राञ्चः—"कांस्यवच्चाकचिक्याढ्यं कषे घृष्टन्तु रौप्यवत्। गुरु स्निग्धं सितं यत्तच्छ्रेष्ठं स्यात्तारमाक्षिकम्" इति ॥५७॥

हेयरौप्यमाक्षिकस्वरूपं निगदव्याख्यातम् ॥५८॥

अशुद्धन्तु "स्वर्णमाक्षिकवद्दोषा विज्ञेयास्तारमाक्षिके" इति प्राचीनोक्त्यनुसारं प्राह—स्वर्णमाक्षिकवद् भृशमिति। स्पष्टमन्यत् ॥५९॥

रौप्यमाक्षिकशोधनं स्वर्णमाक्षिकवत् निम्बूनीरेण साध्यम् ॥६०-६३॥

द्वितीयः प्रकारः वासकस्वरसे स्वेदनाद् दोलायन्त्रेण निष्पाद्यः। उक्तं हि—

विधिना विधानदक्षः संस्वेदयेद् ढ्यामम् ।
विमलोऽतिवेलमेवं विमलत्वमेत्यनल्पम् ॥६५॥

तृतीयः शोधनप्रकारः ।

मेषशृङ्गीरसेनापि दोलायन्त्रे विधानतः ।
पाचितं रौप्यमाक्षीकं शुद्धिमायत्यानुत्तमाम् ॥६६॥

रौप्यमाक्षिकस्य मारणप्रकारः ।

विमलो लकुचद्रावैः पादांशबलिसंयुतः
पिष्ट्वा तु सप्तधैवेह पुटितो याति पञ्चताम् ॥६७॥

रौप्यमाक्षिकस्य सामान्येन मारणम् ।

स्वर्णमाक्षिकवत्कार्यं रौप्यमाक्षिकमारणम् ।
प्रयोगाल्पतया चास्य व्याख्यानं नाधिकं कृतम् ॥६८॥

रौप्यमाक्षिकस्य गुणादिनिरूपणम् ।

स्वर्णमाक्षिकवज्ज्ञेया विमलस्य गुणा बुधैः ।
मात्रां चामयिकं योगं तथैव परिलक्षयेत् ॥६९॥

रौप्यमाक्षिकस्य सत्वपातनम् ।

पादांशटङ्कणोपेतो लकुचद्रावमर्दितः ।
विमलः सुचिरं ध्मातः सत्वं सीसोपमं त्यजेत् ॥७०॥

## अथ तुत्थकस्य नामानि ।

तुत्थं तु तुत्थकं तुत्थाञ्जनञ्चापि मयूरकम् ।
सस्यकं ताम्रगर्भञ्च शिखिग्रीवञ्च तन्मतम् ॥७१॥

ग्राह्यतुत्थकस्य स्वरूपम् ।

शिखिकण्ठसमच्छायं गुरु स्निग्धं महोज्ज्वलम् ।
तुत्थकं शस्यते विज्ञैरन्यद्धीनगुणं मतम् ॥७२॥

"विमला तु शुद्ध्यति दिनं वासाजश्रृङ्गीरसे स्विन्ना" इत्यादिना रसपद्धत्याम् ॥

मेषशृङ्गीत्यादि निगदव्याख्यातम् । योगरत्नाकरे तु विधानमन्यदप्युक्तम् । तथाहि—"कर्कोटीमेषशृङ्गीजैरसैर्जम्बीरजै र्दिनम् । आतपे भावना देया शुद्धं स्यात्तारमाक्षिकम्" इति ॥६६॥

अस्य मारणं लकुचजलैः गन्धकेन चेति सुगमम् ॥६७॥

वस्तुतस्तु स्वर्णमाक्षिकवदेवास्य सर्वं मारणादिकम् । व्यवहारस्त्वल्प एव सीसोपमञ्चास्य सत्वं लकुचजलटङ्कणाभ्यां साध्यम् ॥६८-७०॥

सुवर्णरजताभ्यामनन्तरं ताम्रस्य यथाक्रमागतमुपधातुं तुत्थमेवात ऊर्ध्वं वर्णनीयमिति । अस्य नामानि व्यवहृतप्रायाणि तन्त्रेषु ॥७१॥

उत्कृष्टतुत्थलक्षण शिखिकण्ठसमच्छायमिति—शिखी मयूरः तस्य कण्ठच्छायासमा छाया यस्य तत् नीलवर्णमित्यर्थः ॥७२॥

तुत्थकस्य निर्मलीकरणम्।

सुचूर्णितं तुत्थकं तु दशतोलकसंमितम्।
क्षिपेदत्युष्णसलिले पञ्चतोलकसंमिते ॥७३॥
ततः सारकपत्रेण सारयेद्वाससाथवा।
सारितं सलिलं विज्ञः काचपात्रतलस्थितम् ॥७४॥
तावत्संस्थापयेद्यावन्नैति तत्कणरूपताम्।
एवं कणत्वमापन्नं तुत्थं शुद्ध्यै नियोजयेत् ॥७५॥

निर्मलीकृततुत्थस्य गुणाः।

तुत्थं तु तिक्तकं त्वच्यं ग्राहि वान्तिकरं परम्।
कफघ्नमथ चक्षुष्यं व्रणदोषनिषूदनम् ॥७६॥
उपदंशफिरङ्गोत्थक्षतशोधनकृत्परम्।
क्लिष्टवर्त्मप्रशमनं क्षारकर्मकरं स्मृतम् ॥७७॥

तुत्थकद्रवस्य निर्माणप्रकारः।

द्विगुञ्जतश्चतुर्गुञ्जं तुत्थकं निर्मलीकृतम्।
परिस्रुते तु सलिले पञ्चतोलकसंमिते ॥७८॥
निक्षिपेदथ विज्ञाय तुत्थकं सर्वथा द्रुतम्।
तुत्थद्रवं प्रयुञ्जीत रसतन्त्रविचक्षणः ॥७९॥

तुत्थकद्रवस्य आमयिकः प्रयोगः।

प्रक्लिन्नपूतिमांसानां सुचिरादप्यरोहताम्।
तथात्युच्छ्रितमांसानां व्रणानां पूतिगन्धिनाम् ॥८०॥
उपदंशफिरङ्गोत्थस्फोटानाञ्चाप्यरोहताम्।
रोपणाय तथाशेषदोषनिर्हरणाय च ॥८१॥
तुत्थद्रवं प्रयुञ्जीत विधानज्ञो भिषग्वरः।
द्रवेणानेन धौतास्तु व्रणा रोहन्त्यसंशयम् ॥८२॥

तुत्थनिर्मलीकरणं प्रयोगयोग्यताधानार्थम् ॥७३-७५॥

निर्मलीकृततुत्थगुणाः तुत्थं तु तिक्तकमित्यादिना। त्वच्यं त्वग्दोषहरम्, क्लिष्टवर्त्म नेत्ररोगविशेषः ॥७६-७७॥

अथ व्रणादिक्षालनयोग्यतुत्थद्रवनिर्माणप्रकारः—द्विगुञ्जतश्चतुर्गुञ्जमिति गुञ्जाप्रमाणतारतम्यं दोषाद्यनुसारम् ॥७८-७९॥

अस्य च प्रक्लिन्नमांसादिषु व्रणेषु प्रयोगः ॥ तस्य फलम्—द्रवेणानेन धौतास्तु व्रणा रोहन्त्यसंशयम् इति। अपि च नेत्रयोर्युक्त्या योजितः क्लिन्न वर्त्मपोथक्यादिहरः। युक्तिस्तु निर्भुज्य वर्त्मनी विन्दुक्षेपकयन्त्रेण तत्र विन्दु

नेत्रवर्त्मयुगे युक्त्या योजितस्तुत्थकद्रवः ।
क्लिन्नवर्त्मरुजश्चापि पोथकीमाशु नाशयेत् ॥८३॥

[ गीतिका ]

उपसर्गजे तु मेहे प्रदरे च शुक्रपूर्वे ।
भृशमुत्तराख्यवस्तिप्रतिपादितायनेन ॥८४॥
द्रवमाशु तुत्थकोत्थं विनियोजयेद्विधिज्ञः ।
शममेति सर्वथैवं प्रथमोक्तरोगबाधा ॥८५॥

निर्मलीकृततुत्थस्य आमयिकः प्रयोगः ।

तुत्थकोदया वटी ।

भागैकं निर्मलं तुत्थं पथ्या च मधुयष्टिका ।
मरिचं तु कलांशं स्याद्वटी पिष्टाम्भसा कृता ॥८६॥
माषकप्रमिता नाम्ना वटीयं तुत्थकोदया ।
घृष्टाम्भसा प्रयुक्तेयं पोथक्यादिविकारनुत् ॥८७॥

तुत्थकोदया वर्तिः ।

पञ्चतोलोन्मितं तुत्थं विधिना निर्मलीकृतम् ।
निर्मलं शोरकश्चैव स्फटिकारीश्च तन्मिताम् ॥८८॥
कर्पूरं तोलकार्द्धञ्च पेषयेद्यत्नतोऽम्भसा ।
रक्तिद्वयमिताश्चैकां वर्तिं निर्मापयेत् पृथक् ॥८९॥
द्रावयित्वा वर्तिमेकां पञ्चतोलोन्मिते जले ।
ततः कूर्चिकया यत्नादुष्ट्रकेशप्रणीतया ॥९०॥
द्रवप्रसिक्तया वर्त्म विपर्यस्तं समञ्जयेत् ।
क्लिन्नवर्त्मरुजं घोरां पोथकीञ्च विनाशयेत् ॥९१॥

पातनम् । अथवा काचनिर्मितया नेत्रशलाकयाञ्जनम् । अथवा वक्ष्यमाणतुत्थकोदयावर्त्तिप्रयोगविधानोक्तरीत्या प्रयोज्यः द्रवः ॥८०-८३॥

अथ च औपसर्गिके प्रमेहे शुक्रप्रदरे च उत्तरवस्तिविधिना प्रयुक्तः शमयति बाधाम् ॥८४-८५॥

तुत्थकोदया वटी निगदव्याख्याता ॥८६-८७॥

तुत्थकोदया वर्तिः पञ्चतोलोन्मितमिति—यत्नतः श्लक्ष्णं यथा स्यात्तथेति भावः, विपर्यस्तं निर्भुग्नम् । पोथक्यः—"स्राविण्यः कण्डुरा गुर्व्यो रक्तसर्षपसन्निभाः । रुजावत्यश्च पिडकाः पोथक्य इति कीर्तिताः ।" क्लिन्नवर्त्म—"अरुजं बाह्यतः शूनं वर्त्म यस्य नरस्य हि । अक्लिन्नवर्त्म तद्विद्यात् क्लिन्नमत्यर्थमन्ततः ॥" इत्युक्तलक्षणम् ॥८८-९१॥

तुत्थकादिवर्त्तिः।

तुत्थकुष्ठवरादार्वीदन्तीमूलत्रिवृत्तिलैः।
सकणासैन्धवक्षौद्रैः पिष्ट्वा निम्बदलाम्भसा ॥९२॥
कृतास्त्वेषणिकाकारा वर्त्तिका व्रणशोधिकाः।
योजयेद्युक्तितो नाडीव्रणादौ च भगन्दरे ॥९३॥

शिखिग्रीवादिवर्त्तिः।

माषकैकं शिखिग्रीवं मरिचं कर्षसंमितम्।
तोलकप्रमितेनाथ गृहनीरेण पेषयेत् ॥९४॥
वर्त्तिर्विनिर्मिता घृष्ट्वा युक्तया वर्त्मनि योजिता।
चिरोत्थं क्लेदबहुलं पिल्लमुन्मूलयत्यलम् ॥९५॥
सुचूर्णितं तुत्थकन्तु यत्नतः स्वल्पमात्रया।
प्रतिसारणसंभिन्ने लगणे हन्ति वेदनाम् ॥९६॥

तुत्थामृतमलहर।

सिक्थतैलं सुविमलं दशतोलकसंमितम्।
सुनिर्मलं शिखिग्रीवं खलु विंशतिगुञ्जकम् ॥९७॥
आदाय खल्वे सम्पेष्य काचकुप्यां निधापयेत्।
कथितोऽयं मलहरस्तुत्थकामृतसंज्ञकः ॥९८॥

अस्य गुणाः।

तुत्थकामृतसंज्ञोऽयं नित्यं मलहरोऽचिरात्।
विनाशयेत् प्रलेपेन पामां चिरसमुत्थिताम् ॥९९॥

तुत्थकाद्यो मलहरः।

घृतं द्वितोलकमितं दर्वीस्थं वह्निना पचेत्।
तोलकाद्दष्टमांशं वा पादिकं रालकं क्षिपेत् ॥१००॥
रालं तु विद्रुतं ज्ञात्वा द्रुतं खल्वे विनिक्षिपेत्।
दत्त्वाथ निर्मलं तुत्थं तोलकस्याष्टमांशिकम् ॥१०१॥

एषणिका नाडीव्रणगत्यन्वेषणसाधनी शलाका ॥९२-९३॥

गृहनीरेण काञ्जिकेन। पिल्लम्—"पित्तकफरक्तनिचयोत्क्लिष्टवर्त्मपोथकी-विसार्त्यक्लुकूणकपक्ष्मोपरोधपूयालसशुष्काक्षिपाकाल्पशोफाम्लोषिता वातवर्ज्याश्च स्यन्दाधिमन्थाः इत्यष्टादश दीर्घकालानुबन्धिनो रोगाः पिल्लसंज्ञाः" इति वृद्धवाग्भटः। एवं हि वाग्भटेन योगोऽयमपि निर्दिष्टः—"तुत्थकपलं विंशतिश्च श्वेतमरिचानि धान्याम्लपिष्टानि धान्याम्लपलैस्त्रिशता ताम्रपात्रे समालोडितानि बहुवर्षाणामपि पिल्लानां परमसाश्च्योतनम्" इति ॥९४-९५॥

सुचूर्णितमित्यादि-लगणः—"ग्रन्थिः पाण्डुररुक्पाकः कण्डूमान् कठिनः

खर्टीं कपर्दंभसितं टङ्कश्चैकैकतोलकम् ।
पेषयेद्वारिणा तावन्मुञ्चेन्नीरन्तु नीलताम् ॥१०२॥
मुहुर्मुहुः क्षिपेन्नीरं मर्दनान्नीलतां गतम् ।
विशालास्ये काचकूपे निदध्यादथ यत्नतः ॥१०३॥
तुत्थकाद्यो मलहरो व्रणसंशोधनः परम् ।
पूयानिःसारकश्चैव विविधव्रणनाशनः ॥१०४॥

विशुद्धतुत्थकस्य प्रयोगः ।

सौभाग्यपुष्पसंयुक्तं तुत्थकं त्वार्द्रकाम्भसा ।
द्विगुणं वामने दद्यात्संज्ञालोपापनुत्तये ॥१०५॥

आभ्यन्तरप्रयोगार्थं तुत्थकशोधनस्य प्रथमः प्रकारः ।

[ गीतिका ]

तुत्थं विचूर्ण्यं खल्वे नवनिम्बुकोत्थवारा ।
परिपेषयेद् द्वियामं रसतन्त्रकर्मविज्ञः ॥१०६॥
विधिना ह्यनेन तुत्थं परिशोधितं तु नूनम् ।
अविलम्बितं विशुद्धिं समुपैति निर्विशेषाम् ॥१०७॥

द्वितीयः शोधनप्रकारः ।

रक्तचन्दनमञ्जिष्ठाकषायेण तु भावितम् ।
सप्तवारं प्रयत्नेन शुद्धिमायात्यनुत्तमाम् ॥१०८॥

तृतीयः शोधनप्रकारः ।

मृद्भाजने तुत्थकन्तु पोट्टल्यां सुस्थिरीकृतम् ।
गोमूत्रेण त्रियामं तु दोलायन्त्रगतं पचेत् ॥१०९॥
तुत्थं मूत्रे द्रवीभूतं ज्ञात्वा मूत्रं विशोषयेत् ।
किञ्चिज्जलांशशेषे च पात्रं भूमौ निधापयेत् ॥११०॥
पात्रे तु शीततां याते कणतामेति तुत्थकम् ।
एवं विशोधितं तुत्थं शुद्धिमायात्यनुत्तमाम् ॥१११॥

चतुर्थः शोधनप्रकारः ।

अम्लवर्गप्रदिष्टेन एकेनाप्यौषधेन तु ।

कफात् । कोलमात्रः स लगणः किञ्चिदल्पस्ततोऽथवा ।" इत्युक्तरूपो वर्त्मरोगविशेषः ॥९९-१०४॥

तुत्थप्रयोगनिर्देशे—सौभाग्यपुष्पं वह्निभृष्टं टङ्कणम् ॥१०५॥

तुत्थकशोधनम्—निम्बूदकेन द्वियामं पेषणात् साध्यम् ॥१०६-१०७॥

द्वितीयाद्याः प्रकारा विशदं व्याख्यातपाठप्राया इति । तन्त्रान्तरे तु—
"अम्लवर्गेण लुलितं स्नुहासिक्तं हि तुत्थकम् । दोलायां वाजिगोमूत्रे दिनं पक्व

भावितं सप्तधा तुत्थं शुद्धिमायात्यनुत्तमाम् ॥११२॥

शोधिततुत्थकस्य आमयिकः प्रयोगः ।

तुत्थामृता वटी ।

तोलकैकमितं तुत्थं विधिना परिशोधितम् ।
पलद्वयमितां वालपथ्यामादाय चूर्णिताम् ॥११३॥
खल्वे निम्बूकतोयेन पेषयेद्दिनसप्तकम् ।
वटिकाः कारयेद्वैद्यो गुञ्जाद्वितयसंमिताः ॥११४॥
ततः काचपिधानायां काचकुप्यां निधापयेत् ।
वटिकेयं समाख्याता बुधैस्तुत्थामृताभिधा ॥११५॥

अस्य गुणाः ।

एकैका वटिका नित्यं शीलिता शीतलाम्भसा ।
विनिहन्ति त्रिसप्ताहात् फिरङ्गमतिदारुणम् ॥११६॥
पूर्वोक्तरसपुष्पादिसूतयोगाद्यपेक्षया ।
क्वचित्क्वचिद्विशेषेण मताधिकफलप्रदा ॥११७॥
स्फीतता दन्तवेष्टेषु प्रयोगेऽस्य न जायते ।
शालिगोधूममुद्गाज्यं पथ्यमत्र प्रकीर्तितम् ॥११८॥

अथ तुत्थकमारणस्य प्रथमः प्रकारः ।

[ गीतिका ]

नवनिम्बुकोत्थवारा परिशोधितं तु तुत्थम् ।
कृतचक्रिकं निदध्याद् परिशोषयेन्निदाघे ॥११९॥
लघुना पुटेन विज्ञः पुटयेत्तु सम्पुटस्थम् ।
अथ भावयेत्प्रयत्नाद् दधिमस्तुना त्रिघस्रम् ॥१२०॥
विधिना ह्यनेन तुत्थं वमनादिदोषहीनम् ।
अविलम्बितं प्रयत्नान्मृतिमेति निर्विशेषाम् ॥१२१॥

द्वितीयो मारणप्रकारः ।

सुनिर्मलं तुत्थकं तु पञ्चतोलकसंमितम् ।
टङ्कणं गन्धकञ्चैव सममेव समाहरेत् ॥१२२॥

विशुद्धयति ।" इति ॥१०८-११२॥

शोधिततुत्थस्य रोगयोग्यः प्रयोगः—तुत्थामृता वटी—क्वचित् क्वचिदिति यत्रामयो सूतवीर्यं न सहत इति यावत् । स्फीतता शोथः । यथा रसपुष्पादि सेवने न तथास्य सेवने मुखपाकादिभयम् ॥११३-११८॥

अथास्य मारणम्—निम्बूदकेन दधिजलेन च ११९-१२१॥

पाषाणखल्वे विन्यस्य पेषयेल्लकुचाम्भसा ।
मूषिकायां निरुध्याथ कौक्कुटे तु पुटे पुटेत् ॥१२३॥
पुटद्वयं प्रदातव्यं वलिनैव प्रयत्नतः ।
तुत्थकं जायते नूनं वान्तिभ्रान्त्यादिवर्जितम् ॥१२४॥

तृतीयो मारणप्रकारः ।

पलोन्मितं तुत्थकं तु गन्धकन्तु पलार्द्धकम् ।
शरावसम्पुटे न्यस्य मृदा च परिलेपयेत् ॥१२५॥
पुटत्रयं प्रदातव्यं स्वल्पैरेव वनोत्पलैः ।
तुत्थकं मृतिमाप्नोति वान्तिभ्रान्त्यादिवर्जितम् ॥१२६॥

सुमृततुत्थकस्य गुणाः ।

तुत्थकं लेखनं भेदि कषायं मधुरं लघु ।
क्रिमिघ्नमथ चक्षुष्यं मेहमेदोहरं परम् ॥१२७॥
कफपित्तहरं बल्यं शूलहृत्कुष्ठनाशनम् ।
श्वित्रापहं त्वम्लपित्तहरं चैव रसायनम् ॥१२८॥
तुत्थं सङ्कोचनकरं नाडीनां वलकृत् परम् ।
त्वग्दोषशमनं कामं विशेषाद्रुचिरं मतम् ॥१२९॥

मृततुत्थकस्य मात्रानिरूपणम् ।

गुञ्जाष्टमांशतो गुञ्जपादिकं तुत्थकं मृतम् ।
तत्तद्भेषजयोगेन वीतशङ्कः प्रयोजयेत् ॥१३०॥

मृततुत्थकस्य आमयिकः प्रयोगः ।

तुत्थकोदयरसायनम् ।

तुल्यकज्जलिकया समन्वितं तुल्यगन्धकमृतं तु तुत्थकम् ।
मर्दितं सपदि निम्बुकाम्भसा पेषयेत्समकटुत्रिकाम्भसा ॥१३१॥
गुञ्जकद्वितयसंमितां वटीं कारयेद्रसविधानकोविदः ।
भाषितोऽयमिह सूतचिन्तकैस्तुत्थकोदयरसायनाह्वयः ॥१३२॥
निषेवयेद्वटीमेकां नागिनीदलजद्रवैः ।
दिने वारद्वयं युक्त्या नाशयेद्विषमज्वरम् ॥१३३॥

द्वितीयतृतीयमारणप्रकारौ—सुगमौ ॥१२२-१२६॥

वान्त्यादिदोषरहितमृततुत्थगुणाः—रुचिरं रुचिप्रदम् ॥१२७-१२९॥

मात्रानिर्देशे—वीतशङ्कः वान्त्यादिव्यापच्छङ्कारहितः ॥१३०॥

तुत्थकोदयरसायनम्—तुल्यगन्धकमृतमिति यथोक्तेन द्वितीयेन प्रकारेण मृतमित्यर्थः। सार्धमण्डलकं चत्वारिंशद्दिनानि मण्डलमिति व्यवह्रियन्ते तस्यार्धं

तक्रेण दापयेच्चैकां गर्भिणीशूलशान्तये ।
शीलिता निम्बुकद्रावैः शूलं गुल्मञ्च नाशयेत् ॥१३४॥
हिङ्गुविश्वाम्लिकानिम्बूद्रवेण प्लीहशान्तिकृत् ।
पयसाससितेनेह शुक्रमेहं समुद्धरेत् ॥१३५॥
अभ्रमाशिकनकोत्थभस्मना सार्द्धमण्डलकमेव शीलितम् ।
तुत्थकोदयरसायनं हरेत् कासविड्ग्रहयुतां क्षयव्यथाम् ॥१३६॥

तुत्थकसत्वपातनस्य प्रथमः प्रकारः ।

पलद्वयोन्मितं तुत्थं यत्नतो विमलीकृतम् ।
टङ्कणं तत्समं दत्त्वा मर्दयेन्निम्बुकद्रवैः ॥१३७॥
विन्यस्य चान्धमूषायां प्रधमेत्प्रखराग्निना ।
एवं नातिचिरादेव सत्वं ताम्रमयं पतेत् ॥१३८॥

द्वितीयः सत्वपातनप्रकारः ।

पादसौभाग्यसंयुक्तं तुत्थकं सुविचूर्णितम् ।
करञ्जतैले विन्यस्य रक्षेदेकादिनं ततः ॥१३९॥
विन्यस्य चान्धमूषायां प्रधमेत् कोकिलाग्निना ।
एवं नातिचिरादेव सत्वं ताम्रमयं पतेत् ॥१४०॥

तृतीयः सत्वपातनप्रकारः ।

चूर्णीकृतं तुत्थकं तु दशतोलकसंमितम् ।
निक्षिपेत्सलिले ऽत्युष्णे पञ्चतोलकसंमिते ॥१४१॥
द्रवीभूतं ततो ज्ञात्वा लौहखण्डान् विनिक्षिपेत् ।
चूर्णरूपं शुद्धताम्रं तुत्थसत्वं पतत्यधः ॥१४२॥
जलं निक्षिप्य पात्राधःप्रदेशे खलु सञ्चितम् ।
इन्द्रगोपसमाकारं तुत्थसत्वं समाहरेत् ॥१४३॥

तुत्थसत्वस्य मारणं गुणाः प्रयोगश्च ।

तुत्थसत्वं सुविमलं मारयेद्द्रविलोहवत् ।
तद्वदेव गुणास्तस्य प्रयोगश्चापि तादृशः ॥१४४॥

विंशतिदिनानि तेन च मिलित्वा षष्टिदिनानि मासद्वयमित्यर्थः । तुत्थस्य तिमिरापहः प्रयोगो वाग्भटोक्तोऽप्यनुसन्धेयः । तद्यथा—"गोमूत्रे छागखरसेऽम्लकाञ्जिके च स्त्रीस्तन्ये हविषि विषे च माक्षिके च । यत्तुत्थं ज्वलितमनेकशो निषिक्तं तत्कुर्याद् गरुडसमं नरस्य चक्षुः ॥" इति ॥१२१-१३६॥

तुत्थकसत्वपातनप्रकारः—तुत्थकसत्वं ताम्रमेव भवति । तृतीये प्रकारे—लोहखण्डान् लोहशकलान् ॥१३७-१४४॥

अथ कृत्रिमतुत्थस्य निर्माणप्रकारः।

विशुद्धे ताम्रचूर्णे तु गन्धकाम्लं शनैः क्षिपेत्।
विज्ञाय विद्रुतं ताम्रं शोषयेन्मृदुवह्निना ॥१४५॥
विमर्द्यात्युष्णनीरेऽल्पे द्रवीकुर्याद्विधानवित्।
जले शीतत्वमापन्ने कणत्वं समुपागतम् ॥१४६॥
शिखिकण्ठसमच्छायं तुत्थकं तु समाहरेत्।
इत्थं विनिर्मितं तुत्थं वीतशङ्कः प्रयोजयेत् ॥१४७॥

## अथ सिन्दूरस्य नामानि।

सिन्दूरं गिरिसिन्दूरं महिलाभालभूषणम्।
गणेशभूषणञ्चैव तथा शृङ्गारभूषणम् ॥१४८॥
नागजं नागगर्भञ्च तथैव नागरेणुकम्।
मङ्गल्यं भालसौभाग्यं तदेव परिकीर्तितम् ॥१४९॥

आद्यसिन्दूरस्य लक्षणम्।

अतिसूक्ष्मकणं स्निग्धं गुरु वर्णसमुज्ज्वलम्।
मृदुलं विमलञ्चैव सिन्दूरं जात्यमुच्यते ॥१५०॥

सिन्दूरस्य गुणाः।

सिन्दूरं क्षुद्रकुष्ठघ्नं त्वच्यं व्रणविशोधनम्।
भग्नसन्धानजननं तथैव व्रणरोपणम् ॥१५१॥
पामाविचर्चिकासिध्मवीसर्पशमनं परम्।
भूतघ्नञ्च विशेषेण रक्तदोषनिषूदनम् ॥१५२॥

सिन्दूरस्य आमयिकः प्रयोगः।

आभ्यन्तरः प्रयोगोऽस्य सिन्दूरस्य न दृश्यते।
अतो बाह्यप्रयोगार्थं यत्किञ्चिदुपदिश्यते ॥१५३॥
सिन्दूरं घृतसंयुक्तं लेपाल्लोचनवर्त्मनि।
नाशयत्यचिरादेव कण्डूमञ्जननामिकाम् ॥१५४॥
मध्वाज्यगुग्गुलुगुडयुतसिन्दूरलेपितौ।

कृत्रिमतुत्थस्य निर्माणविधिः—गन्धकाम्लं तावदेव शनैः शनैः क्षेप्यं यावत् ताम्रं द्रुतं स्यात्। वीतशङ्कः शुद्धताम्रद्वारा निर्मितत्वादित्यर्थः ॥१४५-१४७॥

नागोपधातुत्वात् क्रमप्राप्तं सिन्दूरवर्णनं सिन्दूरमित्यादिना। भूतघ्नं जीवाणुजालसंहारकम्। रक्तदोषनिषूदनमिति बाह्यलेपादेव ॥१४८-१५२॥

आभ्यन्तरः प्रयोगोऽस्य न दृश्यते सततमुपयुक्तं हीदं मनःशिलाद्ययोगकृत नागभस्मवदुपद्रवान् जनयति। अस्य तु बाह्य एव प्रयोगो दृष्टचर इति स एव

कामं तु स्फुटितौ पादौ भवतस्तूत्पलप्रभौ ॥१५५॥

प्रथमः सिन्दूराद्यो मलहरः।

विमलं सिक्थतैलन्तु कर्षत्रितयसंमितम्।
तोलकार्द्धमितं टङ्कं सिन्दूरञ्चापि तन्मितम् ॥१५६॥
सम्मेल्य मसृणे खल्वे काचकुप्यां निधापयेत्।
सिन्दूराद्यो मलहरो नाम्नायं परिकीर्तितः ॥१५७॥

अस्य गुणाः।

सिन्दूराद्यो मलहरः पूयनिर्हरणः परम्।
भूतसङ्घप्रशमनो व्रणशोधनरोपणः ॥१५८॥

द्वितीयः सिन्दूराद्यो मलहरः।

अत्रैव टङ्कणस्थाने रालकं यदि दीयते।
सिन्दूराद्यो मलहरस्तदायमपि कथ्यते ॥१५९॥

अस्य गुणाः।

सिन्दूराद्यो मलहरः पामाकण्डूतिनाशनः।
भग्नसन्धानजननो भूतघ्नो व्रणरोपणः ॥१६०॥
त्वग्दोषशमनः कामं स्फुटिताङ्गविरोपणः।
गुदामयस्फोटकुष्ठवीसर्पादिविकारनुत् ॥१६१॥

सिन्दूराद्यतैलम्।

तैलं सर्षपसम्भूतं शुभं दशपलोन्मितम्।
निशार्कपत्रकल्कन्तु दद्याद्विंशतितोलकम् ॥१६२॥
पलोन्मितञ्च सिन्दूरं तुत्थं रक्तिचतुष्टयम्।
तैलपाकविधानेन पाचयेत्तैलपाकवित् ॥१६३॥
सिन्दूराद्यमिदं तैलं भिषग्भिः परिकीर्तितम्।
पामाविचर्चिकास्फोटक्षतकण्डूतिकापहम् ॥१६४॥

## अथ मृद्दारशृङ्गस्य नामानि।

मृद्दारशृङ्गकञ्चैव मतं वोद्दारशृङ्गकम्।
मुद्राशङ्खं तथा मुद्रशङ्खकञ्च निगद्यते ॥१६५॥

यत्किञ्चिदुपदिश्यते—सिन्दूरं घृतसंयुक्तमिति ॥१५३-१५५॥

सिन्दूराद्यौ मलहरौ स्पष्टौ ॥१५६-१६१॥

सिन्दूराद्यतैले—निशा हरिद्रा ॥१६२-१६४॥

सिन्दूरसजातीयं मृद्दारशृङ्गमिति तस्येदं वर्णनम्—पीताभमिति तस्य परिचयः। सदलं निर्दलं तथेति द्विविधम्। सीसगर्भमिति सत्त्वमस्य सीसकमेव।

मृद्दारश्रृङ्गस्य स्वरूपम् ।

मृद्दारश्रृङ्गं पीताभं सदलं निर्दलं तथा ।
सीसगर्भं खरस्पर्शं गुरु चैव प्रकीर्तितम् ॥१६६॥

मृद्दारश्रृङ्गस्य शोधनम् ।

मृद्दारश्रृङ्गमानीय कुट्टयेत् खल्वमध्यगम् ।
प्रस्तरांशं परित्यज्य पेषयेदतियत्नतः ॥१६७॥
वस्त्रपूतं ततः कृत्वा पुनः सुविमलाम्भसा ।
पेषयेत्पक्षमेकं तु ततो घर्मे विशोषयेत् ॥१६८॥
मृद्दारश्रृङ्गकं काममेतद्विधिविशोधितम् ।
क्षतेऽवचूर्णनाद्यर्थं युञ्जीत भिषजां वरः ॥१६९॥

मृद्दारश्रृङ्गस्य गुणाः ।

मृद्दारश्रृङ्गं शिशिरं परं वातकफापहम् ।
फिरङ्गव्रणहृत् केश्यं व्रणरोपणमुत्तमम् ॥१७०॥
भग्नसन्धानजननं पामाकण्डूतिकादिनुत् ।
सङ्कोचकं विशेषेण त्वग्दोषशमनं मतम् ॥१७१॥

मृद्दारश्रृङ्गस्य आमयिकः प्रयोगः ।

पलं मृद्दारश्रृङ्गं तु टङ्काम्लञ्च द्वितोलकम् ।
फिरङ्गं विनिहन्त्याशु व्रणेषु त्ववचूर्णितम् ॥१७२॥

मृद्दारश्रृङ्गाद्यमलहरः ।

पलैकं सिक्थतैलन्तु पूर्वोक्तविधिसाधितम् ।
मृद्दारश्रृङ्गजं चूर्णं शुद्धं तोलकसंमितम् ॥१७३॥
सम्मेल्य काचफलके काचकुप्यां निधापयेत् ।
अयं मृद्दारश्रृङ्गाद्यो नाम्ना मलहरः स्मृतः ॥१७४॥

अस्य गुणाः ।

मृद्दारश्रृङ्गकाद्योऽयं त्वच्यो मलहरः परम् ।
भग्नसन्धानजननः पामाकण्डूतिनाशनः ॥१७५॥
विपादिकाप्रशमनो व्रणशोधनरोपणः ।
गुदामयहरश्चायं विशेषेण प्रकीर्तितः ॥१७६॥

स्पष्टमन्यत् ॥१६५-१६६॥

अथैतस्य शोधनं बाह्यप्रयोगयोग्यतासम्पादनाय ॥१६७-१६९॥

अथास्य गुणाः—शिशिरं बाह्यप्रयोगेषु, अभ्यन्तरप्रयोगस्त्वस्य व्यापत्तिमत्त्वादनुक्तचर एवेति ॥१७०-१७१॥

अस्य च रोगयोग्यः प्रयोगः—टङ्काम्लं टङ्कणाम्लः, निर्माणप्रकारश्चास्य त्रयोदशे तरङ्गे द्रष्टव्यः ॥१७२॥

द्वितीयो मृद्दारश्रृङ्गाद्यो मलहरः ।

पलैकप्रमितं तैलमतसीवीजसम्भवम् ।
प्रदीप्तचुल्लिकासंस्थे न्यसेत्पित्तलभाजने ॥१७७॥
मृद्दारश्रृङ्गजं चूर्णं तोलकैकमितं क्षिपेत् ।
पचेत्तावन् प्रयत्नेन यावन्नैति प्रगाढताम् ॥१७८॥
ततो दृढपिधानायां काचकुप्यां निधापयेत् ।
अयं मृद्दारश्रृङ्गाद्यो नाम्ना मलहरः स्मृतः ॥१७९॥

अस्य गुणाः ।

मृद्दारश्रृङ्गकाद्योऽयं त्वच्यो मलहरः परम् ।
समाख्यातो विशेषेण विविधव्रणरोपणः ॥१८०॥

## अथ खर्परस्य नामानि ।

खर्परः खर्परश्चैव तदेव खर्परीयकम् ।
रसको रसकश्चैव मतं यशदकारणम् ॥१८१॥

खर्परस्य स्वरूपम् ।

खर्परोऽतिखरश्चैव सदलो निर्दलस्तथा ।
मृत्तिकाभश्च पीताभो भाराढ्यश्चेह शस्यते ॥१८२॥

खर्परस्य द्वौ भेदौ ।

खर्परो द्विविधः प्रोक्तः सदलो निर्दलस्तथा ।
सदलो दर्दुराख्यः स्यात्कारवेल्लाभिधोऽपरः ॥१८३॥
खर्परं दर्दुराख्यन्तु योजयेत्सत्वपातने ।
औषधेषु च सर्वत्र कारवेल्लं प्रयोजयेत् ॥१८४॥

खर्परस्य प्रथमः शोधनप्रकारः ।

खर्परं खल्वगं लोहमुद्गरेण विघातयेत् ।
पतितं प्रस्तरांशञ्च यत्नतः परिवर्जयेत् ॥१८५॥
प्रस्तरांशपरित्यक्तं खर्परं त्वथ खल्वगम् ।
निम्बूकस्वरसोपेतं पेषयेत्सप्तवासरम् ॥१८६॥

मृद्दारश्रृङ्गाद्यं मलहरद्वयं निगदव्याख्यातम् ॥१७३-१८०॥

अथ क्रमप्राप्तं खर्परं यशदोपधातुत्वादुच्यते—यशदकारणम् यशदगर्भत्वात् इति भावः ॥१८१॥

सदलो निर्दलश्चेति द्विविधः खर्परः । तौ च क्रमेण दर्दुराख्यया कारवेल्लाख्यया च कथ्येते इह रसतन्त्रे औषधप्रयोगेषु ॥१८२-१८४॥

खर्परशोधनं निम्बुनीरेण मर्दनात् सप्तधा निम्बुनीरे निर्वापणाद्वा, काञ्जिके

विशोषितं तु पीताभं श्लक्ष्णचूर्णं प्रजायते ।
एवं नातिचिरादेव खर्परः परिशुध्यति ॥१८७॥

द्वितीयः शोधनप्रकारः

खर्परः प्रखरे वह्नौ सप्तधा परितापितः ।
निषिक्तो निम्बुकद्रावे शुद्धिमायात्यनुत्तमाम् ॥१८८॥

तृतीयः शोधनप्रकारः ।

खर्परः परिसन्तप्तस्तक्रे वा गृहवारिणि ।
निषिक्तः सप्तवारं तु विमलत्वमवाप्नुयात् ॥१८९॥

खर्परस्य प्रथमो मारणप्रकारः ।

विशोधितं खर्परन्तु पलद्वितयसंमितम् ।
तुल्येन चातिशुद्धेन रसेन्द्रेण विमर्दयेत् ॥१९०॥
श्लक्ष्णचूर्णं ततः कृत्वा सम्पुटस्थं तु कारयेत् ।
पुटयेदतियत्नेन शुष्कवन्योत्पलानले ॥१९१॥
त्रिधैवं पुटितोऽयन्तु निर्विशेषां मृतिं व्रजेत् ।
इत्थं सुमृदुलं रम्यं पीताभं भस्म जायते ॥१९२॥

द्वितीयो मारणप्रकारः ।

खर्परो विमलः शुद्धतुल्यतालकपेषितः ।
सम्पुटस्थस्त्रिपुटितः सर्वथा मृतिमाप्नुयात् ॥१९३

मृतखर्परस्य गुणाः ।

सुमृतः खर्परः शीतः कफपित्तापहः परम् ।
चक्षुष्यः सर्वमेहघ्नो रक्तप्रदरनाशनः ॥१९४॥
रक्तपित्ताश्मरीश्वासगुदामयनिषूदनः ।
जीर्णज्वरहरः कामं रक्तातीसारनिबर्हणः ॥१९५॥

तक्रे वा निर्वापणात् । उक्तं हि—"खर्परः परिसन्तप्तः सप्तवारान् निमज्जितः । निम्बुनीरद्रवस्यान्तर्निर्मलत्वमवाप्नुयात् ॥" इति ॥१८५-१८९॥

खर्परस्य प्रथमो मारणप्रकारः—तुल्येन खर्परसमानेन अतिशुद्धेन इति भक्षणायोग्यतासम्पत्त्यै कथितम् । पीताभमिति यथादृष्टमुक्तम् । प्राञ्चस्तु—"खर्परं पारदेनैव चूर्णयित्वा दिनं पचेत् । वालुकायन्त्रमध्यस्थं शोणं भस्म प्रजायते" इत्याहुः ॥१९०-१९२॥

द्वितीयः प्रकारः—सुगमः ॥१९३॥

मृतखर्परगुणाः—शीतः शीतवीर्यः । उक्तं हि—"खर्परं कटुकं क्षारं कषायं वामकं लघु । लेखनं भेदनं शीतं चक्षुष्यं कफपित्तनुत् । विषाश्मकुष्ठकण्डूनां नाशनं परमं मतम् ॥" इति क्वचित्तु भ्रान्त्या खर्परस्तुत्थस्यैव भेद इत्युक्तं कैश्चित्, तन्न

योगवाही विशेषेण त्रिदोषघ्नो विषापहः ।
विचर्चिकाकुष्ठहरो बलवीर्यविवृद्धिकृत् ॥१९६॥

खर्परस्य मात्रानिरूपणम् ।

गुञ्जार्द्धतः समारभ्य गुञ्जाद्वितयसंमिता ।
खर्परस्य मता मात्रा रोगापनयनक्षमा ॥१९७॥

खर्परस्य आमयिकः प्रयोगः ।

गोक्षुरक्वाथसंयुक्तः खर्परः परिशीलितः ।
विनिहन्त्यचिरादेव मूत्रकृच्छ्रभवां रुजम् ॥१९८॥
वंशलोचनचूर्णेन खर्परः परिशीलितः ।
चिरोत्थितं क्षयोत्थं वा कासं श्वासं समुद्धरेत् ॥१९९॥
खर्परः शीलितस्तुल्यकान्तलोहस्य भस्मना ।
विनिहन्ति गदान् पाण्डुश्वयथुप्रदरादिकान् ॥२००॥
रससिन्दूररजसा खर्परः परिशीलितः ।
निरन्तरप्रयोगेण हन्ति जीर्णज्वरं परम् ॥२०१॥
प्रवालमरिचोपेतो रससिन्दूरसंयुतः ।
सजीरको निम्बुवारा खर्परस्तु निषेवितः ॥२०२॥
धातुज्वरं वह्निमान्द्यं तथा जीर्णज्वरादिकम् ।
विनाशयत्याशु यथा तिमिरं तु प्रभाकरः ॥२०३॥

खर्परस्य प्रथमः सत्वपातनप्रकारः ।

लाक्षाभयाहरिद्रोमागुडरालकटङ्कणैः ।
चूर्णीकृतं खर्परन्तु गव्यदुग्धाज्यतः पचेत् ॥२०४॥
विधाय गोलकं घर्मे शोषयेद्रसकोविदः ।
वृन्ताकमूषानिहितं ध्मापयेत् प्रखराग्निना ॥२०५॥
विद्रुतं परितो ज्ञात्वा ढालयेत् क्षितिगर्तके ।
यशदप्रभमत्यच्छं सत्वं पतति शोभनम् ॥२०६॥

सम्यक्, तुत्थस्य ताम्रोपधातुत्वात्, खर्परस्य च यशदोपधातुत्वात् । यत्तु "रसश्च रसकश्चोभौ येनाग्निसहनौ कृतौ ।" इत्याभाणकं तदपि यशदस्य बह्वग्निउड्डयनशीलत्वात्संगतमेवेति ॥१९४-१९७॥

अस्य च रोगयोग्यः प्रयोगो निगदव्याख्यातः ॥१९८-२०३॥

सत्वपातनप्रकारः—उमा अतसी, सुगममन्यत् । यशदप्रभं सत्वमिति खर्परस्य सत्वं यशदमेव भवति ॥२०४-२०६॥

खर्परस्य द्वितीयः सत्वपातनप्रकारः ।

लाक्षाभयाहरिद्रोमागुडरालकटङ्कणैः ।
यशदप्रभवः पिष्ट एतैस्तु समभागिकैः ॥२०७॥
मूकमूषागतो ध्मातः सततं प्रखराग्निना ।
यशदप्रभमत्यच्छं सत्वमाशु प्रमुञ्चति ॥२०८॥

खर्परसत्वस्य मारणम् ।

[ गीतिका ]

सत्वं पलप्रमाणं खलु खर्परीयकोत्थम् ।
विनिधापयेत्कटाहे परिदीप्तचुल्लिकास्थे ॥२०९॥
विद्रुतं विलोक्य सत्वं परिघट्टयंस्तु दर्व्या ।
त्वधिनिक्षिपेद्विशुद्धं भृशमल्पमल्पमालम् ॥२१०॥
विधिना ह्यनेन सत्वं मृतिमेति निर्विशेषाम् ।
सुमृतं तु सत्वमेवं विनियोजयेद्विशङ्कः ॥२११॥

मृतखर्परसत्वस्य गुणाः ।

सत्वं खर्परसम्भूतं पाण्डुश्वयथुगुल्मनुत् ।
कासश्वासक्षयहरं विषमज्वरनाशनम् ॥२१२॥
रजःशूलं रक्तगुल्मं श्वेतप्रदरमुल्बणम् ।
मधुमेहं तथा हिक्कां विशेषेण विनाशयेत् ॥२१३॥

मृतखर्परसत्वस्य मात्रादिनिरूपणम् ।

मृतखर्परसत्वस्य मात्रा यशदवन्मता ।
आमयेषु च सर्वत्र प्रयोगश्चापि तादृशः ॥२१४॥

## अथ कान्तपाषाणस्य नामानि ।

कान्तपाषाणकः ख्यातः चुम्बको लोहकर्षकः ।
कान्तोपलः कान्तदृषत् स एव परिकीर्तितः ॥२१५॥

कान्तपाषाणस्य शोधनम् ।

चूर्णितं कान्तपाषाणं निम्बूकद्रवसंयुतम् ।
शोभाञ्जनरसेनैव दोलायन्त्रगतं पचेत् ॥२१६॥

मूकमूषा अन्धमूषा ॥२०७-२०८॥
सत्वमारणम्—अल्पमल्पं आलं हरितालं विनिक्षिपेदिति ॥२०९-२११॥
सत्वगुणः खर्परापेक्षयोत्कृष्टः । मात्रादिकं यशदवत् ॥२१२-२१४॥
लौहस्योपधातुत्वात् क्रमप्राप्तकान्तपाषाणस्योपक्रमः कान्तपाषाणकः ख्यातइति । कान्तपाषाणशोधनं निम्बूकरसेन भावयित्वा शोभाञ्जनरसे दोलया

चतुर्थांमं पचेद्धीमान् सततं प्रखराग्निना ।
एवं नातिचिरादेव शुद्धिमायात्यनुत्तमाम् ॥२१७॥

द्वितीयः शोधनप्रकारः ।

चूर्णितं कान्तपाषाणमगस्त्यद्रवभावितम् ।
स्वेदितं तु वराक्वाथे शुद्धिमायात्यनुत्तमाम् ॥२१८॥

कान्तपाषाणस्य मारणप्रकारः ।

विशुद्धं कान्तपाषाणं गोमूत्रेण विमर्दयेत् ।
त्रिफलाक्वथितेनापि विमर्द्य कृतचक्रिकम् ॥२१९॥
सम्पुटस्थं पुटेद्धीमान् सप्तवारं प्रयत्नतः ।
एवन्तु कान्तपाषाणो म्रियते नात्र संशयः ॥२२०॥

मृतकान्तपाषाणस्य गुणाः ।

सुमृतः कान्तपाषाणः शिशिरो बृंहणस्तथा ।
बल्यो वृष्यस्तथा त्वच्यो मूर्च्छामोहनिबर्हणः ॥२२१॥
ज्वरघ्नश्च विषघ्नश्च तथा वार्द्धक्यनाशनः ।
रक्तसञ्जननः कामं हृल्लेपननिषूदनः ॥२२२॥
रजोदोषं शुक्रदोषं रक्तपित्तं सुदारुणम् ।
क्लैब्यं कण्डूं कामलाञ्च क्षयं पित्तं त्वगाश्रितम् ॥२२३॥
कासं श्वासं महाघोरं प्रमेहं चाचिरोत्थितम् ।
विनाशयेद्विशेषेण न सन्देहोऽत्र कश्चन ॥२२४॥

अस्य मात्रा ।

कान्तपाषाणकस्येह रक्तिकाद्वितयोन्मिता ।
पूर्णमात्रा मता विज्ञैर्गदापनयनक्षमा ॥२२५॥

कान्तपाषाणस्य प्रयोगः ।

कान्तपाषाणकः कामं लोहवद्गुणकारकः ।
आमयेषु च सर्वेषु प्रयोगश्चापि तादृशः ॥२२६॥

परिपाचनात् । अथवा निम्बूकरसमिश्रिते शोभाञ्जनरसे दोलया कान्तपाषाणस्य पाचन विधेयम् । उक्तं हि—"शोभाञ्जनरसे साम्लवर्गे दोलागतो दिनम् । पाचितः शुद्ध्यते कान्तपाषाणः पारदोपकृत् ॥" द्वितीये प्रकारे स्वेदितमिति दोलया ॥२१६-२१८॥

एतस्य मारणं गोमूत्रत्रिफलाक्वाथाभ्यां विमर्द्य साध्यम् ॥२१९-२२०॥

मृतकान्तपाषाणगुणाः—कान्तपाषाण. शिशिरः तथा मूर्च्छादिरोगनाशनश्च । न सन्देहोऽत्र कश्चन इति अनुभवप्रत्ययः ॥२२१-२२५॥

कान्तपाषाणप्रयोगो लोहवत् ॥२२६॥

## अथ कासीसस्य नामानि ।

काशीशश्चैव कासीसं पुष्पकासीसकन्तथा ।
पांशुकं पांशुकासीसं खगाख्यञ्च प्रकीर्तितम् ॥२२७॥

कासीसस्य द्वौ भेदौ ।

चूर्णकासीसकञ्चैव पुष्पकासीसकन्तथा ।
कासीसं द्विविधं ख्यातं रसतन्त्रप्रणेतृभिः ॥२२८॥

अनयोः स्वरूपम् ।

चूर्णकासीसकं श्वेतमीषत्पीतञ्च कीर्तितम् ।
पुष्पकासीसकं स्वच्छहरिद्वर्णं प्रकीर्तितम् ॥२२९॥

कासीसस्य शोधनम् ।

कासीसं भृङ्गराजोत्थवारिणा घटिकात्रयम् ।
सकृत् स्विन्नं प्रयत्नेन शुद्धिमायात्यनुत्तमाम् ॥२३०॥

कासीसस्य गुणाः ।

कासीसं तुवरं ग्राहि विपाकोष्णन्तु शीतलम् ।
श्वित्रघ्नं नेत्र्यमतुलं विषघ्नं कचरञ्जनम् ॥२३१॥
वातश्लेष्मामयहरं मूत्रकृच्छ्रप्रणाशनम् ।
कण्डूपाण्डुकृमिघ्नञ्च रक्तसञ्जननं परम् ॥२३२॥
रजःप्रवर्तकं बल्यं ज्वरघ्नं प्लीहनाशनम् ।
बाह्यप्रयोगे विज्ञेयं सङ्कोचनकरं परम् ॥२३३॥

कासीसस्य निर्माणप्रकारः ।

विशुद्धं लोहचूर्णन्तु काचपात्रे निधापयेत् ।
सजलं गन्धकद्रावं शनैस्तस्मिन् विनिक्षिपेत् ॥२३४॥
तावन्तं द्रावकं दद्याद्यावता द्रुतिमाप्नुयात् ।
क्षणेनैवोष्णतां याति फेनश्चोत्तिष्ठते परम् ॥२३५॥

लोहगर्भत्वात् कान्तपाषाणसजातीयं कासीसं क्रमप्राप्तवर्णनम्—कासीसं द्विविधं चूर्णकासीसं पुष्पकासीसञ्चेति । कासीसं विपाके उष्णं स्पर्शतः प्रथमावस्थायान्तु शीतलम्, कचानां केशानां रञ्जनं कृष्णताकरम् । तथा बाह्यप्रयोगे लेपादिना सङ्कोचनकरम् । उक्तञ्च 'कासीसद्वयमम्लोष्णं तिक्तञ्च तुवरं तथा । वातश्लेष्महरं केश्यं नेत्र्यं कण्डूविषप्रणुत् ॥ मूत्रकृच्छ्राश्मरीश्वित्रनाशनं परिकीर्तितम् । सकृद्भृङ्गाम्बुना स्विन्नं कासीसं निर्मलं भवेत्" इति ॥२२७-२३३॥

अथ कासीसनिर्माणप्रकारः विशुद्धं लोहचूर्णमित्यादिना । गन्धकद्रावकक्षेपश्च लोहचूर्णद्रुतिसाधनापर्य्यन्तम् । भानोः सूर्य्यस्य भानवः किरणाः तैः

ततः सारकपत्रेण सारयेद् रसकोविदः ।
मलं सारकपत्रस्थं हित्वा द्रवमिहाहरेत् ॥२३६॥
द्रवोन्मितां क्षिपेत्तीव्रां निर्जलां विमलां सुराम् ।
सुरानिक्षेपणाद् याति कासीसं तु तलस्थताम् ॥२३७॥
ततो द्रवमिमं हित्वा चूर्णं घर्मे निधापयेत् ।
भानुभानुविशुष्कन्तु कासीसं जायतेऽमलम् ॥२३८॥
द्विभागिकन्तु कासीसं सलिले तु त्रिभागिके ।
निक्षिप्तं द्रवतां यातीत्याहु रसविशारदाः ॥२३९॥

कासीसद्रवस्य निर्माणप्रकारः ।

सार्द्धद्वितोलकमिते सलिले तु परिस्रुते ।
पञ्चगुञ्जोन्मितं शुद्धं कासीसं निक्षिपेद् बुधः ॥२४०॥
विद्रुतं जायते शीघ्रं कासीसद्रव उत्तमः ।
गुदभ्रंशविसर्पादिविविधामयनाशनः ॥२४१॥

कासीसस्य मात्रानिरूपणम् ।

गुञ्जार्द्धतः समारभ्य रक्तिकाद्वितयोन्मिता ।
कासीसकस्य कथिता पूर्णमात्रा भिषग्वरैः ॥२४२॥

कासीसस्य आमयिकः प्रयोगः ।

प्लीहशत्रुसहासारयुतं कासीसमुत्तमम् ।
निषेवितं निहन्त्याशु प्लीहानमतिदारुणम् ॥२४३॥
सौभाग्यकन्यकासारयुतं तु परिशीलितम् ।
कासीसं विनिहन्त्याशु रजोरोधभवां रुजम् ॥२४४॥
स्वगो दारुसिताकन्यासारोत्थरजसान्वितः ।
शीलितो हन्ति रक्ताल्पजातां हृद्वेपनव्यथाम् ॥२४५॥
कासीसद्रवसंसिक्तवसनाच्छादितो भृशम् ।
विसर्पशोथः प्रशमं याति नास्ति हि संशयः ॥२४६॥

शुष्कम् । निर्जला विमला सुरा "Absolute Alcohol" इति नाम्ना प्रसिद्धा । स्पष्टमन्यत् ॥२३४-२३६॥

कासीसद्रवः गुदभ्रंशादिनानारोगहरः ॥२४०-२४१॥

कासीसमात्रा गुञ्जार्धतो गुञ्जाद्वयपर्यन्तम् । मात्राधिक्ये सेवितो दाह भ्रान्तिवान्तिकारणमिति ॥२४२॥

अस्य च रोगयोग्यः प्रयोगः—प्लीहशत्रुः शरपुङ्खा, सहासारः कुमारीसारः "मुसब्बर" इति ख्यातः, दारुसिता त्वक् । सुराष्ट्रजा स्फटिकी । कृमिदन्ते

कासीसं त्रिफलायुक्तं वारिणा परिपेषितम् ।
विलिप्तं व्रणशोथानां सवर्णकरणं परम् ॥२४७॥
खगः सुराष्ट्रजाहिङ्गुसुरदारुयुतोऽम्भसा ।
न्यस्तः संवृत्तगुटिको दन्ते कृमिगदापहः ॥२४८॥
एरण्डनिम्बबीजाढ्यं कासीसं सरसाञ्जनम् ।
निषेवितं हरत्याशु विसर्पमचिरोत्थितम् ॥२४९॥
कासीसं रक्तिकैकन्तु कपित्थफलमज्जया ।
शीलितं नाशयत्येव हिक्कामिह समुत्थिताम् ॥२५०॥
सर्जिकाक्षारसंयुक्तं कासीसं परिशीलितम् ।
मासमात्रप्रयोगेण रक्तसञ्जननं परम् ॥२५१॥
धत्तूरगुञ्जाबीजाढ्यः खगस्तु परिलेपितः ।
मासद्वयप्रयोगेण श्वित्रं हन्ति चिरोत्थितम् ॥२५२॥
बाकुचीबीजरजसा खगः खलु सगैरिकः ।
मासद्वयं प्रलेपेन श्वित्रं हन्यात् सुदारुणम् ॥२५३॥
कासीसस्य द्रवो बस्तियोगेन विनियोजितः ।
विनिहन्ति गुदभ्रंशमर्शांसि च विशेषतः ॥२५४॥

कासीसस्य प्रथमो मारणप्रकारः ।

काञ्जिकेन तु विभाव्य सप्तधा शोषयेत्खगमिनांशुभिर्बुधः ।
सम्पुटेच्च लघुना पुटेन तत् स्याद्धि भस्म खलु लोहितप्रभम् ॥२५५॥
समादायाथ तद्भस्म पेषयेन्निम्बुकद्रवैः ।
चक्रिकाः कारयित्वा च पुटेल्लघुपुटे पुनः ॥२५६॥
यावन्निरम्लं तद्भस्म तावदेवं पुनः पुनः ।
निम्बुकोत्थै रसैर्वैद्यः पिष्ट्वा संशोष्य सम्पुटेत् ॥२५७॥
सुश्लक्ष्णं जायते भस्म सर्वदोषविवर्जितम् ।
तत्साध्येषु विकारेषु वीतशङ्कः प्रयोजयेत् ॥२५८॥

द्वितीयो मारणप्रकारः ।

स्नुहीपत्ररसैर्यद्वा मर्दितं पुटितं मुहुः ।
निरम्लीभावपर्यन्तं कासीसं भस्मतामियात् ॥२५९॥

स्फटिक्यादिभिः सह कासीसं जलेन सम्मर्द्य क्षुद्राः गुटिकाः कार्याः । एकां गुटिकां च सन्दशेन गृहीत्वा छिद्रे स्थापयेत् ॥ शिष्टं सुबोधम् ॥२४३-२५४॥

कासीसस्य मारणप्रकारौ—सुगमौ । अम्लराहित्यं प्रायः चत्वारिंशत्पुटै र्निष्पद्यते ॥ कासीसभस्म लौहवत् पाण्डुकामलाद्यामयनाशनं विशेषतः

कासीसभस्मनो गुणादिनिरूपणम् ।

गुणा मात्राविनिर्देशो लौहवत्परिकीर्तितः ।
विशेषतः श्वित्रहरं भिषग्भिः समुदीरितम् ॥२६०॥

इति उपधात्वादिविज्ञानीयो नाम एकविंशस्तरङ्गः ।

---

## अथ मिश्रलोहादिविज्ञानीयो द्वाविंशस्तरङ्गः

अथ पित्तलस्य नामानि ।

पित्तलं पीतलोहञ्च कपिलोहञ्च रीतिका ।
आरं तथारकूटञ्च तदेव परिकीर्तितम् ॥१॥

पित्तलस्य निर्माणप्रकारः ।

द्विभागिकं सूर्यलोहं विधिना परिशोधितम् ।
भागैकिकं च यशदं विमलं तु समाहरेत् ॥२॥
निधाय गारमूषायां प्रधमेत् प्रखराग्निना ।
द्रवीभूतं ततो ज्ञात्वा ढालयेद्रसकोविदः ॥३॥
रीत्याऽनया विशेषेण पित्तलं खलु निर्मितम् ।
भस्मीकृत्य प्रयुञ्जीत रसेषु रसकर्मवित् ॥४॥

आद्यपित्तलस्य स्वरूपम् ।

प्रखरानलसंतप्तं काञ्जिके परिषेचितम् ।
ताम्रप्रभं भवेद्यत्तु जात्यं तत्पित्तलं मतम् ॥५॥

हेयपित्तलस्य स्वरूपम् ।

तप्तं यत्पित्तलं वह्नौ निषिक्तं गृहवारिणि ।
लोहप्रभं भवेत्कामं तद्धेयमिह कीर्तितम् ॥६॥

पित्तलशोधनस्य प्रथम प्रकारः ।

प्रतनूनि च पत्राणि पैत्तलानि समाहरेत् ।
स्थाल्यां वङ्गप्रलिप्तायां न्यस्य गोमूत्रसंयुतम् ॥७॥

श्वित्रघ्नञ्च ॥२५५-२६०॥

तत्रादौ पित्तलनामानि—पीतलोहमिति । तस्यनिर्माणप्रकारः द्विभागिकमिति । सूर्यलोह ताम्रम् । गारमूषालक्षणं मूषादिविज्ञानीये प्रागुक्तम् ॥१-४॥

मारणयोग्य आद्यपित्तलस्वरूपं प्रखरानलसन्तप्तमित्यादि सुगमम् ॥ उक्तं हि—"सन्तप्ता काञ्जिके क्षिप्ता ताम्रा स्याद्राजरीतिका । काकतुण्डी तु कृष्णा स्यान्नासौ सेव्या विजानता" इति ॥५-६॥

पित्तलशोधनं ताम्रवद् गोमूत्रे पाचनात् । अथवा हरिद्राचूर्णयुते

प्रखरानलयोगेन पचेद्यामचतुष्टयम् ।
पित्तलं पक्वमेवन्तु शुद्धिमायात्यनुत्तमाम् ॥८॥

द्वितीयः शोधनप्रकारः ।

तनुपत्रीकृतं तप्तं रजनीरजसा युते ।
क्षिप्तं निर्गुण्डिकातोये पित्तलं शुद्धिमाप्नुयात् ॥९॥

अथ पित्तलमारणस्य प्रथमः प्रकारः ।

सूक्ष्मपत्रीकृतं शोधितं पित्तलं तुल्यगन्धान्वितं खल्वयन्त्रे न्यसेत् ।
पेषयेद्भास्करक्षीरसंयोजितं शोषितञ्चातपे सम्पुटे विन्यसेत् ॥१०॥
लेपिते मृत्स्नया पङ्कपिण्डाभया त्वग्निवारं पुटेद्वारणाख्ये पुटे ।
मारितं पित्तलं त्वत्र रीत्यानया जायते सुन्दरं कज्जलाभं परम् ॥११॥

द्वितीयो मारणप्रकारः ।

तनुपत्रीकृतं शुद्धं पित्तलं पलपञ्चकम् ।
समहिङ्गुलतालाभ्यां मर्दितं कन्यकाम्भसा ॥१२॥
सम्पुटस्थं ततः कृत्वा वारणाख्ये पुटे पुटेत् ।
त्रिधैवं पुटितं यत्नात् पित्तलं याति पञ्चताम् ॥१३॥
कज्जलाभं भवेद्भस्म रमणीयतरं शुभम् ।
इत्थं मृतं पित्तलं तु भवेद् भ्रान्त्यादिवर्जितम् ॥१४॥

तृतीयो मारणप्रकारः ।

पत्रीकृतं पित्तलं तु समगन्धशिलान्वितम् ।
कन्यानीरेण सम्पिष्टं शोषितं सम्पुटे न्यसेत् ॥१५॥
त्रिवारं पुटयेदेवं भस्म स्यात्कज्जलप्रभम् ।
एवं मृतं पित्तलं तु वीतशङ्कः प्रयोजयेत् ॥१६॥

मृतपित्तलस्य गुणाः ।

सुमृतं पित्तलं रूक्षं तिक्तं नातिविलेखनम् ।
कृमिघ्नं कुष्ठशमनं पाण्ड्वामयविनाशनम् ॥१७॥

निर्गुण्डिकातोये निर्वापणात् ॥७-९॥

मारणप्रकारः सूक्ष्मेति । भास्करक्षीरं अर्कदुग्धम् । अग्निवार त्रिवारम् । पङ्कपिण्डाभयेति घनपङ्केनेति यावत् । वारणाख्ये पुटे गजपुटे ॥१०-११॥

द्वितीयो मारणप्रकारः व्याख्यातः ॥१२-१४॥

तृतीये प्रकारे—समगन्धशिलान्वितमिति गन्धकेन शिलया च पृथक् समभागेन योजितम् ॥१५-१६॥

पित्तलं सम्यङ्मृतं रूक्षादिगुणम् । प्रयोगस्ताम्रवत् । मात्रा तु यशदयोगात्

पित्तलस्य प्रयोगमात्रानिरूपणम्।

पित्तलस्य प्रयोगस्तु रविलोहसमो मतः।
गुञ्जार्धतस्तु गुञ्जैकमिता मात्रा च युज्यते ॥१८॥

पित्तलरसायनम्।

पित्तलं कान्तकं व्योमसत्वं मृतं कीटविद्वेषणं त्र्यूषणं तुल्यकम्।
होमधान्याजमोदाग्निभल्लातकब्रह्मबीजोद्भवक्षोदसंयोजितम् ॥१९॥
रक्तिकाद्वौन्मितं मासमासेवितं नाशयेद् दारुणां श्वेतकुष्ठव्यथाम्।
वह्निसन्दीपनं त्वामसम्पाचनं शूलनिर्मूलनं कीटकोत्सादनम् ॥२०॥

## अथ कांस्यस्य नामानि।

कंसीयं कांस्यकं कास्यं घोषपुष्पञ्च घोषकम्।
घोषो घोषं वह्निलोहं तदेव परिकीर्तितम् ॥२१॥

कांस्यस्य निर्माणप्रकारः।

रविलोहं वेदभागमितं विधिविशोधितम्।
भागिकं विमलं वङ्गं गाढं मूषागतं धमेत् ॥२२॥
विद्रुतं जायते रम्यं वरघोषं तु कांस्यकम्।
एवं विनिर्मितं कांस्यं मारणाय प्रयोजयेत् ॥२३॥

ग्राह्यकांस्यस्य स्वरूपम्।

सुनादं भास्वरं स्निग्धं श्वेतं मृदु च निर्मलम्।
घनाग्निसहमत्यन्तं कांस्यं ग्राह्यमिहोच्यते ॥२४॥

हेयकांस्यस्य स्वरूपम्।

निरुज्ज्वलं खरं रूक्षं पीतं दहनतापितम्।
आताम्रं मन्दनादञ्च कांस्यं हेयमुदीरितम् ॥२५॥

कांस्यशोधनस्य प्रथमः प्रकारः।

तनुपत्रीकृतं कांस्यं वह्निसन्तापितं भृशम्।
निर्वापितं गव्यमूत्रे सप्तधा शुद्धिमाप्नुयात् ॥२६॥

गुञ्जापर्यन्तमपि इति विशेषः ॥१७-१८॥

अथ पित्तलरसायनम्—व्योमसत्वमभ्रसत्वम्, कीटविद्वेषणं विडङ्गम्, होमधान्यं तिलाः, अग्निः चित्रकः, ब्रह्मबीजम् पलाशबीजम् ॥१९-२०॥

कांस्यनामानि तन्त्रे व्यवहृतानि ॥२१॥

ताम्रस्य चत्वारो भागाः भागमेक वङ्गस्य। स्पष्टमन्यत् ॥२२-२३॥

ग्राह्यकांस्यं सुनादमिति। उक्तं हि—"श्वेतं दीप्तं मृदु ज्योतिः शब्दाढ्यं स्निग्धनिर्मलम्। घनाग्निसहसूत्राङ्ग कांस्यमुत्तममीरितम्" इति ॥२४॥

निरुज्ज्वलमिति त्याज्यकांस्यस्वरूपम् ॥२५॥

द्वितीयः शोधनप्रकारः।

सूक्ष्मपत्रीकृतं घोषपुष्पाह्वयं मूत्रषट्कान्वितं स्थालिकायां न्यसेत्।
यामसम्पाचितं तीक्ष्णतीक्ष्णाग्निना सर्वदोषोज्झितं जायते सत्वरम्॥

कांस्यमारणस्य प्रथमः प्रकारः।

तनुपत्रीकृतं कांस्यं समगन्धसमन्वितम्।
अर्कक्षीरेण सम्पेष्य शोषयेदातपे दृढम्॥२८॥
सम्पुटस्थं ततः कृत्वा वारणाख्ये पुटे पुटेत्।
एवं पुटत्रयात्कांस्यभस्म स्यात्सुमनोहरम्॥२९॥

द्वितीयो मारणप्रकारः।

तुल्यरक्तान्वितं निम्बुकस्याम्भसा सूक्ष्मपत्रीकृतं कांस्यकं पेषयेत्।
शोषितं त्रिःपुटेत् सम्पुटस्थं ततो घोषपुष्पं तदा पञ्चतां यात्यलम्॥

तृतीयो मारणप्रकारः।

कांस्यं तुल्यशिलागन्धयुतं कन्याम्बुपेषितम्।
पुटेत् त्रिधैवं यत्नेन भस्म स्यात् कज्जलप्रभम्॥३१॥

मृतकांस्यस्य गुणाः।

घोषपुष्पं तु तुवरं तिक्तोष्णं लेखने हितम्।
नेत्रप्रसादनं रूक्षं सरं च विशदं परम्॥३२॥
कृमिघ्नं कुष्ठशमनं कफपित्तप्रणाशनम्।
वातघ्नं दीपनञ्चैव परमेतत्प्रकीर्तितम्॥३३॥

मृतकांस्यस्य प्रयोगादयः।

कांस्यकस्य प्रयोगस्तु रविलोहसमो मतः।
गुञ्जार्द्धतश्च गुञ्जैकमिता मात्रा प्रयुज्यते॥३४॥

## अथ अञ्जनस्य नामानि।

अञ्जनस्य द्वौ भेदौ।

अञ्जनं तु समाख्यातं मेचकं लोचकं तथा।
अञ्जनं द्विविधं ज्ञेयं स्रोतोजञ्च सुवीरजम्॥३५॥

स्य शोधनञ्च—गोमूत्रे निर्वापणात्। ससैन्धवे गोमूत्रे वा पाचनात्॥
मारणञ्च पित्तलवदेव गन्धकार्कदुग्धाभ्यां त्रिः पुटनात्॥२८-२९॥
द्वितीये मारणविधिनिर्देशे रक्तं हिङ्गुलम्॥३०-३१॥

कांस्यं तुवरादिगुणम्। प्रयोगादयश्चास्य ताम्रवदेवेति। अपि च—
"घृतवर्ज्यं बुधैः सर्वं पाच्यं कांस्यस्य पात्रके। भोजनन्तु प्रशस्तं स्याद् रीतिका मध्यमा स्मृता॥" इत्यप्याहुः प्राज्ञः॥३२-३४॥

तत्र स्रोतोऽञ्जनस्य नामानि ।

स्रोतोऽञ्जनं तु स्रोतोजं यामुनेयञ्च यामुनम् ।
नीलाञ्जनं तदेवोक्तं कपोताञ्जनकाह्वयम् ॥३६॥

सौवीराञ्जनस्य नामानि ।

सौवीराञ्जनकं ख्यातं सौवीरं तु सुवीरजम् ।
कृष्णाञ्जनं तथा कालाञ्जनञ्चापि प्रकीर्तितम् ॥३७॥

स्रोतोऽञ्जनस्य स्वरूपम् ।

भङ्गे नीलोत्पलनिभं घर्षणे गैरिकप्रभम् ।
वल्मीकशीर्षप्रतिमं मतं स्रोतोऽञ्जनं बुधैः ॥३८॥

सौवीराञ्जनस्य स्वरूपम् ।

बाह्यतः खलु धूमाभं भङ्गे त्वतिसमुज्ज्वलम् ।
घर्षे खलु मषीवर्णं सौवीराञ्जनमुच्यते ॥३९॥

स्रोतोऽञ्जनसौवीराञ्जनयोः शोधनम् ।

अञ्जनद्वितयं यत्नात्पेषितं त्रिफलाम्भसा ।
दिनसप्तकमात्रेण विशुध्यति न संशयः ॥४०॥

द्वितीयः शोधनप्रकारः ।

भृङ्गराजरसेनेह पेषितं त्वञ्जनद्वयम् ।
दिनसप्तकमात्रेण शुद्धिमायात्यनुत्तमाम् ॥४१॥

तृतीयः शोधनप्रकारः ।

फलत्रिकनिशायुग्मभृङ्गराजरसे भृशम् ।
अञ्जनद्वितयं स्विन्नं यामाच्छुद्धिमवाप्नुयात् ॥४२॥

स्रोतोऽञ्जनस्य गुणाः ।

स्रोतोऽञ्जनं तु शिशिरं तुवरं लेखनं परम् ।
स्निग्धं स्वादु परं ग्राहि कफपित्तविषापहम् ॥४३॥

अञ्जननामानि मेचकमिति । तस्य च स्रोतोजसौवीरकौ भेदौ ॥३५-३७॥

तत्र स्रोतोऽञ्जनस्वरूपं भङ्गे नीलोत्पलनिभमिति । सौवीराञ्जनस्वरूप बाह्यतः खलु धूमाभमिति । सुवीरदेशजातत्वात् सौवीरनाम्ना प्रसिद्धम् । सौवीर देशश्च वितस्ता (जेहलम) नदीनिकटवर्तिकटासराजसमीपे पर्वतमालामयो देशस्तत्र हि खनिः सौवीराञ्जनस्येति ॥ यत्तु केश्चित् श्वेत सकोणं स्फटिकाकृति पाषाण सौवीराञ्जननाम्ना (श्वेत सुरमा) व्यवाह्रियते, तत्तु पाषाणविशेष एव तन्त्रेषु कृष्ण स्यस्यैवाञ्जने वर्णितत्वात् विचार्यमेवेति ॥३८-३९॥

उभयोः शोधनप्रकाराः सुगमा एव । अपिच अञ्जनात् पञ्चमांश ताम्रचूर्णं दत्वा भस्त्राध्मातं गालयेत् । शीते सति मुद्गरघात कुट्टयेत् । तथा हि अञ्जन तस्ताम्रयोगसमापत्त्या नागो विश्लिष्य सताम्रः पृथग्भवति ॥४०-४२॥

रक्तपित्तक्षयहरं नेत्रामयनिषूदनम् ।
हिक्काच्छर्दिप्रशमनं स्तनवृद्धिकरं परम् ॥४४॥

सौवीराञ्जनस्य गुणाः ।

सौवीरमञ्जनं ग्राहि स्निग्धञ्च तुहिनोपमम् ।
रक्तपित्तप्रशमनं नेत्रामयहरं परम् ॥४५॥
विषहिक्कापहं कामं व्रणशोधनरोपणम् ।
परं रजोरोधकरं रक्तप्रदरनाशनम् ॥४६॥

आभ्यन्तरप्रयोगे स्रोतःसौवीराञ्जनयोः मात्रा ।

गुञ्जार्धतः समारभ्य गुञ्जैकमितमञ्जनम् ।
दिनद्वयं त्रयं वापि प्रयुञ्जीत भिषग्वरः ॥४७॥
अञ्जनद्वितयं रक्तप्रदरे तु दिनत्रयात् ।
अधिकं नोपयुञ्जीत रसतन्त्रविशारदः ॥४८॥

अथ पुष्पाञ्जनस्य परिचयः ।

रीतिकाद्रावणविधौ रीतिस्थं यशदं द्रुतम् ।
समेत्यम्बरपीयूषयोगेन सितचूर्णताम् ॥४९॥
तदेव सितचूर्णन्तु पुष्पाञ्जनमुदीरितम् ।
भस्त्राध्मातं पुष्पितं तु यशदं वा तदाह्वयम् ॥५०॥

पुष्पाञ्जनस्य गुणाः ।

पुष्पाञ्जनं तु शिशिरं स्निग्धं पित्तप्रणाशनम् ।
अभिष्यन्दप्रशमनं परं दाहविनाशनम् ॥५१॥
विचर्चिकादित्वग्दोषशमनं व्रणरोपणम् ।
समाख्यातं विशेषेण हिक्कापञ्चकनाशनम् ॥५२॥

अञ्जनत्रितयस्य बाह्यप्रयोगः ।

अञ्जनद्वितयं पुष्पाञ्जनेन सहितं तु वा ।
यशदेनाग्निदग्धेन ह्यभिष्यन्दहरं परम् ॥५३॥

स्रोतोऽञ्जनगुणाः—शिशिरमिति । तुवरं कषायम् ॥४३-४४॥

सौवीराञ्जनं ग्राहि स्निग्धं तथा तुहिनोपमं अतिशीतवीर्यमित्यर्थः ॥

अधिकं नोपयुञ्जीतेति अधिकोऽनयोः प्रयोगो वन्ध्यात्वव्यापत्कर इत्यवधेयम् । अञ्जनं ह्यवयवेषु सञ्चितं भवति नैरन्तर्येणोपयुक्तं नागांशसाहचर्याच्चामृतनागजांश्चोपद्रवान् सञ्जनयति ॥४७-४८॥

पुष्पाञ्जनपरिचयो गुणाश्च निगदव्याख्याताः । अग्नियोगात् पुष्पितस्य यशदस्य पुष्पाञ्जनं नामेति । रीतिका पित्तलम् ॥४९-५२॥

अभिष्यन्दहरत्वं त्रयाणामपि समानो गुणः ॥५३॥

तिमिरहराञ्जनम् ।

तोलकैकमितं सीसं विशुद्धं दर्विकागतम् ।
हसन्तिकायां विन्यस्य गालयेत्प्रखराग्निना ॥५४॥
सीसोन्मितं सुविमलं सूतं सीसे तु विद्रुते ।
निक्षिप्य द्रुतमादाय खल्वे सम्पेषयेद् दृढम् ॥५५॥
श्लक्ष्णचूर्णं ततो ज्ञात्वा द्वयोर्द्विगुणमञ्जनम् ।
सौवीरं विमलं दत्त्वा पेषयेद्दिनसप्तकम् ॥५६॥
माषकत्रितयं चन्द्रं दत्त्वाथ परिपेषयेत् ।
कुप्यां न्यसेन्मतमिदं तिमिरापहमञ्जनम् ॥५७॥

तुहिनाञ्जनम् ।

सोरकं तोलकार्द्धन्तु घनसारञ्च तन्मितम् ।
पलैकं खलु सौवीरं दत्त्वा सम्पेषयेद् भृशम् ॥५८॥
निदध्यात्काचकुप्यान्तु नाम्नेदं तुहिनाञ्जनम् ।
कण्डूदाहपरिस्रावहरं परमुदीरितम् ॥५९॥

## अथ शिलाजतुनामानि ।

शिलाजतु च शैलेयं शिलाजं शैलधातुजम् ।
शिलामयः शिलास्वेदः शिलानिर्यास इत्यपि ॥६०॥
अश्मजं त्वश्मजतुकं गिरिजं त्वद्रिजं तथा ।
अश्मोत्थमश्मलाक्षा च गैरेयञ्च मतन्तु तत् ॥६१॥

शिलाजतुपरिचयः ।

सूर्यसन्तापसन्तप्ताः शिलाः शैलाधिपस्य यत् ।
गाढं मुञ्चन्ति निर्यासं तच्छिलाजतु कीर्तितम् ॥६२॥
शैलाधिपशिलासारो निर्गतो रवितापतः ।
शुष्कः सन्मूर्ततां यातः शिलाजतु निगद्यते ॥६३॥

शिलाजतुभेदाः ।

सौवर्णं राजतं ताम्रं लौहञ्चेति विभेदतः ।

तोलकैकमितं सीसकमिति शार्ङ्गधरादौ प्रत्यञ्जननाम्ना व्यवहृतम् । चन्द्रं कर्पूरम् ॥५४-५७॥

तुहिनाञ्जनं चक्षुःशीतलताहेतुत्वात्, तच्च निगदव्याख्यातम् ॥५८-५९॥

अथ शिलाजतुनामानि—तन्त्रेषु व्यवहृतप्रायाणि । एतस्य च परिचयो निगदव्याख्यातः ॥६०-६३॥

शिलाजतुभेदाः सौवर्णादयः । उक्तं हि प्राचीनैः—"सौवर्णं राजतं ताम्र

शिलाजतु समाख्यातं भिषग्भिस्तु चतुर्विधम् ॥६४॥

तेषां रूपाणि।

शिशिरं मधुरं तिक्तं कटुकं कटुपाकि च।
जपाकुसुमसङ्काशं सौवर्णं शैलधातुजम् ॥६५॥
शिशिरं पाण्डुरं तिक्तं स्वादुपाकि च राजतम्।
तिक्तोष्णतीक्ष्णं नीलाभं ताम्रं गिरिजमीरितम् ॥६६॥
तिक्तं सलवणं कृष्णं विपाके कटुशीतलम्।
गुरु स्निग्धं कषायञ्च सर्वश्रेष्ठं तदायसम् ॥६७॥
सौवर्णं वातपित्तघ्नं राजतं श्लेष्मपित्तहृत्।
कफघ्नं ताम्रजं ज्ञेयं त्रिदोषहरमायसम् ॥६८॥

शिलाजतुनः शोधनम्।

[ गीतिका ]

विगताम्बुदे निवाते धरणीतलप्रदेशे।
प्रखरे निदाघकाले प्रणयेच्छिलाजशुद्धिम् ॥६९॥
विमलानि भाजनानि त्वयसा विनिर्मितानि।
युगसंमितानि तीव्रे निदधीत सूर्यतापे ॥७०॥
सुविचूर्णितं शिलाजं विनिधाय पात्रमध्ये।
द्विगुणं प्रतप्तनीरं त्रिफलाकषायमर्द्धम् ॥७१॥
गिरिजे प्रदाय यामं निदधीत तीव्रतापे।
कामं विमर्द्य गिरिजं विदधीत वस्त्रपूतम् ॥७२॥
विनिधाय पूर्वपात्रे निदधीत तीव्रतापे।
अथ तीव्रतापयोगाद्विमलं सरप्रकाशम् ॥७३॥

मायसञ्च चतुर्विधम्। शिलाजतु हि विज्ञेयं तत्तल्लक्षणलक्षितम्" इति ॥६४॥

तेषां रूपाणि—शिशिरं मधुरं तिक्तमित्यादिना सौवर्णम्। उक्तं हि—"सौवर्णन्तु जपापुष्पवर्णं भवति शैलजम्। मधुरं कटुतिक्तञ्च शीतलं कटुपाकि च" इति। तथा शिशिरं पाण्डुरं तिक्तं राजतमिति। तथा चोक्तम्—"राजतं पाण्डुरं शीतं कटुकं स्वादुपाकि च" इति। तिक्तोष्णादिगुणं ताम्रम्। यथाहु:—"ताम्रं मयूरकण्ठाभं तीक्ष्णमुष्णं च जायते" इति॥ लोहं तु—तिक्तं सलवणं कृष्णं शीतलञ्च। स्मरन्ति हि—"लोहं जटायुपक्षाभं सतिक्तं लवणं भवेत्। विपाके कटुकं शीतं सर्वश्रेष्ठमुदाहृतम्" इति। एतेन शिलाजतु स्वोपादानस्वर्णादिधातुवत् शीतवीर्यं ताम्रस्य तु उष्णवीर्यम्। ताम्रस्योष्णवीर्यत्वात्। तस्मात् लोहं शिलाजत्वपि उष्णवीर्यमिति लोकोक्तिभ्रान्तेति निश्चयः ॥६५–६८॥

मृदुलं प्रगाढकृष्णं यदुपैति नीरपृष्ठे ।
निदधीत सोष्णतोये खलु भाजनेऽपरस्मिन् ॥७४॥
अथ वै द्वितीयपात्रात् खलु भाजने तृतीये ।
अथ भाजनात्तृतीयात् निदधीत तुर्यपात्रे ॥७५॥
सलिलं तु यावदच्छं न भवेत्तु तावदेवम् ।
विदधीत वैद्यवर्यः सततं कृतावधानः ॥७६॥
सलिलं भवेद्यदाच्छं मलमेत्यधःप्रदेशे ।
सलिलोर्ध्वभागसंस्थं गिरिजं हरेद्विशुद्धम् ॥७७॥
विधिना ह्यनेन शुद्धिं तदुपैति निर्विशेषाम् ।
गिरिजं विशुद्धमेवं विनियोजयेद्विशङ्कः ॥७८॥

प्रक्षेपक्वाथमानम् ।

शिलाजतुसमं क्वाथ्यं जलमष्टगुणं ततः ।
पादांशशेषितः क्वाथः शिलामयविशुद्धये ॥७९॥

द्वितीयः शोधनप्रकारः ।

निरुक्तेनैव विधिना क्वाथस्थाने तु गोजलम् ।
दत्त्वाहृता शिलालाक्षा शुद्धिमायात्यसंशयम् ॥८०॥

तृतीयः शोधनप्रकारः

पूर्वोक्तेनैव मार्गेण क्वाथे भृङ्गोत्थितं रसम् ।
दत्त्वाहृतः शिलास्वेदः परां शुद्धिमवाप्नुयात् ॥८१॥

विशुद्धशिलाजतुनः परीक्षणम् ।

याङ्गारसंस्था निर्धूमा पक्वा लिङ्गोपमा भवेत् ।
आस्वादे कटुतिक्ता च शिलालाक्षा तु सामला ॥८२॥

शिलाजतुशोधनप्रकारश्चरकाचार्योक्त एव व्यवहृतः सर्वसम्मतश्चेति स एव सरलाक्षरैर्गीतिकया च निर्दिष्ट आचार्यैः। युगसमितानीति चत्वारि। अशुद्धन्तु दाहादिकारणमाहुः। स्मरन्ति हि—"अशुद्धं दाहमूर्च्छायभ्रमपित्तास्रशोपकृत्। शिलाजतु प्रकुरुते मान्द्यमग्नेश्च विड्ग्रहम्" इति॥ प्रक्षेपक्वाथस्य मानञ्च जलमष्टगुणं शिलाजतुसमानञ्च क्वाथ्यद्रव्यमिति। यथाह स्म वाग्भटः—"तुल्यं गिरिजेन जले वसुगुणिते भावनौषधं क्वाथ्यम्॥" इति॥ इत्थं शुद्धस्य गुणोत्कर्षाय भावनान्तरयोगोऽपि स्मर्यते कैश्चित्। विस्तरस्तु शिवागुटिकानिर्माणादौ वृद्धवाग्भटेऽनुसन्धेयः। भृङ्गरसत्रिफलागोदुग्धादिभिः शोधनन्तु गोत्रदोषशान्तये तत्र तत्र गुणाधानार्थञ्च कार्यमेव "गोदुग्धत्रिफलाभृङ्गद्रवैः पिष्टं शिलाजतु। दिनैकं लोहजे पात्रे शुद्धिमायात्यसंशयम्" इति स्मरणात् ॥६९-८१॥

शुद्धशिलाजतुपरीक्षणम् याऽङ्गारसंस्थेत्यादिना। यथाहुः—"वह्नौ

अपरं परीक्षणम्।

सलिले या विनिक्षिप्ता तन्तुप्रसवकारिणी।
आस्वादे कटुतिक्ता च शिलालाक्षा तु सामला ॥८३॥

शिलामयस्य गुणाः।

शिलाजतु मतं तिक्तं विपाके कटुकं तथा।
मूत्रलञ्च विशेषेण योगवाहि रसायनम् ॥८४॥

अपि च—

शिलास्वेदो बल्यः श्वयथुशमनः पाण्डुहरणः
क्षयश्वासप्लीहज्वरदहनमान्द्यापहरणः।
अपस्मारोन्मादोदरगुदजकृच्छ्रप्रशमनः
समीरस्थौल्योरःक्षतहृदयशूलैकदलनः ॥८५॥
प्रमेहकरिकेशरी प्रबलशूलकालानलः
कृमिप्रशमनः परं सुविततारमरीशैलभित्।
सकुष्ठवमिगुल्मजित् प्रबलवातरक्तप्रणुत्
स्मृतो रसविशारदैः खलु शिलामयो निर्मलः ॥८६॥

क्षिप्तन्तु निर्धूमं पक्वं लिङ्गोपमं भवेत्। तृणाग्रेणाम्भसि क्षिप्तमधोगलति तन्तुवत् ॥ गोमूत्रगन्धि मलिनं शुद्धं ज्ञेयं शिलाजतु" ॥ इति ॥ सामलेत्यत्र सा अमला इति च्छेदः ॥८२-८३॥

गुणाः—उक्तमन्यत्रापि "शिलाह्वं कटुतिक्तोष्णं कटुपाकं रसायनम्। छेदि योगावहं हन्ति कफमेहाश्मशर्कराः ॥ मूत्रकृच्छ्रं क्षयं श्वासं वातार्शांसि पाण्डुताम्। अपस्मारं तथोन्मादं शोथकुष्ठोदरक्रिमीन्" इति। स्यादेतत् शिशिरं हि शिलाजतु इति पूर्वमुक्तमत्र च शिलाह्वं कटुतिक्तोष्णमिति उष्णवीर्यमुच्यते विरुद्धम्? अत्र ब्रूमहे—न वयं सर्वं शिलाजतु शीतवीर्यमिति प्रतिजानीमहे यावता भवतैवं पर्य्यनुयुज्येमहि अपितु ताम्रमुष्णवीर्य्यं सौवर्णं राजतं लौहञ्च शीतवीर्यमिति "शिलाभ्यो यस्य यज्जातं धातोस्तत्तद्गुणं वदेत्" वृद्धवाग्भटस्मरणात्। यत्तु अनुभवसिद्धमस्योष्णत्वमिति तत्र च "सर्वञ्च तिक्तकटुकं नात्युष्णं कटुपाकतः" इति गृहाण। कटुपाकत इति हेतुपञ्चम्यास्तासिल्। इदमुक्तं भवति—कटुपाकप्रभावाद् उष्णत्वमपि स्वधातुगुणयोगात् शीतलं सत् नात्युष्णं भवतीति। तस्मात् नात्युष्णमिति सयुक्तिको विरोधपरिहार उद्भावितो वाग्भटैः ॥ उत्कृष्टञ्च तत्—"गोमूत्रगन्धि कृष्णं गुग्गुल्वाभं विशर्करं मृत्स्नम्। स्निग्धमनम्लकषायं मृदु गुरु च शिलाजतु श्रेष्ठम्" इति कथितम् ॥ इत्यलमत्राम्रेडितेन ॥ शिलास्वेदो बल्य इत्यादिना शिलाजतु विशेषगुणाः निगदव्याख्याताः ॥८४-८६॥

शिलाजतुनो मात्रा।

द्विगुञ्जतः समारभ्य वसुगुञ्जमितं परम्।
शिलामयं प्रयुञ्जीत बलकालाद्यपेक्षया ॥८७॥

शिलामयस्य आमयिकः प्रयोगः।

शिलाजतु क्षौद्रयुतं शीलितं तु द्विगुञ्जकम्।
शुक्रबन्धसमुद्भूतं मूत्रकृच्छ्रं निवारयेत् ॥८८॥
दशमूलकषायेण शिलाजतु सितायुतम्।
अष्ठीलिकां वातबस्तिं वातकुण्डलिकां हरेत् ॥८९॥
वरुणादिकषायेण शीलितस्तु शिलामयः।
विनिहन्त्यचिरादेव मूत्राघातमथाश्मरीम् ॥९०॥
अमृतादिकषायेण शीलितं तु शिलाजतु।
मूत्राघातं मूत्रकृच्छ्रं नाशयत्यविलम्बितम् ॥९१॥
ससितं च सकर्पूरं शैलेयं परिशीलितम्।
मूत्रातीतं तथा मूत्रजठरञ्च विनाशयेत् ॥९२॥
गोक्षुरक्वाथसंयुक्ता शिलालाक्षा तु शीलिता।
मूत्रकृच्छ्राण्यशेषाणि नाशयेदतिसत्वरम् ॥९३॥
काकोल्यादिगणोद्दिष्टभेषजैः सह शीलितः।
शिलामयो वराशुद्धो वीर्यवृद्धिकरः परम् ॥९४॥

शिलाजतुनो मात्रा देशकालापेक्षया स्पष्टमुक्ता। वसुगुञ्जमितामिति अष्टगुञ्जाप्रमितं यावत्। कर्षमर्धपलं पलं हीनमध्योत्तमो योगः प्राचीनोक्तो नाधुना हीनबलेषु युक्तः व्यापद्भयात्। तदेतदाह बलकालाद्यपेक्षयेति ॥८७॥

शिलामयस्य रोगयोग्यः प्रयोगः—वातकुण्डलिका मूत्राघातविशेषः। वरुणादिगणस्तु सुश्रुतोक्तः। तद्यथा—"वरुणार्तगलशिग्रुमधुशिग्रुतर्कारीमेषशृङ्गीपूतीकनक्तमालमोरटाग्निमन्थसैरेयकद्वयबिल्वीवसुकवसिरचित्रकशतावरीबिल्वाजशृङ्गीदर्भा बृहतीद्वयं च ॥ वरुणादिर्गणो ह्येष कफमेदोनिवारणः। विनिहन्ति शिरःशूलगुल्माभ्यन्तरविद्रधीन् ॥" अमृतादिकषायस्तु—"अमृतं नागरं धात्री वाजिगन्धा त्रिकण्टकम्। प्रपिबेद्वातरोगार्त्तः सशूली मूत्रकृच्छ्रवान्।" इत्युक्तः। ससितमित्यादिप्रयोगे शैलेयं शिलाजतु। काकोल्यादिगणश्च—"काकोलीक्षीरकाकोलीजीवकर्षभकमुद्गपर्णीमाषपर्णीमेदामहामेदाच्छिन्नरुहाकर्कटशृङ्गीतुगाक्षीरीपद्मकप्रपौण्डरीकर्द्धिवृद्धिमृद्वीकाजीवन्त्यो मधुकं चेति।" इति सुश्रुतोक्तः। गुणाश्चास्य "काकोल्यादिरयं पित्तशोणितानिलनाशनः। जीवनो बृंहणो वृष्यः स्तन्यश्लेष्मकरस्तथा ॥" वीरतर्वादिकोऽपि गणः सुश्रुताभिहित एव। यथा—"वीरतरुसहचरद्वयदर्भवृक्षादनीगुन्द्रानलकुशकाश-

लोहताप्यघृतक्षौद्राभयाजन्तुघ्नसंयुता ।
शीलिता तु शिलालाक्षा यक्ष्माणमिह नाशयेत् ॥९५॥
वीरतर्वादिकगणभेषजक्वाथसंयुतम् ।
गिरिजं शीलितं हन्ति मूत्रकृच्छ्रादिकान् गदान् ॥९६॥
सिताक्षीरयुतं प्रातः शीलितं तु शिलाजतु ।
विनिहन्ति विशेषेण प्रमेहजनितां व्यथाम् ॥९७॥
शिलाजतु सगोमूत्रं पुरविश्वकणायुतम् ।
ऊरुस्तम्भं महाघोरं नाशयत्यविलम्बितम् ॥९८॥
लोहभस्मयुतं नित्यं शिलाजतु समाह्निकम् ।
शीलितं तु विशेषेण रक्तसञ्जननं परम् ॥९९॥
अर्जुनक्वाथसंयुक्तं शिलाजतु निषेवितम् ।
मासमात्रप्रयोगेण विनिहन्ति हृदामयम् ॥१००॥
अग्निमन्थरसोपेतं शिलाजतु निषेवितम् ।
मासद्वयप्रयोगेण स्थौल्यं नाशयति ध्रुवम् ॥१०१॥
शालसारादितोयेन शैलेयं परिभावितम् ।
तेनैव च कषायेण द्विमासं परिशीलितम् ॥१०२॥
विनाशयेच्चिरोद्भूतं मधुमेहं विशेषतः ।
तथैव नाशयत्याशु त्वश्मरीं मूत्रशर्कराम् ॥१०३॥
कणापाषाणभेदैलासंयुतस्तण्डुलाम्भसा ।
शिलामयः शीलितस्तु प्रमेहं विनिवारयेत् ॥१०४॥

श्मभेदकाग्निमन्थमोरटावसुकवसिरभल्लूककुरण्टकेन्दीवरकपोतवङ्का श्वदंष्ट्रा चेति। वीरतर्वादिरित्येष गणो वातविकारनुत् । अश्मरीशर्करामूत्रकृच्छ्राघातरुजापहः।" पुरो गुग्गुलुः, विश्वं शुण्ठी। शालसारादिगणोऽपि सुश्रुतोक्तः "शालसाराजकर्णखदिरकदरकालस्कन्धक्रमुकभूर्जमेषशृङ्गीतिनिशचन्दनकुचन्दनशिंशपाशिरीषासनधवार्जुनतालशाकनक्तमालपूतीकाश्वकर्णागुरूणि कालीयकं चेति। शालसारादिरित्येष गणः कुष्ठविनाशनः। मेहपाण्ड्वामयहरः कफमेदोविशोषणः॥"

साम्राधिका पिप्पली। सचन्द्रः सकर्पूरक्षोदः । शोणकायज्वरो नाम सपदि सर्वकायस्य शोणवर्णप्रदो ज्वरविशेषः "Scarlet Fever" इत्याङ्ग्लभाषायाम् । स्पष्टमन्यत् । दिङ्मात्रमत्रोदाहृतः प्रयोगः। यच्चाधुना दृश्यते प्रायशो वार्द्धक्ये रक्तवहा धमन्यः खरतां गताः रक्तवेगासहाः सत्यः शिरोरुग्भ्रममनोदेहेन्द्रियादिदौर्बल्यादीन् लक्षणानन्यांश्च कांश्चिद्दारुणानुपद्रवान् पक्षवधादीन् जनयन्त्यस्तत्रापि वातपित्तहरैर्मूत्रलैर्वा द्रव्यैः सह शिलाजतुनः प्रयोगः सुखकरो भवतीति ।

पलामागधिकायुक्ता शिलालाक्षा तु शीलिता ।
मूत्राघातं मूत्रकृच्छ्रं नाशयत्यविकल्पतः ॥१०५॥
शिलामयः शिलाघृष्टः सचन्द्रः परिपूरणात् ।
क्षतं सद्योऽभिघातोत्थं विनापाकं प्ररोपयेत् ॥१०६॥
रजनीरजसोपेता शिलालाक्षा तु शीलिता ।
गोमूत्रेण समाख्याता कुम्भकामलिनां हिता ॥१०७॥
लोहकाञ्चनभस्माढ्यः सर्ज्जकद्रवभावितः ।
शिलामयो गुञ्जमितः सततं परिशीलितः ॥१०८॥
मसूरिकाज्वरं स्फोटं शोणकायज्वरं तथा ।
नाशयत्यचिरादेव वृत्रमिन्द्राशनिर्यथा ॥१०९॥

अथ गैरिकस्य नामानि ।

गैरिकं त्वथ गैरेयं गिरिमृद् गिरिमृत्तिका ।
रक्तधातुर्लोहधातुस्तदेव गिरिमृद्भवम् ॥११०॥

गैरिकस्य द्वैविध्यम् ।

गैरिकं तु समाख्यातं द्विविधं रसकोविदैः ।
पाषाणगैरिकं त्वाद्यं द्वितीयं स्वर्णगैरिकम् ॥१११॥

तयोः स्वरूपम् ।

सुवर्णगैरिकं स्निग्धं मसृणं त्वतिकोमलम् ।
पाषाणगैरिकं रूक्षं कठिनं नातिलोहितम् ॥११२॥
पाषाणगैरिकात् श्रेष्ठं कथितं स्वर्णगैरिकम् ।
अतः सर्वत्र मतिमान् योजयेत्स्वर्णगैरिकम् ॥११३॥

गैरिकशोधनस्य प्रथमः प्रकार ।

सुवर्णगैरिकं खल्वे चूर्णीकृत्य ततः परम् ।
भावितं गव्यपयसा शुद्धिमायात्यनुत्तमाम् ॥११४॥

तथा—"ज्वरी ज्वरघ्नाम्बुदपर्पटादेः क्राथेन रक्ती मधुयष्टिकायाः । शोषी रसैः क्रव्यभुगामिषोत्थैर्मायूरमांसैः पयसा च कार्श्ये ॥ मध्वम्बुना मेदसि सम्प्रवृद्धे क्षीरेण पथ्याकुलबुद्धिसत्त्वः । पाण्ड्वामयार्तोदरे सशोफे पिबेच्छिलाजं महिषीजलेन ॥ अश्म वीरतराद्येन कुष्ठं खदिरवारिणा । विषं विषघ्नैरगदैः हन्त्येवं तद् यथामयम् ॥" इति च वाग्भटोक्तमनुसन्धेयमिति । तथा चास्य प्रयोगानन्तरमपि पथ्यापथ्ये विशेषः—"व्यायामातपमारुतचेत.सन्तापगुरुविदाह्यादि । उपयोगादपि परतो द्विगुणं परिवर्जयेत् कालम् ॥" "कुलत्थान् काकमाचीं च कपोतांश्च सदा त्यजेत्। पिबेन्माहेन्द्रमुदकं कौपं प्रास्रवणाम्बु वा" इति च ॥८८-१०९॥

अथ गैरिकनामानि तन्त्रव्यवहृतानि । तच्च द्विविधं पाषाणगैरिकं स्वर्ण-

द्वितीयः शोधनप्रकारः ।

गव्याज्येन तु सम्भृष्टं यत्नतो मन्दवह्निना ।
सुवर्णगैरिकं शीघ्रं शुद्धिमाप्नोत्यसंशयम् ॥११५॥

शुद्धस्वर्णगैरिकस्य गुणाः ।

सुवर्णगैरिकं स्निग्धं मधुरं शिशिरं परम् ।
तुवरं तापहरणं हिक्कावमिनिवारणम् ॥११६॥
रक्तपित्तप्रशमनं तथासृग्दरनाशनम् ।
विषापहं तथा बल्यं मतं लोचनयोर्हितम् ॥११७॥
उदर्दकण्डूशमनं तथैव व्रणरोपणम् ।
ज्वरघ्नं च विशेषेण वह्निदाहनिबर्हणम् ॥११८॥

गैरिकस्य मात्रानिरूपणम् ।

द्विगुञ्जतः समारभ्य चतुर्गुञ्जमितं परम् ।
सुवर्णगैरिकं शुद्धं युञ्जीत भिषजां वरः ॥११६॥

गैरिकस्य आमयिकः प्रयोगः ।

निशाभ्रबीजजन्तुघ्नसोमवल्करसाञ्जनैः ।
गैरिकं वारिणा लेपात् योनिकण्डूयनं हरेत् ॥१२०॥
सिन्धूत्थयष्टीनिशया गैरिकं परिशीलितम् ।
विनाशयेद्विशेषेण ह्यभिष्यन्दभवां रुजम् ॥१२१॥
नागरारग्वधखटीकट्फलेन सकाञ्जिकम् ।
कर्णमूलोत्थितं शोथं हन्ति लिप्तं तु गैरिकम् ॥१२२॥
सुवर्णगैरिकं गुञ्जाद्वयं मधुसमन्वितम् ।
भक्षितं विनिहन्त्याशु शीतपित्ताह्वयं गदम् ॥१२३॥
सुवर्णगैरिकं शुद्धं निशया परिलेपितम् ।
शीतपित्तं तथोदर्दं नाशयत्यविकल्पतः ॥१२४॥
गैरिकं चन्दनोशीरधान्यकक्काथसंयुतम् ।
एलया सितया वापि रक्तपित्तं विनाशयेत् ॥१२५॥

गैरिकञ्चेति । तद् गव्यपयसा भावितं गोघृतभृष्टस्वा शुध्यति ॥११०-११५॥

तस्य गुणाः—स्निग्धं मधुरमित्यादि ॥११६-११८॥

तस्य मात्रा द्विरक्तिकातः चतुर्गुञ्जापर्यन्तम् ॥११६॥

अथास्य रोगयोग्यः प्रयोगः—निशा हरिद्रा, जन्तुघ्नं विडङ्गम्, सोमवल्कः श्वेतखदिरः। मालतीकलिका तदाख्यवल्लीमुकुलानि । खगः कासीसम् । विसर्पितास्

मालतीकलिकालाक्षारक्तचन्दनसंयुतम् ।
सुवर्णगैरिकं हन्ति व्रणशुक्रं नवोत्थितम् ॥१२६॥
सुवर्णगैरिकं शुद्धं केवलं वा खगान्वितम् ।
घृतेन लिप्तं हन्त्याशु विसर्पस्य विसर्पिताम् ॥१२७॥
नारिकेलस्य तैलेन विमलं स्वर्णगैरिकम् ।
प्रलिप्तं नाशयेत्पीडां वह्निदग्धव्रणोत्थिताम् ॥१२८॥
रससिन्दूरसंयुक्तं विमलं स्वर्णगैरिकम् ।
शीलितं नाशयेत्तूर्णं जीर्णं वा पैत्तिकं ज्वरम् ॥१२९॥

गैरिकाद्यमलहरः ।

सुवर्णगैरिकं शुद्धं तोलकैकमितं शुभम् ।
तन्मितां रजनीञ्चैव मापकं भालभूषणम् ॥१३०॥
सिक्थतैलं च विमलं कर्षत्रितयसंमितम् ।
सम्पेष्य खलु यत्नेन काचकुप्यां तु विन्यसेत् ॥१३१॥
गैरिकाद्यो मलहरो नामतः परिकीर्तितः ।
कण्डूदाहप्रशमनो विविधव्रणरोपणः ॥१३२॥

इति मिश्रलोहादिविज्ञानीयो नाम द्वाविंशस्तरङ्गः ।

---

## अथ रत्नविज्ञानीयस्त्रयोविंशस्तरङ्गः ।

रत्नपदनिर्वचनम् ।

रमणीयतरं यस्माद्रमन्तेऽस्मिन्नतीव वा ।
तस्माद्रत्नमिदं ख्यातं शब्दशास्त्रविशारदैः ॥१॥

नवमहारत्नानि ।

हीरकं त्वथ माणिक्यं मौक्तिकं पुष्परागकम् ।
नीलं तार्क्ष्यञ्च वैदूर्यं गोमेदं विद्रुमं तथा ॥२॥
एतानीह महारत्नान्याख्यातानि नवानि तु ।

नवग्रहाणां रत्नानि ।

माणिक्यं मौक्तिकं चैव विद्रुमं तार्क्ष्यसंज्ञकम् ॥३॥

इतस्ततो विसृतिम् ॥१२०-१२९॥
गैरिकाद्यमलहर'—भालभूषणं सिन्दूरम् ॥१३०-१३२॥
रत्नपदनिरुक्तिः—रमणीयतरं यस्मादिति निगदव्याख्यातम् ॥१॥
नव महारत्नानि हीरकादीनि ॥२॥
नवग्रहाणां रत्नानि नवग्रहदैवतकानि माणिक्यादीनि उक्तं हि "माणिक्य

पुष्परागः पविर्नीलं गोमेदं च विदूरजम् ।
नवग्रहाणां क्रमशो रत्नानि परिलक्षयेत् ॥४॥

अथ हीरकस्य नामानि ।

हीरको हीरकं हीरमभेद्यं भिदुरं तथा ।
कुलिशं वज्रकं वज्रं तथोक्तं भार्गवप्रियम् ॥५॥
स्निग्धं विद्युद्विभं स्वच्छमलेख्यं च विलेखनम् ।
तीक्ष्णं षट्कोणमष्टास्रं जात्यं हीरकमुच्यते ॥६॥

हेयहीरकस्य स्वरूपम् ।

वर्तुलं मलिनं नीलं भूत्याभं स्फुटितं खरम् ।
सकाकपादं रेखाढ्यं हेयं हीरकमादिशेत् ॥७॥

हीरकस्य परीक्षणम् ।

यन्निकाषफलके शिलातले घृष्यते न हि निकामघर्षितम् ।
लीलयैव दलयत्यथापरान् तद्वरं भिदुरमीरितं बुधैः ॥८॥

अशुद्धहीरकस्य दोषाः ।

अविशुद्धं मृतं हीरं शीलितं पार्श्ववेदनाम् ।
कुष्ठं तापं भ्रमादींश्च जनयत्यविलम्बितम् ॥९॥

तरणेर्बुधस्य गरुडोद्गारो गुरोः पुष्पकं गोमेदं तमसः प्रवालमवनीसूनोर्विधो मौक्तिकम् । नील मन्दगतेः कवेस्तु कुलिशं केतोर्विडालाक्षक रत्नं रत्नविदो वदन्ति विहितं दाने तथा धारणे" इति । क्रमशः इति रविचन्द्रभौमबुधगुरुशुक्रशनिराहु केतूनाम् यथा क्रमस्तथाऽत्र रत्ननामनिर्देशः कृतः "यथासङ्ख्यमनुदेशः समानाम्" इति स्मरणात् । परिलक्षणं च ज्योतिःशास्त्रविधिना ॥३-४॥

तत्रादौ प्राधान्यात् हीरकस्य परिचयः—हीरको हीरकमिति पुन्नपुंसकं शब्दद्वयं लिङ्गभेदभिन्नम्, एवमन्यत्रापि । अभेद्यं इति च्छेदः । भार्गवः शुक्रः तत्प्रिय तद्दैवतक हीरमित्युक्तम् ॥५॥

उत्कृष्टहीरकलक्षणम् विद्युद्विभं तडित्समप्रभम् । अलेख्यं हीरकभिन्नेन केनापि "कुलिशं केनापि नो लिख्यते" इति स्मरणात् । विलेखनमन्येषाम् । उक्तं हि—"अन्ये पुनर्लिख्यन्ते कुलिशेन" इति । तथा—"अच्छत्वं लघुता तथाष्टफलता षट्कोणता तीक्ष्णताऽप्येतान् पञ्चगुणान् गृणन्ति गुणिनो देवोपभोग्ये पवौ ।" इति च ॥६॥

त्याज्यं हीरकं वर्तुलं मलिनमित्यादिना । सकाकपादं काकचरणाकाराभिर्लेखाभिश्चिह्नितम् । रेखा राजी । उक्तं हि—"विन्दुः काकपदं यवः किल मलो रेखेति नाम्नोदिताः । दोषाः पञ्च पवेः" इत्यादिना ॥७॥

हीरकपरीक्षणम्—निगदव्याख्यातम् ॥८॥

"अशुद्धहीरकस्य दोषाः—पार्श्ववेदनादयो निगदव्याख्याताः । उक्तं हि—"अशुद्धं कुरुते वज्रं कुष्ठं पार्श्वव्यथान्तथा । पाण्डुं तापं गुरुत्वञ्चे" ति ॥९॥

हीरकशोधनस्य प्रथमः प्रकारः।

पोट्टलीमध्यगं भार्गवस्य प्रियं कोद्रवक्राथतो दोलिकायन्त्रके।
सप्तभिर्वासरैः स्वेदितं सन्ततं याति शुद्धिं परां निश्चितं सत्वरम्॥

द्वितीयः शोधनप्रकारः।

कुलत्थक्राथसंयुक्तं हीरं दोलाख्ययन्त्रगम्।
स्विन्नं दिनत्रयं यत्नाद्धिरिष्टां शुद्धिमाप्नुयात्॥११॥

तृतीयः शोधनप्रकारः।

हीरकं परिसन्तप्तं सुधाक्षीरे निषेचितम्।
शतवारं प्रयत्नेन शुद्धिमाप्नोत्यसंशयम्॥१२॥

चतुर्थः शोधनप्रकारः।

हीरकं परिसन्तप्तं प्रखरानलयोगतः।
शतधा वापितं सूते शुद्धे शुद्धिमवाप्नुयात्॥१३॥
एवं निर्वापितं हीरं चूर्णतामेति सत्वरम्।
अनुभूतः प्रकारोऽयं समाख्यातो महोत्तमः॥१४॥

हीरकमारणस्य प्रथमः प्रकारः।

शोधितं हीरकं यत्नतश्चूर्णितं तालकं गन्धकं हिङ्गुलं तन्मितम्।
माक्षिकं मारितञ्चेह हीरोन्मितं राजकोलद्रवेणेह सम्पेषयेत्॥१५॥
पिप्पलोत्थद्रवैर्भावयेत्सप्तधा भावितस्यास्य वै कारयेद् गोलकम्।
उत्पलस्याग्निना वारणाख्ये पुटे सम्पुटस्थं ततो पाचयेद्यत्नतः॥१६॥
हीरकं पञ्चतां नैति यावद्ध्रुवं तावदेवं पुटेद्यत्नतः कोविदः।
माक्षिकं न क्षिपेद्वै द्वितीये पुटे हीरकं पञ्चतामेति सर्वात्मना॥१७॥

हीरकशोधनञ्च कोद्रवक्राथे सप्तदिनानि स्वेदनात् साध्यम्। अन्यत्र तु व्याघ्रीकन्दे संस्थाप्य कोद्रवक्राथे दोलया पाचनमाहु.। यथा—"व्याघ्रीकन्दगतं वज्रं दोलायन्त्रेण पाचयेत्। सप्ताहं कोद्रवक्राथे कुलिशं विमलं भवेत्" इति। व्याघ्री कण्टकारिका॥१०॥

हीरकं कुलत्थक्राथे त्रिदिनं स्वेदनादपि शुध्यति॥११॥

तृतीयः शोधनप्रकारः—सुधाक्षीरे स्नुहीदुग्धे। तन्त्रान्तरेऽपि "वज्रीक्षीरेण वा सिञ्चेत्" इति॥१२॥

शुद्धे सूते पारदे। अनुभूतः प्रकारोऽयमिति श्रद्धातिशयो ध्वनितः। महोत्तम इति प्रकारान्तराान्निर्धारणम्॥१३-१४॥

हीरकमारणं शोधितं हीरकमित्यादिना। तन्मितं हीरकमानम्। राजकोलं बृहद्बदरीफलम्। यावत् इति प्रायः पञ्चदशभिः पुटैः सिध्यति। प्रतिपुटदानानन्तरं दृढहस्तेनातिदृढप्रस्तरमयेऽलेख्ये खल्वे पेषणं कर्तव्यम्॥१५-१७॥

द्वितीयो मारणप्रकारः।

हीरकं विमलं सूतं मृतन्तु समभागिकम्।
मनःशिलां गन्धकञ्च समं दत्त्वा विमर्दयेत् ॥१८॥
सम्पुटस्थं तु पुटयेद् वारणाख्ये पुटे भृशम्।
तावत्पुटेत्प्रयत्नेन यावन्नायाति पञ्चताम् ॥१९॥
द्वितीयादिपुटेष्वत्र सूतं न विनियोजयेत्।
एवं चतुर्दशपुटैर्हीरकं म्रियते ध्रुवम् ॥२०॥
अनुभूतः प्रकारोऽयं सुगमस्तु प्रकाशितः।
एवं मृतं हीरकन्तु वीतशङ्कः प्रयोजयेत् ॥२१॥

तृतीयो मारणप्रकारः।

हीरकं विमलं तालं तथा रोगशिलामला।
समं समं समादाय खरखल्वे विमर्दयेत् ॥२२॥
त्रिवर्षारूढकार्पासशिफास्वरसयोगतः।
सम्पेष्य कामं यामैकं निदाघे परिशोषयेत् ॥२३॥
विशुष्कं सम्पुटे न्यस्य पुटयेत्तु महापुटे।
एवं चतुर्दशपुटैर्हीरकं याति पञ्चताम् ॥२४॥

मृतहीरकस्य गुणाः।

सुमृतं हीरकं हृद्यं परमं षड्रसान्वितम्।
योगवाहि मतञ्चैतत्सर्वोत्कृष्टं रसायनम् ॥२५॥
राजयक्ष्मप्रशमनं मेहमेदोविनाशनम्।
पाण्डुशोथोदरहरं तथा क्लैब्यहरं परम् ॥२६॥
वृष्यं महायुष्यमतीव नेत्र्यं बल्यं त्रिदोषघ्नमतीव वर्ण्यम्।
मेध्यं विशेषाद्विविधामयघ्नं सुधोपमं स्यात्सुमृतं तु हीरम् ॥२७॥

मृतहीरकस्य मात्रा।

रक्तिकाया नेत्रगुणभागतस्तु कलांशकम्।
मृतं हीरं प्रयुञ्जीत बलकालाद्यपेक्षया ॥२८॥

द्वितीयः प्रकारः—मृतं सूतं पारदमिति सम्बन्धः। द्वितीयादिपुटेषु पारदभस्म न योजयेत् ॥१८–२१॥

रोगशिला मनःशिला अमला इतिच्छेदः। खरखल्वे कठिनतमपाषाणोपादाने खल्वे। शिफा मूलम्। निदाघे घर्मे ॥२२–२४॥

परमं हृद्यमित्यन्वयः। निगदव्याख्यातमन्यत् ॥२५–२७॥

नेत्रगुणभागो द्वात्रिंशत्तमः। कलांशकं षोडशांशम् ॥२८॥

हीरकस्य मात्रानिर्माणप्रकारः ।

रक्तिकैकमितं हीरं रम्ये खल्वे विनिक्षिपेत् ।
मेलयेद्रससिन्दूरं चतुर्माषकसंमितम् ॥२९॥
सम्पेष्य त्वतियत्नेन रसतन्त्रविचक्षणः ।
गुञ्जैकतः समारभ्य द्विगुञ्जं विनियोजयेत् ॥३०॥

मृतहीरकस्य आमयिकः प्रयोगः ।

हीरकं रससिन्दूरयुतं सन्तानिकान्वितम् ।
निषेवितं निहन्त्याशु ध्वजभङ्गं सुदारुणम् ॥३१॥
हीरकं सहिरण्यन्तु रससिन्दूरसंयुतम् ।
विनिहन्त्यचिरादेव राजयक्ष्माणमुल्बणम् ॥३२॥
मकरध्वजसंयुक्तं हीरकं परिशीलितम् ।
नाशयत्यचिरादेव सर्वान् क्लैव्यान् विशेषतः ॥३३॥

कन्दर्पकोकिलरसः ।

सकर्पूरो हीरः प्रचुररससिन्दूरसहितः
सितैलासंमिश्रः प्रचुरसरसंयुक्तपयसा ।
निपीतः षण्मासं जनयति सुमिष्टाशनयुतो
नरं नानानारीनिधुवनसमासक्तहृदयम् ॥३४॥
लावण्येऽमलमौक्तिकं रतिपतिं रूपे च सम्मोहने
भीमं भोजनभक्षणे खगपतिं दूरात्सदा वीक्षणे ।
सिंहं संहतगात्रताभवमदे बुद्धौ तु वाचस्पतिं
हीरस्येह तु सेवको नरवरः प्रस्पर्द्धते निर्भरम् ॥३५॥
रसोऽयं तु समाख्यातो नाम्ना कन्दर्पकोकिलः ।
सेवितव्यः सदा यत्नाच्छरीरबलवृद्धये ॥३६॥

अथ हीरकरसायनम् ।

हीरं तार्क्ष्यञ्च माणिक्यं पुष्परागं च नीलकम् ।
वैदूर्यमथ गोमेदं चन्द्ररत्नञ्च विद्रुमम् ॥३७॥

हीरकमात्रानिर्माणप्रकारः रससिन्दूरमेलनात् सुगमः प्रभूतफलश्चेति ॥२९-३०
सन्तानिका क्षीरस्य स्तरम् ॥३१-३३॥

कन्दर्पकोकिलरसः—प्रचुरं यत् रससिन्दूरं तेन सहित इति समासः । मात्रानिर्माणप्रकारोक्तविधानेन रससिन्दूरं हीरकभस्मना सह सम्मेल्य मात्राया माहृत्य कर्पूरसितैलाभिः सह सम्मिश्रय यथोक्तानुपानेन योज्यम् ॥३४-३६॥

हीरकरसायनम्—चन्द्ररत्न मुक्ता, विद्रुम प्रवालम् । भागोत्तरमिति क्रमशः यथोत्तरं प्रवर्धमानैकभागम् । समगन्धेशकज्जलीमिति पारदगन्धौ समौ कृत्वा

भागोत्तरमिदं तस्मात्पञ्चगुञ्जोन्मितं हरेत् ।
योजयेन्मृतवैक्रान्तं तस्मादष्टगुणं ततः ॥३८॥
माक्षिकद्वयजं भस्म पृथक् वैक्रान्तसम्भवम् ।
तथा सर्वत्रिगुणितां समगन्धेशकज्जलीम् ॥३९॥
पिष्ट्वाजपयसा चैव वन्ध्याकर्कोटकीद्रवैः ।
वन्ध्योत्पलैः कलावारं पादायुधपुटे पुटेत् ॥४०॥
भिषग्वरैः समाख्यातमेतद्धीररसायनम् ।
गर्भिणीनान्तु नारीणां विविधामयनाशनम् ॥४१॥
हीराद्यं विमलं रसायनमिदं सन्दीपनं पाचनं
बल्यं मेध्यमलं तथैव महिलासौभाग्यसम्वर्द्धनम् ।
योनिव्याधिनिवर्हणं खलु नृणां वन्ध्यत्वरोगापहं
वन्ध्यानां खलु पुत्ररत्नजननं काकादिसंज्ञावताम् ॥४२॥

## अथ माणिक्यस्य नामानि ।

माणिक्यं रङ्गमाणिक्यं पद्मरागसमाह्वयम् ।
रविरत्नं शोणरत्नं कुरुविन्दं च लोहितम् ॥४३॥

### जात्यमाणिक्यस्वरूपम् ।

रक्तोत्पलदलच्छायं रम्यं दीप्तप्रभं परम् ।
वृत्तायतं समाङ्गञ्च माणिक्यं जात्यमुच्यते ॥४४॥

### त्याज्यमाणिक्यस्वरूपम् ।

विच्छायं लघु धूमाभं विरूपं कर्कशं परम् ।
मलिनं चिपिटं वक्रं माणिक्यं त्याज्यमुच्यते ॥४५॥

### माणिक्यशोधनस्य प्रथमः प्रकारः ।

निम्बूकस्वरसेनेह दोलायन्त्रे विधानतः ।
यामैकं स्वेदितं कामं माणिक्यं शुद्धिमाप्नुयात् ॥४६॥

कृतां कज्जलीमित्यर्थः। कलावारं षोडशवारम्। पादायुधपुटे कुक्कुटपुटे। वन्ध्यत्वं पुंसः शुक्रादिदुष्ट्याऽपत्यजननेऽसमर्थत्वम्। काकवन्ध्या च "पूर्वं पुत्रवती या सा क्वचिद् वन्ध्या भवेद् यदि। काकवन्ध्या तु सा ज्ञेया" इत्युक्तलक्षणा, सकृत्प्रसूता इत्यर्थः। "काकवन्ध्या सकृत्प्रसूः" इतिस्मरणात्। व्याख्यासमानमन्यत् ॥३७-४२॥

माणिक्यपरिचयः—तत्र ग्राह्यमाणिक्यस्वरूपं रक्तोत्पलदलच्छायमित्यादिना। त्याज्यञ्च विच्छायमिति। आहुश्च "कुशेशयदलच्छायं स्वच्छं स्निग्धं महत् स्फुटम्। वृत्तायतं समं गात्रं माणिक्यं त्वष्टधा शुभम्॥" तथा—"यद्विच्छायं शर्करिलं कर्कशधूम्रं स्वरागविकलञ्च। विरूपं लघु माणिक्यं तद्दोषावहं त्याज्यम्" इति च ॥४३-४५॥

अम्लवर्गोक्तभैषज्यैर्दोलिकायन्त्रयोगतः ।
विपाचितं तु माणिक्यं शुद्धिमायात्यनुत्तमाम् ॥४७॥

द्वितीयः शोधनप्रकारः ।

निम्बूकाम्लयुतं वारा माणिक्यं चषकस्थितम् ।
सुराप्रदीपे संपक्वं शुद्धिमायात्यनुत्तमाम् ॥४८॥
आविष्कृतो विधिरयं गुरुवर्यमहोदयैः ।
प्रकाशितः खलु मया भिषजां हितकाम्यया ॥४९॥

माणिक्यमारणस्य प्रथमः प्रकारः ।

विमलीकृतमत्यर्थं माणिक्यं सुविचूर्णितम् ।
शिलालगन्धैर्विमलैः पृथक् तु समभागिकैः ॥५०॥
निम्बूकस्वरसेनेह पेषयेद्दिनसप्तकम् ।
विन्यसेत्सम्पुटे घर्मे विशुष्कं कृतचक्रिकम् ॥५१॥
ततस्तु पुटयेद्धीमान् पुटे वारणसंज्ञके ।
रीत्यानया सुपुटितमष्टवारं प्रयत्नतः ॥५२॥
माणिक्यं म्रियते भस्म जायते पाण्डुरप्रभम् ।
पिष्टं तु लकुचद्रावैः पुटेदेवमथापि वा ॥५३॥

द्वितीयो मारणप्रकारः ।

चूर्णीकृतं शोणरत्नं विमलैः समभागिकैः ।
पेषयेन्निम्बुकद्रावैर्बलिरोगशिलेङ्गुलैः ॥५४॥
विमर्द्य सुदृढे खल्वे यत्नतः सप्तवासरम् ।
पुटयेद्वारणपुटे विशुष्कं कृतचक्रिकम् ॥५५॥
रीत्यानयापि पुटितमष्टवारमसंशयम् ।
माणिक्यमचिरादेव मृतिमाप्नोत्यनुत्तमाम् ॥५६॥

अथ मृतमाणिक्यस्य गुणाः ।

माणिक्यं सुमृतं मेध्यं मधुरं तु रसायनम् ।
दीपनं वृष्यमायुष्यं वातपित्तहरं परम् ॥५७॥

एतच्छोधनप्रकार.—निम्बूकरसेन दोलायन्त्रे स्वेदनाद् यामम् । द्वितीयः प्रकारः सुगममायनो नवाविष्कृतश्चेति ध्वनयति आविष्कृतो विधिरयमित्यादिना ॥४६-४९॥

माणिक्यमारणम्—शिला मनःशिला, आलं हरितालम्, गन्धः गन्धकः । प्रत्येकं माणिक्यसमानः । निगदव्याख्यातमन्यत् ॥५०-५३॥

द्वितीयप्रकारः—तालकस्थाने हिङ्गुलक्षेपः । सर्वमन्यत्पूर्ववत् । "दलितनिम्बूरसाभ्यां वा केवलं मारितं शुभम् । गन्धहिङ्गुलनिम्बूकैर्मारितं वा भवेत् शुभम्"

कफप्रशमनं स्निग्धं क्षयरोगनिषूदनम् ।
वाजीकरणमत्यन्तं ध्वजभङ्गहरं मतम् ॥५८॥

अथ माणिक्यस्य मात्रा ।

आरभ्य गुञ्जापादांशात् गुञ्जार्द्धप्रमितं मृतम् ।
माणिक्यं योजयेद्धीमान् बलकालाद्यपेक्षया ॥५९॥

माणिक्यमिहिरोदयरसायनम् ।

माणिक्यं कनकं रौप्यं तार्क्ष्यं तु समभागिकम् ।
कस्तूरिकाञ्च सर्वार्द्धां दत्त्वा कन्याम्भसा ततः ॥६०॥
पिष्ट्वा द्विगुञ्जप्रमिता वटिकाः कारयेद्भिषक् ।
रसोऽयं तु समाख्यातो माणिक्यमिहिरोदयः ॥६१॥
रसायनमिदं वृष्यं बल्यं वह्निप्रदीपनम् ।
क्लैब्यापहं विशेषेण ध्वजभङ्गहरं मतम् ॥६२॥

## अथ मौक्तिकस्य नामानि ।

मुक्ता मुक्ताफलञ्चैव मौक्तिकं मौक्तिकेयकम् ।
शुक्तिजं शौक्तिकेयञ्च शशिरत्नं शशिप्रियम् ॥६३॥

जात्यमौक्तिकस्य स्वरूपम् ।

चन्द्रोद्भासि स्थूलमत्यन्तरम्यं स्निग्धं वृत्तं निर्व्रणं निर्मलं यत् ।
धत्ते न्यस्तं यत्तुलायां गुरुत्वं प्राज्ञैरुक्तं मौक्तिकं तत्तु जात्यम् ॥६४॥
विमर्दितं शालितुषैर्गोमूत्रपटुना भृशम् ।
यन्नैति विकृतिं किञ्चित्तन्मौक्तिकमकृत्रिमम् ॥६५॥

त्याज्यमौक्तिकस्य लक्षणम् ।

दीर्घं पार्श्वकृशं रूक्षं त्र्यस्रं श्यामञ्च सव्रणम् ।
हतप्रभं क्षुद्रकायं मौक्तिकं हेयमीरितम् ॥६६॥

इत्यपि ज्ञेयम् । माणिक्यगुणाः व्याख्यातप्रायाः । प्राञ्चस्तु—"माणिक्यं दीपनं वृष्यं कफवातक्षयार्त्तिनुत् । भूतवेतालपापघ्नं कर्मजव्याधिनाशनम्" इत्याहुः ॥

माणिक्यमिहिरोदयरसायनम्—तार्क्ष्यं गरुडमणिः ॥६०-६२॥

मौक्तिकपरिचयः—चन्द्रोद्भासीति ग्राह्यमौक्तिकस्वरूपमाह । विमर्दितमिति अकृत्रिममौक्तिकपरीक्षा, आपणे कृत्रिममुक्तानां बहुधोपलम्भात् । निगदव्याख्यातमन्यत् । उक्तञ्च—"लवणक्षारक्षोदिनि पात्रे गोमूत्रपूरिते क्षिप्तम् । मर्दितमपि शालितुषैर्यदविकृतं तत्तु मौक्तिकं जात्यम्" इति ॥६३-६५॥

दीर्घं पार्श्वकृशमिति त्याज्यमौक्तिकस्वरूपम् । उक्तञ्च—"यद्विच्छायं मौक्तिकं व्यङ्गकायं शुक्तिस्पर्शं श्यामतां चातिधत्ते । मत्स्याक्षीकं रूक्षमुत्तानविम्बं नैतद्धार्यं धीमताऽसौख्यदायि" इति ॥ ६६ ॥

मौक्तिकशोधनस्य प्रथमः प्रकारः ।

जयन्तीस्वरसेनेह दोलायन्त्रे विधानतः ।
यामैकं सततं स्विन्नं मौक्तिकं शुद्धिमाप्नुयात् ॥६७॥

द्वितीयः शोधनप्रकारः ।

अगस्त्यद्रवयोगेन यामं स्विन्नमनारतम् ।
दोलायन्त्रे पोट्टलीस्थं शुद्धिमायाति मौक्तिकम् ॥६८॥

तृतीयः शोधनप्रकारः ।

सुराप्रदीपवह्निना शरावगं तु मौक्तिकम् ।
सुधोदकेन पाचितं विशुद्धिमेत्यनुत्तमाम् ॥६६॥

मौक्तिकमारणस्य प्रथमः प्रकारः ।

विमलं मौक्तिकं गव्यपयसा परिपेषितम् ।
त्रिधा लघुपुटे पक्वं मृतं स्याच्छशिसुन्दरम् ॥७०॥

द्वितीयो मारणप्रकारः ।

मुक्ताफलन्तु तरुणीपरिस्रुतजलान्वितम् ।
पिष्टं त्रिवारं पुटितं मृतिमाप्नोत्यनुत्तमाम् ॥७१॥

मृतमौक्तिकस्य गुणाः ।

मौक्तिकं वृष्यमायुष्यं मधुरं शिशिरं परम् ।
दीपनं दाहशमनं नेत्र्यं वर्ण्यं च कीर्तितम् ॥७२॥
जीर्णज्वरप्रशमनं त्वस्थिदन्तविवर्द्धनम् ।
हृद्यं मेहहरं मेध्यं दन्तोद्भिदज्वरापहम् ॥७३॥
मौक्तिकं सुशिशिरं क्षयापहं श्वासकासपरिकोपनाशनम् ।
अस्थिशोषशमनं विषापहं देहवीर्यबलबुद्धिवर्धनम् ॥७४॥

मृतमौक्तिकस्य मात्रानिरूपणम् ।

आरभ्य गुञ्जापादांशाद् गुञ्जैकप्रमितं मृतम् ।
मौक्तिकं विनियुञ्जीत बलकालाद्यपेक्षया ॥७५॥

जयन्तीस्वरसेनेति मौक्तिकशोधनम्—"जयन्त्या मौक्तिकं शुचि" इति स्मरणात्। अथवा अगस्त्यपत्रस्वरसेन स्वेदनात् शुद्ध्यति। तथा सुराप्रदीपवह्निना चूर्णोदकेन पाचितं शुध्यति मौक्तिकम् ॥६७-६६॥

मारणप्रकाराः—गोपयसा यद्वा तरुणीपरिस्रुतजलेन शतपत्रीपुष्पार्केण "अर्क गुलाब" इति प्रसिद्धेन पेषितं त्रिधा पुटितं भस्मीभवति मुक्ताफलम् ॥७०-७१॥

मृतञ्च मौक्तिकं सेवनतः वृष्यादिगुणम्। बालस्य दन्तोद्भेदसमये तदुपद्रवरूपेण जातो ज्वरो दन्तोद्भेदज्वरः। स्पष्टमन्यत्। उक्तं हि—"कफपित्तक्षयध्वंसि कासश्वासाग्निमान्द्यजित्। पुष्टिदं वृष्यमायुष्यं दाहघ्नं मौक्तिकं मतम्" इति ॥७२-७४॥

मृतमौक्तिकस्य आमयिकः प्रयोगः ।

रससिन्दूरसंयुक्तं मौक्तिकं परिशीलितम् ।
विनिहन्त्यचिरादेव दन्तोद्भेदभवं ज्वरम् ॥७६॥
मृतविद्रुमगन्धेशसंयुतं मृतमौक्तिकम् ।
बीजपूराम्भसा पिष्टं पक्वं लघुपुटे ततः ॥७७॥
भक्षितं सततञ्चैतद् गुञ्जाद्वितयसंमितम् ।
मासमात्रप्रयोगेण निहन्ति क्षयमुल्बणम् ॥७८॥
मृतविद्रुमसंयुक्तं मौक्तिकं परिशीलितम् ।
हन्ति फुप्फुसदौर्बल्यं चिरकालसमुद्भवम् ॥७९॥
कटुकीगैरिकोपेतं सुमृतं मौक्तिकेयकम् ।
निषेवितं निहन्त्याशु हिक्काः परमदारुणाः ॥८०॥
स्वर्णार्ककान्तभसितसमेतं खलु मौक्तिकम् ।
बीजपूरस्य तोयेन हिक्कां जयति दारुणाम् ॥८१॥

अथ मुक्तापञ्चामृतरसायनम् ।

मौक्तिकं विद्रुमं वङ्गं शङ्खं मुक्तागृहं तथा ।
वसुवेदाक्षिचन्द्रेन्दुभागिकं क्रमशः पृथक् ॥८२॥
वरीविदारीकन्येक्षुदुग्धहंसपदीरसैः ।
पृथक् सम्पेष्य यत्नेन पञ्चधा पुटपाचितम् ॥८३॥
ततः काचपिधानेन पिदध्यात्कूपिकागतम् ।
रसायनमिदं ख्यातं मुक्तापञ्चामृताह्वयम् ॥८४॥
अनारतं द्विगुञ्जन्तु गव्यदुग्धेन शीलितम् ।
मासद्वयप्रयोगेण रसायनफलप्रदम् ॥८५॥
जीर्णज्वरं महाघोरं राजयक्ष्माणमुल्बणम् ।
निहन्ति सर्वरोगांश्च तत्तद्रोगानुपानतः ॥८६॥

## अथ पुष्परागस्य नामानि ।

पुष्पराजः पुष्परागः पीतरक्ताह्वयस्तथा ।

रोगयोग्यः प्रयोगोऽस्य रससिन्दूरेति—स्वर्णम्, अर्कः ताम्रम्, कान्तं कान्तलोहं तेषां भस्मानि, तैः समेतम् । निगदव्याख्यातमन्यत् ॥७६-८१॥

मुक्तापञ्चामृतरसायनम्—मुक्तागृहं मुक्ताशुक्तिः । मौक्तिकं अष्टभागम्, विद्रुमं चतुर्भागम्, वङ्गं द्विभागम्, शङ्खमेकभागम्, मुक्ताशुक्तिरप्येकभागा । वरी शतावरी, कन्या घृतकुमारी । निगदव्याख्यातमन्यत् ॥८२-८६॥

गुरुरत्नं पीतमणिः स एव गुरुवल्लभः ॥८७॥

जात्यपुष्पराजस्य लक्षणम्।

स्निग्धं समं सुमसृणं तु सुवर्णवर्णं
स्वच्छं परं सुविमलं तु सुवृत्तगात्रम्।
यत्कर्णिकारकुसुमप्रभमुज्ज्वलञ्च
जात्यं तदेव गदितं खलु पुष्पराजम् ॥८८॥
निकषोपलसंघृष्टं वर्णं पुष्णाति यन्निजम्।
पुष्पराजन्तु तज्जात्यं मतं रत्नपरीक्षकैः ॥८९॥

हेयपुष्पराजस्य लक्षणम्।

श्यामलं निष्प्रभं कर्कशं ह्र्यक्षकं कृष्णबिन्द्वङ्कितं शर्कराङ्गप्रभम्।
उन्नतं त्वानतं यच्च रूक्षं परं पुष्पराजं मतं तत्तु हेयं बुधैः ॥९०॥

पुष्पराजस्य शोधनम्।

कुलत्थक्वथितोपेतैः काञ्जिकैः स्वेदितं समम्।
दोलायन्त्रे पुष्पराजं यामैकेन विशुद्ध्यति ॥९१॥

पुष्पराजस्य मारणम्।

माणिक्यमारणोद्दिष्टविधिभ्यामतियत्नतः।
मारयेत्पुष्पराजन्तु रसतन्त्रविचक्षणः ॥९२॥

पुष्पराजस्य गुणाः।

पुष्पराजन्तु शिशिरं दीपनं पाचनं परम्।
कफवातप्रशमनं कुष्ठच्छर्दिनिवर्हणम् ॥९३॥
विषघ्नं दाहशमनं गुदजामयनाशनम्।
मेध्यं बृंहणमायुष्यं रसज्ञैः परिकीर्तितम् ॥९४॥

पुष्पराजस्य मात्रा।

आरभ्य गुञ्जापादांशाद् गुञ्जैकप्रमितं परम्।
सुमृतं पुष्पराजन्तु प्रयुञ्जीत भिषग्वरः ॥९५॥

अथ पुष्परागपरिचयः—स्निग्ध समं सुमसृणमिति ग्राह्यपुष्परागरूपम्। उक्तं हि—"पुष्परागं गुरु स्निग्धं स्वच्छं स्थूलं समं मृदु। कर्णिकारप्रसूनाभं मसृणं शुभमष्टधा" इति। तथा च "घृष्टो निकषपट्टे यत् पुष्यति यो रागमधिकमात्मीयम्। एष खलु पुष्परागो जात्यस्तथाऽयं परीक्षकैरुक्तः" इति। श्यामलादिरूपं च तद् त्याज्यम्। "कृष्णबिन्द्वङ्कितं ह्र्यक्षं धवलं मलिन लघु। विच्छायं शर्कराङ्गाभं पुष्परागं सदोषकम्" इति स्मरणात् ॥८७-९०॥

शोधनम्—कुलत्थक्वथितजलेन काञ्जिकेन च स्वेदनादस्य शुद्धिः—"पुष्परागञ्च संधानैः कुलत्थक्वाथसंयुतैः" इति वचनात् ॥९१॥

पुष्परागमारणञ्च माणिक्यवत् ॥९२॥

अथैतस्य गुणाः शिशिरत्वादयः निगदव्याख्याताः ॥९३-९५॥

### अथ नीलस्य नामानि ।

नीलो नीलोपलो नीलं नीलरत्नं सुनीलकम् ।
महानीलश्च नीलाश्मा शनिरत्नञ्च कीर्तितम् ॥९६॥

जात्यनीलस्य लक्षणम् ।

स्वच्छं सच्छायममलं मसृणं तु महोज्ज्वलम् ।
स्निग्धं गुरु लसज्ज्योतिर्जात्यं नीलं मतं बुधैः ॥९७

हेयनीलस्य लक्षणम् ।

रक्ताढ्यं विगतच्छायं रूक्षं लघु च कोमलम् ।
परिहेयं शौरिरत्नं मतं रत्नपरीक्षकैः ॥९८॥

अथ नीलस्य शोधनम् ।

नीलीस्वरससंयुक्तं दोलायन्त्रे विधानतः ।
यामैकं परिपक्वन्तु नीलं शुद्ध्यति निश्चितम् ॥९९॥

अथ नीलस्य मारणम् ।

माणिक्यमारणोद्दिष्टविधिभ्यामतियत्नतः ।
मारयेच्छनिरत्नं तु रसागमविशारदः ॥१००॥

मृतनीलस्य गुणाः ।

नीलं तु सुमृतं वृष्यं बल्यं दीपनमुत्तमम् ।
त्रिदोषशमनं वर्ण्यं गुदजामयनाशनम् ॥१०१॥
त्वच्यं कुष्ठादिदोषघ्नं श्वासकासनिषूदनम् ।
कफपित्तानिलहरं विषमज्वरनाशनम् ॥१०२॥

मृतनीलस्य मात्रा ।

गुञ्जाष्टमांशप्रमितात् गुञ्जार्द्धप्रमितं परम् ।
सुमृतं नीलरत्नं तु प्राणाचार्यैः प्रयोजयेत् ॥१०३॥

अथ नीलस्य परिचयः—ग्राह्यनीलस्वरूपं सरलाक्षरम् । वचनं हि—"एकच्छायं गुरु स्निग्धं स्वच्छं पिण्डितविग्रहम् । मृदु मध्ये लसज्ज्योतिः सप्तधा नीलमुत्तमम्" इति ॥९६-९७॥

रक्तार्धमिति त्याज्यस्वरूपम् ॥९८॥

नीलीस्वरसेन स्वेदनादस्य शुद्धिः—"नीलं नीलीरसेन च" इतिस्मरणात् । माणिक्यवच्चास्य मारणमिति ॥९९-१००॥

मृतनीलगुणाः—सुगमाः । निगदन्ति हि—"श्वासकासहरं वृष्यं त्रिदोषघ्नं सुदीपनम् । विषमज्वरदुर्नामपापघ्नं नीलमीरितम्" इति ॥१०१-१०३॥

अथ मरकतस्य नामानि ।

गारुत्मतं मरकतं तार्क्ष्यं गारुडसंज्ञकम् ।
बुधरत्नं रौहिणेयं हरिद्रत्नञ्च तन्मतम् ॥१०४॥

जात्यमरकतस्य स्वरूपम् ।

सच्छायं मसृणं स्वच्छं गुरु स्निग्धञ्च कोमलम् ।
अव्यङ्गञ्च हरिद्वर्णं जात्यं मरकतं मतम् ॥१०५॥

हेयमरकतस्य स्वरूपम् ।

रूक्षन्तु विगतच्छायं विकृताङ्गं खरं लघु ।
सत्रासं चातिमलिनं हेयं मरकतं मतम् ॥१०६॥

अथ मरकतस्य शोधनम् ।

सुरभीपयसा यामं दोलायन्त्रे विधानतः ।
विपाचितं मरकतं विशुद्ध्यति सुनिश्चितम् ॥१०७॥

अथ मरकतस्य मारणम् ।

माणिक्यमारणोद्दिष्टविधिभ्यामातियत्नतः ।
अष्टधा पुटितं तार्क्ष्यं म्रियतेऽत्र न संशयः ॥१०८॥

मरकतस्य गुणाः ।

मृतं मरकतं बल्यं विषघ्नं वह्निदीपनम् ।
ओजोविवर्द्धनं वृष्यं पाण्डुशोफनिषूदनम् ॥१०९॥
श्वासच्छर्दिप्रशमनं गुदजामयनाशनम् ।
समाख्यातं विशेषेण सन्निपातनिबर्हणम् ॥११०॥

अथ मरकतस्य मात्रा ।

आरभ्य गुञ्जापादांशाद्गुञ्जैकप्रमितं परम् ।
मृतं मरकतं युञ्ज्यात् बलकालाद्यपेक्षया ॥१११॥

मरकतपरिचयः—जात्यमरकतरूपं सच्छायमित्यादिना । अव्यङ्गमिति अविकृताङ्गम् । उक्तञ्च—"हरिद्वर्णं गुरु स्निग्धं स्फुरद्रश्मिचयं शुभम् । मसृणं भासुरं तार्क्ष्यं गात्रं सप्तगुणं मतम्" इति । त्याज्यन्तु रूक्षमित्यादिना स्फुटम् । एतस्य शोधनञ्च गोदुग्धेन स्वेदनात् सिध्यति "तार्क्ष्यं गोदुग्धकैस्तथा" इति स्मरणात् । मरकतमारणञ्च माणिक्यवत् ॥१०४-१०८॥

मरकतगुणाः बल्यं विषघ्नमित्यादयः । आहुश्च प्राञ्चः—"ज्वरच्छर्दिविषश्वाससन्निपाताग्निमान्द्यनुत् । दुर्नामपाण्डुशोफघ्नं तार्क्ष्यमोजोविवर्धनम् ।" इति ॥१०९-१११॥

## अथ वैदूर्यस्य नामानि

विदूररत्नं वैदूर्यं केतुरत्नं विदूरजम् ।
बिडालाख्यं बिडालाक्षं वायजञ्च प्रकीर्तितम् ॥११२॥

जात्यवैदूर्यस्य स्वरूपम् ।

वैदूर्यं गुरु सुस्निग्धं बिडालेक्षणसप्रभम् ।
भ्रमच्छुभ्रोत्तरीयाढ्यं वैदूर्यं जात्यमुच्यते ॥११३॥

हेयवैदूर्यस्य स्वरूपम् ।

विच्छायं लघु रूक्षञ्च सत्रासं चिपिटं खरम् ।
कृष्णं तथा मृच्छिलाढ्यं वैदूर्यं हेयमीरितम् ॥११४॥

वैदूर्यस्य शोधनम् ।

त्रिफलाक्वथितोपेतं वैदूर्यं याममात्रकम् ।
दोलायन्त्रे परिस्विन्नं शुद्धिमायात्यनुत्तमाम् ॥११५॥

वैदूर्यस्य मारणम् ।

माणिक्यमारणोद्दिष्टविधिभ्यामतियत्नतः ।
विदूररत्नं पुटितं त्वष्टधा मृतिमाप्नुयात् ॥११६॥

मृतवैदूर्यस्य गुणाः ।

सुमृतं खलु वैदूर्यं मधुरं शिशिरं परम् ।
दीपनं मेध्यमायुष्यं बल्यं च मलभेदनम् ॥११७॥
रक्तपित्तप्रशमनं चक्षुष्यं बृंहणं परम् ।
पित्तामयप्रशमनं समाख्यातं विशेषतः ॥११८॥

वैदूर्यस्य मात्रा ।

वस्वंशतो रक्तिकाया वैदूर्यं गुञ्जसंमितम् ।
प्राणाचार्यः प्रयुञ्जीत बलकालाद्यपेक्षया ॥११९॥

अथ वैदूर्य्यपरिचयः—गुरु सुस्निग्धमिति उत्कृष्टं वदूर्य्यरूपम् । उक्तं हि—"वैदूर्य्यं श्यामशुभ्राभं समं स्वच्छं गुरु स्फुटम् । भ्रमच्छुभ्रोत्तरीयेण गर्भितं शुभमीरितम्" इति ॥११२-११३॥

विच्छायमिति हेयवैदूर्य्यरूप निगदव्याख्यातम् ॥११४॥

वैदूर्य्यशोधनं त्रिफलाक्वाथेन साध्यम् । स्मरन्ति हि—"वैदूर्य्यं त्रिफलाजलैः" इति ॥११५॥

मारणमस्यापि माणिक्यवदुक्तम् ॥११६॥

वैदूर्य्यगुणाः मधुरं शिशिरं परमित्यादिना । वदन्ति हि—"वैदूर्य्य रक्तपित्तघ्नं प्रजायुबलवर्धनम् । पित्तप्रधानरोगघ्नं दीपनं वृष्यमेव च" इति । मात्रानिर्देशे वस्वंशत इत्यष्टमांशतः ॥११७-११९॥

## अथ गोमेदकस्य नामानि ।

गोमेदकश्च गोमेदः पिङ्गस्फटिक इत्यपि ।
गोमेदं राहुरत्नञ्च कीर्तितश्च तमोमणिः ॥१२०॥

जात्यगोमेदस्य स्वरूपम् ।

गोमूत्राभं स्निग्धममन्दं समगात्रं
हेमारक्तं निर्दलमच्छं गुरुभारम् ।
दीप्तच्छायं मञ्जुलरूपं मसृणं यद्
गोमेदाख्यं रत्नमिह स्यात्तज्जात्यम् ॥१२१॥

हेयगोमेदस्य स्वरूपम् ।

सत्रासं विगतच्छायं चिपिटं मलिनप्रभम् ।
सदलं लघु रूक्षं च गोमेदं हेयमीरितम् ॥१२२॥

गोमेदस्य शोधनम् ।

निम्बूकस्वरसेनेह दोलायन्त्रे विधानतः ।
परिस्विन्नं तु यामैकं शुद्धिमायात्यनुत्तमाम् ॥१२३॥

गोमेदस्य मारणम् ।

माणिक्यमारणोदिष्टविधिभ्यामतियत्नतः ।
त्वष्टवारं सुपुटितं गोमेदं मृतिमाप्नुयात् ॥१२४॥

मृतगोमेदस्य गुणाः ।

गोमेदकं रुचिकरं दीपनं पाचनं परम् ।
त्वग्दोपशमनं वल्यं कफपित्तप्रणाशनम् ॥१२५॥
उष्णं पाण्ड्वामयहरं क्षयक्षयकरं परम् ।
समाख्यातं विशेषेण बुद्धिसम्वर्द्धनं तथा ॥१२६॥

मृतगोमेदस्य मात्रा ।

आरभ्य गुञ्जापादांशाद्गुञ्जैकप्रमितं मृतम् ।
गोमेदं तु प्रयुञ्जीत बलकालाद्यपेक्षया ॥१२७॥

गोमेदकपरिचयः—गोमूत्राभमिति तद्ग्राह्यरूपम् । हेमारक्तं स्वर्णवदीषद् रक्तम् । उक्तञ्च—"सुस्वच्छगोजलच्छायं स्निग्ध स्वच्छं समं गुरु । निर्दलं मसृणं दीप्तं गोमेद शुभमष्टधा" इति ॥१२०-१२१॥

सत्रासमिति त्याज्यगोमेदरूपम् । तथाहि—"विच्छायं लघु रूक्षाङ्ग चिपिटं पटलाचितम् । निष्प्रभं पीतकाचाभं गोमेद न शुभावहम् ॥१२२॥

गोमेदशोधन निम्बूकस्वरसेन सम्यक्स्वेदनात् सम्पाद्यते । माणिक्यवदेवास्यापि मारणम् । गुणास्तु रुचिकरत्वादयः पृथग्विधाः । उक्तं हि—"गोमेद कफपित्तघ्नं क्षयपाण्डुक्षयङ्करम् । दीपनं पाचन रुच्यं त्वच्यं बुद्धिप्रबोधनम् ।" इति ॥१२३-१२७॥

### अथ प्रवालस्य नामानि

प्रवालकं प्रवालश्च भौमरत्नञ्च विद्रुमम् ।
अब्धिजन्तुविशेषोत्थं तदेव परिकीर्तितम् ॥१२८॥

ग्राह्यविद्रुमस्य स्वरूपम् ।

आरक्तमञ्जुलच्छायं स्निग्धं वृत्तञ्च निर्व्रणम् ।
दीर्घं स्थूलं गुरु दृढं ग्राह्यं विद्रुममुच्यते ॥१२९॥

हेयविद्रुमस्य लक्षणम् ।

पाण्डुरं सव्रणं रूक्षं सशिरं लघु धूसरम् ।
कृष्णं सूक्ष्मं सुमसृणं हेयं विद्रुममीरितम् ॥१३०॥

विद्रुमस्य प्रथमः शोधनप्रकारः ।

जयन्त्याः स्वरसेनेह दोलायन्त्रे तु विद्रुमम् ।
यामैकं सुपरिस्विन्नं शुद्धिमायात्यनुत्तमाम् ॥१३१॥

द्वितीयः शोधनप्रकारः ।

सर्जिकाक्षारसंयुक्ते सलिले परिपाचितम् ।
यामैकेन प्रवालं तु शुद्धिमायात्यनुत्तमाम् ॥१३२॥

तृतीयः शोधनप्रकारः ।

तण्डुलीयद्रवेणेह दोलायन्त्रे तु यामकम् ।
प्रवालकं परिस्विन्नं शुद्धिमायात्यनुत्तमाम् ॥१३३॥

अथ विद्रुमस्य प्रथमो मारणप्रकारः ।

विशोधितं विद्रुमं तु श्लक्ष्णचूर्णं तु कारयेत् ।
कन्याम्भसाऽथ सम्पेष्य शोषयेत् कृतचक्रिकम् ॥१३४॥
सम्पुटस्थं ततः कृत्वा त्रिवारं पुटयेद्भिषक् ।
एवं पुटत्रयैर्भस्म जायते शशिसुन्दरम् ॥१३५॥

अथ विद्रुमपरिचय —आरक्तमञ्जुलच्छायमिति ग्राह्यप्रवालरूपम् । उक्तं हि— "पक्वबिम्बीफलच्छायं वृत्तायतमवक्रकम् । स्निग्धमव्रणकं स्थूलं प्रवालं सप्तधा शुभम्" इति । त्याज्यविद्रुमं पाण्डुरादिरूपम् । जयन्तीरसेन विद्रुमशोधनम् । यद्वा स्वर्जिकाक्षारवारिणा स्विन्नं शुध्यति । "विद्रुमं क्षारवर्गेणे" ति वचनात् । तथा तण्डुलीयद्रवेणापि शुध्यति । तन्त्रान्तरेऽपि तथा स्मरणात् ॥१२८-१३३॥

विद्रुममारणं कुमारीरसेन त्रिधा पुटनात् । एवं गोदुग्धेन जयन्तीरसेन

द्वितीयो मारणप्रकारः।

विद्रुमं गव्यदुग्धेन सम्पेष्य कृतचक्रिकम्।
म्रियते पुटितं भस्म जायतेऽतिमनोहरम् ॥१३६॥

तृतीयो मारणप्रकारः।

जयन्त्याः स्वरसेनेह सम्पेष्य कृतचक्रिकम्।
त्रिवारं पुटितं सम्यक् विद्रुमं म्रियते ध्रुवम् ॥१३७॥

चतुर्थो मारणप्रकारः।

पिष्टं वरीरसेनेह प्रवालं कृतचक्रिकम्।
म्रियते पुटितं वह्नौ भस्म स्यात् सुमनोहरम् ॥१३८॥

अथ विद्रुमस्य गुणाः।

विद्रुमं सुमृतं क्षारं मधुरं लघु शीतलम्।
दीपनं पाचनं चैव दृष्टिरोगनिषूदनम् ॥१३९॥
त्रिदोषशमनं वल्यं विशेषात्कफवातनुत्।
क्षयकासहरं चैव रक्तपित्तप्रणाशनम् ॥१४०॥
स्वेदातिनिर्गमहरं रात्रिस्वेदहरं परम्।
विषघ्नं भूतशमनं वीर्यवर्णविवर्द्धनम् ॥१४१॥

मृतविद्रुमस्य मात्रा।

गुञ्जार्धतः समारभ्य गुञ्जाद्वयमितं परम्।
विद्रुमं विनियुञ्जीत वलकालाद्यपेक्षया ॥१४२॥

अथ विद्रुमस्य आमयिकः प्रयोगः।

तण्डुलोदकयोगेन प्रवालं रक्तिकाद्वयम्।
शीलितं विनिहन्त्याशु मूत्रकृच्छ्रं कफोत्थितम् ॥१४३॥

शतावरीरसेनापि पृथक् पुटनात् मृतिरस्य जायते। उपलक्षणञ्चैतत् निम्बूदकादिभिरपि पुटनात् म्रियते ॥१३४-१३८॥

विद्रुमगुणाः—सुमृतं प्रवालं रसतः क्षारं मधुरञ्च, लघु पाकतः, शीतलं वीर्यतः, दीपनमुदराग्नेः, आमस्य पाचनम्, नेत्रामयनाशनमिति दृष्टिरोगास्तिमिरादयः तेषां नाशनम्। त्रिदोषशमनं सामान्यतः विशेषात् कफवातनुत्। क्षयोत्थः कासः क्षयकासः त हरतीति अथवा क्षयहरः कासहरश्च। स्वेदातिनिर्गमहरं सामान्यतः, विशेषात् रात्रिस्वेदहरं परम्। भूता. जीवाणवः तेषां शमनम्, वीर्यं वर्णञ्च विवर्धयतीति ॥१३९-१४२॥

विद्रुमस्य रोगयोग्यः प्रयोगः—कटुवी कटुकी। विड्विघातम् विवन्धभेदम्॥ वांशी वंशरोचना। वरीक्षुरकषायेणेति शतावरीगोक्षुरयोः कषायेण। बहु

रससिन्दूरसंयुक्तं प्रवालं गुञ्जसंमितम् ।
कद्वीद्राक्षाभयायुक्तं विड्विघातं निहन्त्यलम् ॥१४४॥
प्रवालं सुमृतं गुञ्जं रससिन्दूरसंयुतम् ।
गोक्षुरस्य कषायेण शीलितं मूत्रसादहृत् ॥१४५॥
द्विरक्तिकं तु सुमृतं विद्रुमं मधुसंयुतम् ।
शीलितं नाशयत्याशु निशास्वेदमशेषतः ॥१४६॥
विद्रुमं रससिन्दूरसंयुक्तं परिशीलितम् ।
पुनर्नवागोक्षुराभ्यां शोथं नाशयति ध्रुवम् ॥१४७॥
रससिन्दूरसंयुक्तं विद्रुमं परिशीलितम् ।
वरीक्षुरकषायेण मूत्रकृच्छ्रं व्यपोहति ॥१४८॥
समयशदसमेतं मारितं भौमरत्नं
विमलमधुविमिश्रं शीलितं तु त्रिमासम् ।
करयुगलसमुत्थां स्वेदसंस्रावबाधा-
मपहरति नितान्तं वै बहूत्थानजाताम् ॥१४९॥
अभ्रवांशीरजोयुक्तं विद्रुमं परिशीलितम् ।
विनिहन्ति विशेषेण कासं क्षयसमुत्थितम् ॥१५०॥
विश्वाभ्ररससिन्दूरव्याघ्रीयुक्तं तु विद्रुमम् ।
मधुना सेवितं हन्ति शिशूनां कासमुल्बणम् ॥१५१॥
अभ्रकट्फलसिन्दूरभार्ङ्गीयुक्तं तु विद्रुमम् ।
शिशूनां सज्वरं श्वासं नाशयत्याशु निश्चितम् ॥१५२॥
शुक्तिकारससिन्दूरतुगाक्षीरीसमन्वितम् ।
विद्रुमं शीलितं श्वासं कासञ्च विनिहन्त्यलम् ॥१५३॥

## अथ क्षुद्ररत्नगणः ।

वैक्रान्तं सूर्यकान्तश्च चन्द्रकान्तो नृपोपलः ।
पेरोजकश्च स्फटिकं क्षुद्ररत्नगणो ह्ययम् ॥१५४॥

स्थानजातामिति बहुभिर्हेतुभिर्जाताम् । उपलक्षणञ्चैतत् "विद्रुमं गव्यपयसा यथाविधि निषेवितम् । निहन्ति क्षवथुं शीघ्रं तथा शीर्षव्यथामपि" इत्यपि ज्ञेयम् ॥१४३-१५३॥

वैक्रान्तादिकः क्षुद्ररत्नगणः—नृपोपलो राजावर्तः ॥१५४॥

## अथ वैक्रान्तस्य नामानि ।

वैक्रान्तश्चैव विक्रान्तं वैक्रान्तं जीर्णवज्रकम् ।
कुवज्रं क्षुद्रकुलिशं चूर्णवज्रञ्च तन्मतम् ॥१५५॥

वैक्रान्तस्य निर्वचनम् ।

वज्रवत् सर्वरोगाणां हरणाय यतस्त्विदम् ।
धत्ते विक्रान्तिमतुलां वैक्रान्तं कथ्यते ततः ॥१५६॥

ग्राह्यवैक्रान्तस्य स्वरूपम् ।

अष्टास्रमष्टफलकं सितपीतासितारुणम् ।
मसृणं गुरु षट्कोणं वैक्रान्तं जात्यमुच्यते ॥१५७॥
श्वेतो नीलस्तथा रक्तः पीतः पारावतप्रभः ।
तार्क्ष्याभः कर्बुरः कृष्णो वर्णतश्चाष्टधा हि सः ॥१५८॥

वैक्रान्तशोधनस्य प्रथम. प्रकारः ।

वैक्रान्तं पोट्टलीसंस्थं पटुक्षारसमन्वितम् ।
अम्लेन केनचिद्वापि कोद्रवक्वथितेन वा ॥१५९॥
गोमूत्रेणाथवा कामं प्रखरानलयोगतः ।
दोलायन्त्रे परिस्विन्नं शुद्धिमायात्यनुत्तमाम् ॥१६०॥

द्वितीयः शोधनप्रकारः ।

वैक्रान्तः सपटुक्षारः कुलत्थक्वाथयोगतः ।
दोलायन्त्रे परिस्विन्नः शुद्धिमाप्नोति यामतः ॥१६१॥

तृतीयः शोधनप्रकारः ।

वैक्रान्तं पोट्टलीसंस्थं कदलीकन्दजद्रवे ।
दोलायन्त्रे परिस्विन्नं यामैकेन विशुध्यति ॥१६२॥

वैक्रान्तपरिचय.—वज्रवत् सर्वरोगहरणायातुलां विक्रान्तिं धत्ते यतस्तस्मात् वैक्रान्तमिति निर्वचनम् ॥१५५-१५६॥

अष्टास्रमिति ग्राह्यवैक्रान्तरूपम्। "वैक्रान्तः श्वेतपीतादिभेदेनाष्टप्रकारकः। स्वर्णरूप्यादिकरणे स्वस्ववर्णः शुभो मत. ॥ वैक्रान्तः कृष्णवर्णो यः षट्कोणो वसुकोणक । मसृणो गुरुतायुक्तो निर्मलः सर्वसिद्धिद."इति च प्राहुः प्राञ्चः॥१५७-१५८॥

वैक्रान्तशोधनप्रकारः—पटु लवणम् । क्षारः यवक्षारः स्वर्जिका वा । स्वेदनार्थं निम्बूकादीनामम्लाना स्वरसः कोद्रवक्वाथः गोमूत्रं कुलत्थक्वाथो वा ग्राह्यः ॥१५९-१६१॥

कदलीकन्दद्रवेण वा दोलया स्वेदनात् शुध्यति ॥१६२॥

वैक्रान्तस्य प्रथमो मारणप्रकारः ।

विमलबलिविमिश्रं चूर्णवज्रस्य चूर्णं
समदरदसमेतं निम्बुनीरेण पिष्टम् ।
द्विरदपुटसमाख्ये तत् पुटे सम्पुटस्थं
वसुमितपुटपक्कं पञ्चतां याति नूनम् ॥१६३॥

द्वितीयो मारणप्रकारः ।

विशोधितं तु वैक्रान्तं यत्नतश्चूर्णयेद्भिषक् ।
त्रिगुणं गन्धपाषाणं समं चैव रसेश्वरम् ॥१६४॥
दत्त्वा निम्बूकतोयेन पेषयेद् याममात्रकम् ।
सुशुष्कं सम्पुटे न्यस्य पुटेद् गजपुटेन वै ॥१६५॥
एवमष्टपुटेनैव वैक्रान्तं म्रियते ध्रुवम् ।
चतुर्थादिपुटेष्वत्र रसेशं न नियोजयेत् ॥१६६॥

वैक्रान्तस्य गुणाः ।

तत्तन्महागदहरः परमश्च मेध्यो
वह्निप्रदीपनकरोऽतिरसायनश्च ।
दोषत्रयापहरणो बहुयोगवाही
वैक्रान्तकस्तु गदितः खलु वज्रतुल्यः ॥१६७॥
वैक्रान्तकं परं त्वच्यं राजयक्ष्मनिषूदनम् ।
जराशोषादिशमनं ज्वरकुष्ठापहं तथा ॥१६८॥
पाण्डूदरश्वासकासप्रमेहश्वयथुप्रणुत् ।
देहदार्ढ्यकरञ्चैव समाख्यातं विशेषतः ॥१६९॥

मृतवैक्रान्तस्य मात्रा ।

तत्त्वांशतो रक्तिकाया रुद्रांशप्रमितं मृतम् ।
वैक्रान्तकं प्रयुञ्जीत बलकालाद्यपेक्षया ॥१७०॥

वैक्रान्तमारणम्—समगन्धकहिङ्गुलाभ्यामष्टपुटैः सम्पाद्यम् । यद्वा वैक्रान्तं समपारदत्रिगुणगन्धकाभ्यां निम्बूकतोयेन पिष्ट्वा पुटनान्म्रियते । परं पुटत्रय-दानानन्तरं पारदक्षेपोऽनावश्यकः ॥१६३-१६६॥

वैक्रान्तगुणाः—ते ते प्रसिद्धाः महागदाः यक्ष्मप्रभृतयो महारोगाः तत्तन्म-हागदाः तान् हरतीति । उक्तञ्चान्यत्र—"वैक्रान्तस्तु त्रिदोषघ्नः षड्रसो देहदार्ढ्य-कृत् । पाण्डूदरज्वरश्वासकासयक्ष्मप्रमेहनुत् ॥" इति ॥१६७-१६९॥

वैक्रान्तभस्मनो मात्रानिर्देशे—तत्त्वांशः चतुर्विंशतमोंऽशः, रुद्रांशः एकादशोंऽश. ॥१७०॥

मृतवैक्रान्तस्य आमयिकः प्रयोगः
प्रथम वैक्रान्तरसायनम्।

सुमृतं खलु वैक्रान्तं चतुर्गुञ्जमितं शुभम्।
तोलकैकमितञ्चैव सुमृतं घनसत्वकम् ॥१७१॥
रसेश्वरञ्च सुमृतं तोलकार्द्धकसंमितम्।
आदाय खल्वे सम्मर्द्य शाल्मलीमूलवारिणा ॥१७२॥
कारयेद्रसतन्त्रज्ञो रक्तिकैकमितां वटीम्।
एकैकां वटिकां दद्यात् समध्वाज्यं तु प्रत्यहम् ॥१७३॥
रसायनमिदं बल्यं वृष्यं वर्ण्यञ्च बृंहणम्।
क्लैव्यापहञ्च परमं नास्ति भेषजमीदृशम् ॥१७४॥
आमया न प्रशाम्यन्ति येऽन्यभेषजसेवया।
एतद्रसायनाभ्यासात् यान्ति शान्ति तु निश्चितम् ॥१७५॥

द्वितीयं वैक्रान्तरसायनम्।

वैक्रान्तकं तु सुमृतं रक्तिकाष्टकसंमितम्।
पादांशिकञ्च सुमृतं काञ्चनं नष्टचन्द्रिकम्॥१७६॥
विमलं रससिन्दूरं तोलकद्वयसम्मितम्।
आदाय खल्वे संमर्द्य शाल्मलीमूलवारिणा ॥१७७॥
रक्तिकैकमितां रम्यां वटिकां कारयेत्ततः।
रसज्ञैः कीर्तितमिदं वैक्रान्तकरसायनम् ॥१७८॥
मरिचाज्यकणायुक्तं मासद्वयमनारतम्।
रसायनमिदं यत्नात् सपथ्यं परिशीलितम् ॥१७९॥
विनिहन्ति जराशोषं राजयक्ष्माणमुल्बणम्।
ध्वजभङ्गं तथा क्लैव्यं कासं श्वासञ्च दारुणम् ॥१८०॥
अर्शांसि वह्निमान्द्यञ्च ग्रहणीं पाण्डुकामलाम्।
उरःक्षतादिकान् रोगान् नाशयत्याशु निश्चितम् ॥१८१॥

## अथ सूर्यकान्तस्य नामानि।

सूर्यकान्तः सूर्यमणिस्तथा सूर्योपलाह्वयः।
दीप्तोपलो वह्निगर्भो तथैव ज्वलनोपलः ॥१८२॥

वैक्रान्तरसायनम्—घनसत्त्व अभ्रसत्त्वम्। निगदव्याख्यातमन्यत् ॥ नष्टचन्द्रिकमिति सुमृतस्वर्णपरीक्षा। सपथ्यमिति हिताहारविहाराभ्यां सह ॥१७६-१८१॥

अथ सूर्यकान्तपरिचयः—ग्राह्यसूर्यकान्तस्य लक्षण विमलो निस्तुष इति।

जात्यसूर्यकान्तस्य लक्षणम् ।

विमलो निस्तुषः स्निग्धो घृष्टो व्योमसुनिर्मलः ।
मसृणो निर्व्रणश्चैव जात्यः सूर्योपलः स्मृतः ॥१८३॥

सूर्यकान्तस्य परीक्षणम् ।

यस्तु सूर्यांशुसंस्पृष्टः प्रसूते दहनप्रभाम् ।
स एव जात्यः कथितः सूर्यकान्तः पुराविदैः ॥१८४॥

सूर्यकान्तस्य गुणाः ।

सूर्यकान्तो मतो मेध्य उष्णश्चैव रसायनः ।
बलासवातशमनो विशेषेण च कीर्तितः ॥१८५॥

सूर्यकान्तस्य मारणम् ।

सूर्यकान्तः सुसम्पिष्टः शिलाबलिसमन्वितः ।
सप्तधा पुटितो यत्नान्म्रियते नात्र संशयः ॥१८६॥

## अथ चन्द्रकान्तस्य नामानि ।

चन्द्रकान्तश्चन्द्रमणिस्तथा चन्द्रोपलाह्वयः ।
शशिकान्तश्चेन्दुकान्तः स एव परिकीर्तितः ॥१८७॥

जात्यचन्द्रकान्तस्य लक्षणम् ।

यन्निर्मलं सुमसृणं शिशिरं च पीतं
स्निग्धं परं सुविशदं परमं पवित्रम् ।
स्रावं स्रवत्यथ परं तुहिनांशुसंगा-
च्चन्द्रोपलं खलु तदेव मतं तु जात्यम् ॥१८८॥

चन्द्रकान्तस्य गुणाः ।

चन्द्रकान्तोऽतिशिशिरः स्निग्धः पित्तापहः परम् ।
रक्तपित्तप्रशमनस्तथा दाहनिषूदनः ॥१८९॥

उक्तञ्चान्यत्र—"शुद्धः स्निग्धो निर्व्रणो निस्तुषोन्तर्यो निघृष्टोऽत्यन्तनैर्मल्यमेति । यः सूर्यांशुस्पर्शनिस्यूतवह्निं जात्यः सोऽयं कथ्यते सूर्यकान्तः" इति ॥१८२-१८४॥

सूर्यकान्तश्च मेध्योष्णत्वादिगुणः। उक्तं हि—"रविकान्तो भवेदुष्णो निर्मलश्च रसायनः। वातश्लेष्महरो मेध्यः पूजनाद्रवितुष्टिदः" इति । बलासः कफः ॥१८५॥

सूर्यकान्तमारणं निगदव्याख्यातम् ॥१८६॥

चन्द्रकान्तपरिचयः—जात्यचन्द्रकान्तस्वरूपं यन्निर्मलमित्यादिना । उक्तञ्चाभियुक्तैः—"स्निग्धं शीतं पीतमन्नासमन्तर्धत्ते चित्ते स्वच्छतां यन्मुनीनाम् । यच्च स्रावं याति चन्द्रांशुसङ्गात् जात्यं रत्नं चन्द्रकान्ताख्यमेतत्" इति ॥१८७-१८८॥

चन्द्रकान्तश्चातिशिशिरादिगुणः । तथा चोक्तमन्यत्र—"चन्द्रकान्तस्तु

चन्द्रकान्तस्य मारणम्।

कुनटीहिङ्गुलोपेतः कन्यानीरेण पेषितः।
चन्द्रकान्तः सुपुटितो म्रियते नात्र संशयः ॥१६०॥

### अथ राजावर्तस्य नामानि।

राजावर्तो नृपावर्त आवर्तमणिरित्यपि।
नृपोपलश्च नीलाश्मा स एव परिकीर्तितः ॥१६१॥

जात्यराजावर्तस्य स्वरूपम्।

यन्निर्मलः सुमसृणः खलु गारशून्यः
स्निग्धश्च शारदनिरभ्रनभः सुनीलः।
कृष्णो गुरुश्च शिखिकण्ठसमप्रकाशो
राजोपलः खलु स एव मतस्तु जात्यः ॥१६२॥

राजावर्तस्य प्रथमः शोधनप्रकार.।

सगव्यसूत्रः सक्षारो निम्बूकद्रवयोगतः।
स्विन्नो नृपोपलो यामं शुद्धिमायात्यनुत्तमाम् ॥१६३॥

द्वितीय· शोधनप्रकारः।

निम्बूकाम्लसमायुक्तः सजलः क्षारसंयुतः।
नृपोपलः परिस्विन्नो विशुध्यति न संशयः ॥१६४॥

तृतीय· शोधनप्रकारः।

शिरीषपुष्पस्वरसैः स्वेदितस्तु नृपोपलः।
दोलायन्त्रे याममात्रं शुद्धिमायात्यनुत्तमाम् ॥१६५॥

राजावर्तस्य मारणम्। -

विचूर्णितं नृपोपलं विशुद्धगन्धकान्वितम्।
नवेन निम्बुकाम्बुना सुपेषयेद् दिनत्रयम् ॥१६६॥
विशोषितञ्च विन्यसेच्छरावसम्पुटस्थितम्।
विधाय सन्धिलेपनं पुटत्पुटे गजाह्वये ॥१६७॥

शिशिर' स्निग्धः पित्तास्रतापनुत्। शिवप्रीतिकरः स्वच्छो ग्रहालक्ष्मीविनाशन" इति। चन्द्रकान्तमारण मन.शिलाहिङ्गुलाभ्यां सम्पाद्यम् ॥१५६-१६०॥

अथ राजावर्तपरिचयः—आह राजावर्तरूप यन्निर्मल इत्यादिना। गारशून्य मलरहितः। शिखी मयूरस्तस्य कण्ठसमः प्रकाश आभा यस्य स'। उक्तञ्चान्य त्रापि—"निर्गारमसितमसृणं नील गुरु निर्मलं बहुच्छायम्। शिखिकण्ठसम सौम्य राजावर्तं वदन्ति जात्यमणिम्" इति ॥१६१-१६२॥

राजावर्तशोधन गोमूत्रक्षारनिम्बुजलै' कार्यम्। निम्बूकाम्ल प्रागुक्तपरिभाषम्, तेन समायुक्तः। शिरीषपुष्पस्वरसैर्वा दोलायन्त्रे स्वेदनाच्छुध्यति॥

एतन्मारणञ्च गन्धकयोगेन निम्बूकद्रवैः सुपेषणमन्वष्टधा पुटनात्

विपाचितः सुवर्त्मना ह्यनेन नागवारकम् ।
नृपोपलोऽविलम्बितं समेति पञ्चतामलम् ॥१९८॥

मृतराजावर्तस्य गुणाः ।

नृपोपलः कटुस्तिक्तो दीपनः पाचनस्तथा ।
शिशिरः पित्तशमनो बृंहणोऽतिरसायनः ॥१९९॥
पाण्डुप्रमेहहरणः क्षयशोषनिबर्हणः ।
मदात्ययात्ययकरश्छर्दिहिक्कानिवारणः ॥२००॥

मृतराजावर्तस्य आमयिकः प्रयोगः ।

नृपोपलः सममृततारताप्यसमन्वितः ।
विपक्वो गव्यहविषा सितामध्वाज्यसंयुतः ॥२०१॥
निषेवितो निहन्त्याशु सर्वानेव मदात्ययान् ।
रससिन्दूरताम्राढ्यः सुमृतस्तु नृपोपलः ॥२०२॥
यष्टीमधुकचूर्णेन सितामध्वाज्यसंयुतः ।
निषेवितो निहन्त्याशु सर्वानेव मदात्ययान् ॥२०३॥
मृताभ्रसत्त्वकान्ताभ्यां सुमृतस्तु नृपोपलः ।
मधुना शीलितं हन्ति प्रमेहादिकमुल्बणम् ॥२०४॥

राजावर्तस्य सत्वपातनं मारणञ्च ।

मनःशिलाज्यसंयुतं नृपोपलं विचूर्णितम् ।
पचेत्तु लोहभाजनेऽथ सैरिभीसुदुग्धतः ॥२०५॥
समित्रपञ्चकस्ततो विमर्द्य गोलकीकृतः ।
सुतीक्ष्णखादिराग्निना विपाचितस्ततस्त्वयम् ॥२०६॥
स्वकीयसत्त्वमुत्तमं विमुञ्चतीह सत्वरम् ।
ततः सलुङ्गगन्धकं विपक्वमेति पञ्चताम् ॥२०७॥

## अथ पेरोजकस्य नामानि ।

पेरोजकञ्च पेरोजं रसज्ञैः परिकीर्तितम् ।
भस्माङ्गं हरितं चेति द्विविधं तत्प्रकीर्तितम् ॥२०८॥

साध्यम् ॥१९६–१९८॥

मृतश्चायं कटुतिक्तादिगुणः। अन्यत्राप्युक्तं—"राजावर्तः कटुः स्निग्धः शिशिरः पित्तनाशनः ।" इति ॥१९९–२००॥

अस्य च रोगयोग्यः प्रयोगो निगदव्याख्यातः ॥२०१–२०४॥

राजावर्तस्य सत्वपातनं तन्मारणञ्चाह मनःशिलेति—सैरिभी महिषी। निगदव्याख्यातमन्यत् ॥२०५–२०७॥

'पेरोजकपरिचयः—पेरोजकञ्च द्विविधं भस्माङ्गं हरितञ्च। तस्य शोधनमारणे

पेरोजकस्य शोधनमारणम्।

शोधनं मारणञ्चैव पेरोजस्य विशेषतः।
नृपोपलसमं ख्यातं रसतन्त्रविशारदैः ॥२०९॥

मृतपेरोजकस्य गुणाः।

पेरोजकं सुतुवरं मधुरं च सुदीपनम्।
शूलदूषीविषघ्नञ्च चराचरविषापहम् ॥२१०॥

## अथ स्फटिकस्य नामानि।

स्फटिकः स्फटिकं चैव स्फाटिकं स्फटिकद्रपत्।
स्फाटीकं स्फटिकाश्मा च तथैव स्फटिकोपलः ॥२११॥
शालिपिष्टं धौतशिलं शिवरत्नं शिवप्रियम्।
सितोपलोऽमलमणिः स एव परिकीर्तितः ॥२१२॥

जात्यस्फटिकस्य स्वरूपम्।

शीतं स्निग्धं निस्तुषं नेत्रहृद्यं घृष्टं धत्ते स्वच्छतां पूर्वतुल्याम्।
स्वच्छच्छायं यच्च शुद्धान्तरालं तन्निर्दिष्टं शैवरत्नं तु जात्यम् ॥२१३॥

स्फटिकस्य शोधनमारणम्।

शोधनं मारणञ्चैव शिवरत्नस्य सर्वदा।
राजावर्तमणेस्तुल्यं जानीयाद्रसकोविदः ॥२१४॥

मृतस्फटिकस्य गुणाः।

स्फटिको मधुरो वल्यस्तुपारसमशीतलः।
रक्तपित्तप्रशमनो ज्वरदाहादिनाशनः ॥२१५॥

इति रत्नादिविज्ञानीयो नाम त्रयोविंशस्तरङ्गः।

राजावर्तवत्। तच्च सुमृतं मधुरादिगुणम्। उक्तञ्च—"पेरोजं हरिताश्मा च भस्माङ्ग हरितं द्विधा॥ पेरोज सुकषायं स्यात् मधुरं दीपनं सरम्। स्थावरं जङ्गमञ्चैव संयोगाच्चापि यद्विषम्। तत्सर्वं नाशयेच्छीघ्रं मूलभूतादिदोषजम्" इति ॥२०८-२१०॥

अथ स्फटिकपरिचय.—शीत स्निग्धमिति आद्यस्फटिकलक्षणम्। उक्तञ्चान्यत्र—"यद्गङ्गातोयबिन्दुच्छवि विमलतमं निस्तुप नेत्रहृद्यं स्निग्धं शुद्धान्तरालं मधुरमतिहिम पित्तदाहास्रहारि। पाषाणैर्यन्निघृष्टं स्फुटितमपि निजां स्वच्छतां नैव जह्यात्तज्जात्यं जात्यलभ्यं शुभमुपतनुते शैवरत्नं विचित्रम्" इति। तस्य शोधनमारणे राजावर्तवत्। स्फटिकगुणा निगदव्याख्याताः। अथात्र प्रसङ्गात् सर्वेषां सामान्यतो लक्षणनिर्देशः—"श्यामः स्यादिन्द्रनीलस्त्वतिमसृणतनुश्चाथ गारुत्मतः स्यात्। नीलच्छायोऽतिदीप्तोऽप्यथ मिहिरमणिः सूर्यतप्तोऽग्निमुक् स्यात्॥ चन्द्रांशुस्पर्शतोऽम्भः स्रवति शशिमणिः पुष्परागस्तु पुष्पप्रख्यः श्रीवज्रमुख्यैर्घनसमभिहतं संविशेल्लोहपिण्डे॥ वैडूर्यं यद्विडालेक्षणरुचिगदितं स्याच्च गोमेदरत्नं गोमूत्राभं विधूमज्वलदनलनिभं पद्मरागं वदन्ति। मुक्ताशङ्खप्रवालं सरिदधिपतिजं विश्वविख्यातमेतत् राजावर्तन्तु पीतारुणमृदुसुरभिक्षोणिभागोत्थमाहुः" इति ॥२११-२१५॥

# अथ विषोपविषादिविज्ञानीयश्चतुर्विंशस्तरङ्गः

विषपदस्य निर्वचनम् ।

दृष्ट्वैतद् यद्विषीदन्ति जनास्तस्माद्विषं मतम् ।
नरं वा विषिणोत्येतन्मृत्युपाशैस्ततो विषम् ॥१॥

विषस्य नामानि तद्द्वैविध्यञ्च ।

विषं क्ष्वेडश्च गरलं कालकूटश्च तन्मतम् ।
स्थावरं जङ्गमञ्चेति द्विविधं विषमुच्यते ॥२॥

स्थावरजङ्गमविषयोः स्वरूपम् ।

खन्यौषधाश्रयं यत्तु विष तत्स्थावराह्वयम् ।
सर्पादिजन्तुप्रभवं विषं जङ्गमसंज्ञकम् ॥३॥

स्थावरविषस्य भेदाः ।

अधिष्ठानविभेदेन विषं स्थावरसंज्ञकम् ।
समाख्यातं दशविधं रसतन्त्रविचक्षणैः ॥४॥

स्थावरविषस्य अधिष्ठानानि ।

कन्दः सारोऽथ निर्यासः पुष्पं मूलं फलं दलम् ।
त्वक् क्षीरं खनिरित्यस्य ह्यधिष्ठानानि वै दश ॥५॥

प्रकारान्तरेण स्थावरविषस्य द्वैविध्यम् ।

विषं चोपविषं चेति द्विविधं स्थावरं विषम् ।
प्रथमं वत्सनाभादि द्वितीयं तिन्दुकादिकम् ॥६॥

विषोपविषाणाम्भूयसा रसयोगेषूपयोगात् परिशेषात् विषोपविषाणामपि परिचयावकाशः रससंस्कारोपयोगाच्च । अथ विष कस्मात् इति चेत् ? तत्राह— दृष्ट्वैतदिति । नरमित्युपलक्षणं इतरप्राणिनामपि विषोपयोगाद्विषाददर्शनात् । तथा चाहुः—"म्रियन्ते मक्षिकाः प्राश्य काकः क्षामस्वरो भवेत्" इत्यादिना । अपि च स्मरन्ति हि—"पुरा खल्वमृतार्थं सुरासुरैः सलिलनिधेर्विमथ्यमानात् क्रोध इव रूपवान् सत्वं समुद्बभूव कृष्णमनलनयनमूर्ध्वप्रदीप्तकेशं दंष्ट्राकरालं भैरवारावरूपम् । तद्दर्शनादेव यतो देवा दानवाश्च विषण्णास्तस्मात्तद्विषसञ्ज्ञामवाप । तत्सहसैव सर्वभूतानि निर्दग्धुकाममुपयोगविशेषैर्विषममृततां विनयमानो ब्रह्मानुनीयौषधिषु न्यस्तवान् । ततस्तत् स्थावरासु मूर्तिष्वधिवसनात् स्थावरमित्युच्यते । जङ्गमं पुनः पृथिव्या भारावतारार्थमुरगादिरूपेण श्रीविष्णुर्निर्ममे ॥" इति ॥१॥

विषनामानि तन्त्रव्यवहृतानि, तच्च द्विविधं स्थावरजङ्गमप्रभेदादिति । स्थावरं दशविधमधिष्ठानभेदात् । स्मरन्ति हि—"स्थावरं मूलपत्रपुष्पफलत्वक्सारनिर्यासक्षीरधातुकन्दभेदाद्दशाधिष्ठानम्" इति । मूलादिविषाणां परिचयविस्तरस्त्वाकरेभ्य एव कर्णेहस्यावलोकनीयमित्यत्र विस्तरभयाद् विरमामः ॥२-५॥

अपिच स्थावरं विषं विषोपविषभेदादपि द्विविधमाचख्युः प्राज्ञः । तदेतदाह प्रथमं वत्सनाभादीति ॥६॥

विषस्य नव भेदाः ।

हालाहलः कालकूटः शृङ्गकश्च प्रदीपनः ।
सौराष्ट्रिको ब्रह्मपुत्रो हारिद्रः सक्तुकस्तथा ॥७॥
वत्सनाभ इति ज्ञेया विषभेदा अमी नव ।
रसे रसायनादौ च वत्सनाभः प्रशस्यते ॥८॥
विषाणां सक्तुकान्तां प्रयोगो नेह दृश्यते ।
अतस्त्वेषां विषाणां तु स्वरूपं न प्रदर्शितम् ॥९॥

वत्सनाभक्षुपस्य परिचयः ।

सिन्दुवारदलः पार्श्वे तरुवृद्धिविवर्जितः ।
नीलपुष्पः कन्दविषो क्षुपो हस्तद्वयोच्छ्रितः ॥१०॥
वत्सनाभ इति ख्यातो रसतन्त्रविचक्षणैः ।
गडपाले च काश्मीरे नेपालादौ च जायते ॥११॥

वत्सनाभस्य परिचयः ।

दैर्घ्ये तु पञ्चाङ्गुलतः परं सप्ताङ्गुलोन्मितः ।
व्यासे चैकाङ्गुलात् सार्द्धद्व्यङ्गुलप्रमितस्तथा ॥१२॥

अपि च स्थावरं विषं नवधा विभजन्ति पुराविदः। हालाहलः कालकूट इत्यादिना। हालाहलादिविषाणां तन्त्रान्तरोक्तानि लक्षणानि—गोस्तनाभफलो गुच्छस्तालपत्रच्छदस्तथा। तेजसा यस्य दह्यन्ते समीपस्था द्रुमादयः ॥ असौ हालाहलो ज्ञेयः किष्किन्धायां हिमालये । दक्षिणाब्धितटे देशे कोङ्कणेऽपि च जायते ॥ देवासुररणे देवैर्हतस्य पृथुमालिनः। दैत्यस्य रुधिराज्जातस्तरश्वत्थसन्निभः ॥ निर्यासः कालकूटोऽस्य मुनिभिः परिकीर्तितः । सोऽहिच्छत्रे शृङ्गवेरे कोङ्कणे मलये भवेत् ॥ यस्मिन् गोशृङ्गके बद्धे दुग्धं भवति लोहितम् । स शृङ्गक इति प्रोक्तो द्रव्यतत्त्वविशारदैः ॥ प्रदीपलोहितो यः स्याद्दीप्तिमान् दहनप्रभः। महादाहकरः पूर्वैः कथितः स प्रदीपनः ॥ सुराष्ट्रविषये यः स्यात् स सौराष्ट्रिक उच्यते ॥ वर्णतः कपिलो यः स्यात् तथा भवति सारकः । ब्रह्मपुत्रः स विज्ञेयो जायते मलयाचले ॥ हरिद्रातुल्यमूलो यो हारिद्रः स उदाहृतः । यद् ग्रन्थिः सक्तुकेनैव पूर्णमध्यः स सक्तुकः ॥ तदेतत्कन्दजातीयमेव नवधा प्रकाशितं विषम्। वाग्भटेन कन्दविषेष्वेषां परिगणनात्। यद्यपि च—"साक्तुक मुस्तकं शृङ्गी बालकं सर्पपाह्वयम्। वत्सनाभश्च कर्मण्यं विषं स्निग्धं घनं गुरु ॥ न जात्वन्यत् प्रयोक्तव्यं कालकूटं विशेषतः ॥" इत्युक्तमभियुक्तैस्तथापि वत्सनाभातिरिक्तमुस्तकादिविषाणां परिचयानुपलम्भात् तदलभ्यत्वाद्वा प्रयोगो नेहोपलभ्यमानतन्त्रेषु दृश्यते । तदेतदाह रसे रसायनादौ च वत्सनाभः प्रशस्यते ॥७-९॥

तत्र वत्सनाभक्षुपस्य परिचयः शिष्यमतिवैशद्यार्थः। अस्य पत्राणि सिन्दुवारतुल्यानि परं पञ्चाङ्गुलदलवत् पञ्चदलसङ्घातवन्ति भवन्ति ॥१०-११॥

आमूलचूलं क्रमशः स्थूलश्च पाण्डुरप्रभः ।
कन्दोऽस्य भिषजां वर्यैर्वत्सनाभ इति स्मृतः ॥१३॥
दीर्घमूलं स्थूलकन्दं वत्सनाभविषक्षुपम् ।
उत्पाट्य शीतसमये वसन्ते वा समाहरेत् ॥१४॥

वत्सनाभस्य भेदाः ।

कृष्णाभः कपिशः पाण्डुवर्णतस्त्रिविधो मतः ।
वत्सनाभो विशेषेण क्रमेण गुणवत्तमः ॥१५॥

## वत्सनाभस्य नामानि ।

वत्सनाभो वत्सनागः क्ष्वेडोऽस्त्री च विषं मतम् ।
अमृतञ्च तदेवोक्तं रसतन्त्रविशारदैः ॥१६॥

ग्राह्यवत्सनाभस्य स्वरूपम् ।

स्थूलं स्निग्धं गुरु नवं फलपाकोत्तरोद्धृतम् ।
कीटाद्यभक्षितश्चैव विषं ग्राह्यमिहोच्यते ॥१७॥

वत्सनाभसंशोधनस्य प्रयोजनम् ।

अविशुद्धं विषं दाहं मोहं हृद्गतिरोधनम् ।
मृत्युञ्च विदधात्याशु तस्मात्तं परिशोधयेत् ॥१८॥

वत्सनाभस्य प्रथमः शोधनप्रकारः ।

यथोक्तगुणसम्पन्नं वत्सनाभं समाहरेत् ।
ततश्चणकसंस्थानं खण्डशः कारयेद्भिषक् ॥१९॥
पाषाणचषके वापि मृत्तिकाभाजने ततः ।
गोमूत्रेण समाप्लाव्य स्थापयेत्प्रखरातपे ॥२०॥
प्रत्यहं पूर्वनिक्षिप्तं गोमूत्रमपनीय तु ।
दत्त्वा च नूतनं मूत्रं तीव्रघर्मे तु विन्यसेत् ॥२१॥
एवं दिनत्रयं कृत्वा त्वचामपनयेत्ततः ।
शोषयेच्च विषं त्वेवं शुद्धिमायात्यनुत्तमाम् ॥२२॥

शीतसमये वसन्ते वा समाहरणं पूर्णवीर्यत्वात्तदानीमस्येति भावः ॥१२-१४॥

कृष्णाभ इति तस्य त्रैविध्यम् । कृष्णापेक्षया कपिशः कपिशापेक्षया च पाण्डुरो गुणवान् इति ॥१५॥

वत्सनाभनामानि तन्त्रव्यवहृतानि ॥१६-१७॥

अशुद्धञ्च विषं दाहादिकारकम् । आशु शीघ्रम् ॥१८॥

यथोक्तगुणसम्पन्नमिति प्रथमः शोधनप्रकारः । यथोक्ता गुणाः स्थूलस्निग्धत्वादयः । संस्थानं आकृतिम् ॥१९-२२॥

द्वितीयः शोधनप्रकारः ।

विषं चणकसंस्थानं कृत्वा पोट्टलिकागतम् ।
सुरभीपयसा चेह दोलिकायन्त्रयोगतः ॥२३॥
यामद्वयं वा यामैकं स्वेदयेदतियत्नतः ।
संशोधितं विषं त्वेवं विशुद्ध्यति न संशयः ॥२४॥

तृतीयः शोधनप्रकारः ।

खण्डीकृतो वत्सनाभः पोट्टलीगर्भसंस्थितः ।
अजादुग्धेन सुस्विन्नो यामतः शुद्धिमाप्नुयात् ॥२५॥

अथ वत्सनाभस्य गुणाः ।

विषं तु कटुकं तिक्तमुष्णं चैव कषायकम् ।
योगवाहि परं चैतन्महोत्कृष्टं रसायनम् ॥२६॥
त्रिदोषघ्नं विशेषेण मतं वातबलासनुत् ।
दीपनं शीतशमनं बृंहणं बलवर्द्धनम् ॥२७॥
अग्निमान्द्यप्रशमनं प्लीहोदरनिबर्हणम् ।
वातरक्तापहं चैव श्वासकासविधूननम् ॥२८॥
गुदामयग्रहणिकागुल्मनिर्दलनं परम् ।
कुष्ठपाण्डुज्वरहरं त्वामवातप्रणाशनम् ॥२९॥
विनिहन्ति विशेषेण तिमिरं च निशान्धताम् ।
अभिष्यन्दं नेत्रशोथं कर्णशोथञ्च दारुणम् ॥३०॥
कर्णशूलं शिरःशूलं गृध्रसीं कटिवेदनाम् ।
आखुवृश्चिकसर्पाणां विषं चैवाविलम्बितम् ॥३१॥

वत्सनाभस्य विशिष्टा गुणाः ।

विषं प्राणप्रदममलं विधिना परिशीलितम् ।
तदेवाविधिनायुक्तं मतं प्राणहरं परम् ॥३२॥
तस्माद्विषविधानज्ञो रोगाणां लक्षणानि तु ।
विमृश्य सूक्ष्मया बुद्ध्या प्रयुञ्जीत प्रयत्नतः ॥३३॥

गोदुग्धेन अजादुग्धेन वा दोलया याम स्वेदनादपि शुद्ध्यति ॥२३-२५॥

विषन्तु कटुकमिति वत्सनाभस्य गुणाः । बृंहण शरीरधातुवृद्धिकरम् । गुदामयः अर्शांसि ॥२६-३१॥

अथास्य भूय. गुणवर्णनं विस्तरेण यथानुभवमाह—यस्माद्विषमाविधिना युक्तं मृत्युकर तस्मात् सम्यग्विचार्य प्रयत्नतो युञ्जीतेति समन्वयः। यत्नश्च वृद्धवाग्भटोक्तोऽप्यनुसन्धेयः । तथाहि—घृतोपस्कृतदेहस्य विशुद्धस्य हिताशिनः। सात्विकस्योदिते भानौ योज्यं शीतवसन्तयोः ॥ ग्रीष्मेऽप्यात्ययिके व्याधौ।"

विषं विशेषतो वातवेदनाहरमुत्तमम् ।
मूत्रलं स्वेदजननं शूलनिर्मूलनं परम् ॥३४॥
प्रवृद्धतापशमनं तथा शोथनिषूदनम् ।
तत्तद्धेतुप्रवृद्धाया हृद्गतेश्च नियामकम् ॥३५॥
स्वेदसञ्जनकान्येषां भेषजानामपेक्षया ।
परं तु तापशमनं न चातिस्वेदकृत्तथा ॥३६॥
प्रवृद्धरक्तसञ्चारसुसंयमनसंविधौ ।
अमोघास्त्रमिदं ख्यातं सर्वोत्कृष्टं महौषधम् ॥३७॥
रसतन्त्रचिकित्सायां बाहुल्येन निरूपिते ।
विषप्रयोगे भूम्ना तु प्रवृत्ते सति भारते ॥३८॥
पूर्वाचार्यविनिर्दिष्टं रक्तनिर्हरणादिकम् ।
इदानीमत एवेह तिरोभूतं तु निर्भरम् ॥३९॥
विशोधितं खलु विषं मात्रया परिशीलितम् ।
हृदयस्य गतिं नैवावसादयति कर्हिचित् ॥४०॥
मस्तिष्कदेशे संवृद्धां रक्तसञ्चरणक्रियाम् ।
नाशयत्याशु मस्तिष्के जातं वा रक्तसञ्चयम् ॥४१॥
फुप्फुसच्छदशोथघ्नस्तथा फुप्फुसशोथनुत् ।
तथा शोथसमुद्भूतविविधज्वरवेगजित् ॥४२॥
शोथं विनाशयत्याशु हृदयावरणोत्थितम् ।
तथान्त्रावरणोद्भूतं ज्वरञ्च विनिहन्त्यलम् ॥४३॥
फुप्फुसच्छदशोथादिरोगाणां प्रक्रमे विषम् ।
प्रयुक्तं निरुणद्ध्येतत् केषांचिद्भिषजां मतम् ॥४४॥
गलशोथं तुण्डिकेरीं तथैव गलशुण्डिकाम् ।
अन्यांश्च तरुणान् कण्ठरोगानाशु निहन्त्यलम् ॥४५॥

इति । तथा—"अभ्यस्तेऽपि विषे यत्नात् वर्जनीयान् विवर्जयेत् । कट्वम्लतैल लवणदिवास्वप्नातपानलान् ॥ रूक्षमन्नं विशेषेण भयं वाजीर्णतः सदा ॥ दृविभ्रमं कर्णरुजामन्यांश्चानिलजान् गदान् ॥ विषं रूक्षाशिनः कुर्यात् मृत्यु-मेव त्वजीर्णत." इति च । प्रवृद्धस्तापः त्वगूष्मेति यावत्, तस्य शमनम् । पूर्वाचार्यैः सुश्रुतवाग्भटादिभिः । अतएवेति हेतुसमुच्चयः । यस्माद्विषं रक्तगतिनियामकं तस्मादित्यर्थः । शुद्धं हृदयस्य गतिं नैवावसादयति । अशुद्धमतिमात्रम्वा शीलि-तन्तु हृदयावसादकरमस्त्येवेत्यर्थः ॥ फुप्फुसच्छदशोथः "Pleurisy" इत्याङ्गलभा-षायाम्, तस्य विनाशकः । फुप्फुसशोथस्तु 'Pneumonia' इत्याख्यायते पाश्चात्य-

तत्तत्स्थानसमुद्भूतं त्वभिघातादिहेतुजम् ।
बाह्यमाभ्यन्तरं रक्तस्रावं ह्रासयति द्रुतम् ॥४६॥
सदाहं सक्षवं तीव्रशिरोवेदनयान्वितम् ।
सदाहभ्रूयुगं हन्ति प्रतिश्यायं नवोत्थितम् ॥४७॥
सकफां बहुरक्तां वा स्वल्परक्तामुपक्रमे ।
प्रवृद्धमलवेगाढ्यां विनिहन्ति प्रवाहिकाम् ॥४८॥
ऊर्ध्वजत्रुगता या तु नाडिका पञ्चमी मता ।
शूलं तदुत्थितं शीघ्रं विनिहन्ति विशेषतः ॥४९॥
बहुवेगं वाल्पवेगं प्रगाढारक्तलोहितम् ।
ज्वरान्वितं तूर्ध्वगतं रक्तपित्तं व्यपोहति ॥५०॥
तावदेव प्रयोक्तव्यं विषं होरात्रयोत्तरम् ।
गात्रतापो भवेन्नेह यावत् खलु शतांशिकम् ॥५१॥
अन्तर्दाहसमायुक्तं द्रुतं प्रबलनाडिकम् ।
पिपासया परिगतं द्रुतहृद्गतिसंयुतम् ॥५२॥
अजीर्णाध्मानसंयुक्तं तथैव स्वेदवर्जितम् ।
अतिमात्राभिसंवृद्धगात्रतापांशसंगतम् ॥५३॥
कासकम्पशिरःशूलैः पर्याकुलमनारतम् ।
अस्थैर्यारतिवैचित्यभयोद्वेगादिसंयुतम् ॥५४॥
वातवेदनयाक्रान्तं त्वारक्तमुखमण्डलम् ।
शुष्कोष्णचर्मसंस्पर्शं प्रगाढारक्तमूत्रकम् ॥५५॥
शीतपूर्वं तु दाहान्तं ज्वरं विविधहेतुजम् ।
विषं विधिप्रयुक्तं तु नाशयत्याशु निश्चितम् ॥५६॥
विविधोत्थानसंभूतान् विविधस्थानसंस्थितान् ।
निहन्ति तरुणानाशु शोथांस्तु विविधाकृतीन् ॥५७॥

भिपक्तन्त्रेषु । हृदयावरणोत्थितः शोथः "Pericarditis," इति । अन्त्रावरणोद्भूत ज्वरमिति तत्र शोथहेतुतया जातमिति यावत् । अयं हि "Peritonitis" इत्याख्यया प्रसिद्धः । प्रक्रम इति प्रारम्भकाले । तुण्डिकेरी गलरोगविशेष. "शोथः स्थूलस्तोदवाहप्रपाकी श्लेष्मासृग्भ्यां तुण्डिकेरी मता तु" इत्युक्तलक्षणः । जत्रूर्ध्वगता पञ्चमी नाडिका "Fifth cranial Nerve" "Trigeminal Nerves" वा कथ्यते । अन्तर्दाहसमायुक्तमित्यादिना ज्वरस्य सोपद्रवस्य आवास्थिकस्य विस्तरेण वर्णनम् । सत्स्वेषु लक्षणेषु विधिप्रयुक्तं विषं ज्वरं हन्ति । तरुणान् बलवतो

विविधोत्थानसंस्थानां त्वसह्यत्वप्रकाशिकाम् ।
स्पर्शासह्यां रात्रिभवां वेदनाञ्च निहन्त्यलम् ॥५८॥
तत्तद्रोगघ्नभैषज्ययुतं तु विमलं विषम् ।
योगवाहितया हन्ति सर्वानेव महामयान् ॥५९॥
नानारसप्रयोगेण शान्तिं यान्ति न ये गदाः ।
विषप्रयोगेण तु ते प्रशाम्यन्ति न संशयः ॥६०॥

विषप्रयोगस्य निषेधः ।

न बालेष्वतिवृद्धेषु रोगिणीगर्भिणीषु च ।
न चातिक्षीणगात्रेषु यक्ष्मलक्ष्मयुते न च ॥६१॥
न क्रोधिते न च श्रान्ते हृद्दौर्बल्ये विशेषतः ।
वत्सनाभविषं वैद्यः प्रायशो न प्रयोजयेत् ॥६२॥
एतेष्वपि प्रयोक्तव्येऽवश्यं खलु विधानवित् ।
यत्नतोऽत्यल्पकालार्थं युञ्जीतात्यल्पमात्रया ॥६३॥

विषस्य मात्रया प्रयोगे फलवैशिष्ट्यम् ।

विषं भवति पीयूषं मात्रया विनियोजितम् ।
तदेवामात्रया युक्तं द्रुतं मुष्णाति जीवितम् ॥६४॥
तस्मात् पूर्वं तु रोगाणां रोगिणां च बलाबलम् ।
वीक्ष्य देशादिकञ्चापि विषमात्रां प्रकल्पयेत् ॥६५॥

वत्सनाभविषस्य मात्रा ।

कलांशतो रक्तिकाया वस्वंशप्रमितं विषम् ।
विमलं विनियुञ्जीत बलकालाद्यपेक्षया ॥६६॥

अथ वत्सनाभविषस्य आमयिकः प्रयोगः ।

मृत्युञ्जयरसः ।

अमृतं द्विगुणामलेङ्गुलाढ्यं त्रिदिनं त्वार्द्रकवारिणा निपिष्टम् ।
बलिमागधिकामरीचटङ्कैः समभागैः परिपेषयेन्निकामम् ॥६७॥

नवीनानिति विशेषः । न संशय इति निश्चितानुभवप्रकाशनम् ॥३२–६०॥

न बालेष्वतिवृद्धेष्विति विषप्रयोगनिषेधः तीक्ष्णवीर्यत्वात् हृदयावसादकत्वाच्च वत्सनाभस्य । अत्र चापि प्रयोगावश्यकता चेत् अत्यल्पकालमात्रोऽस्य प्रयोगो निरापद इति ॥६१–६३॥

विषं भवति पीयूषममृतं मात्रया विनियोजितम् । मात्रा च रोगिदेशकालबलाबलापेक्षयेति बोधयति तस्मात् पूर्वमित्विति । रक्तिकायाः षोडशांशतः अष्टमांशपर्यन्तमस्य मात्रानिर्धारणम् ॥६४–६६॥

अस्य च रोगयोग्यप्रयोगक्रमे प्रथमतो मृत्युञ्जयरसः—यद्यपि तन्त्रान्तरेषु

वटिकाः कारयेद्यत्नात् ततो विषविधानवित् ।
गुञ्जार्धसम्मिता वापि गुञ्जापादांशसम्मिताः ॥६८॥
रसोऽयं तु समाख्यातो मृत्युञ्जयसमाह्वयः ।
अयं वातज्वरहरस्तथा फुप्फुसशोथहृत् ॥६९॥
प्रवाहिकाप्रशमनो विविधज्वरनाशनः ।
आध्मानाजीर्णसंयुक्तसंनिपातनिपातनः ॥७०॥

मृत्युञ्जयरसस्य आमयिकः प्रयोगः ।

आरक्तवक्त्रे प्रबलज्वरे च श्वासोच्छ्रये कष्टदकासवेगे ।
देयो दिनेऽयं प्रथमे द्वितीये मृत्युञ्जयः फुप्फुसशोथरोगे ॥७१॥
रसोऽयं शीलितस्तीव्रज्वरवेगसमन्वितम् ।
आध्मानाजीर्णसंयुक्तं कृमिरोगं विनाशयेत् ॥७२॥
विविधोत्सेधजं वापि हृदावरणशोथजम् ।
ज्वरमारम्भवेलायां हन्ति मृत्युञ्जयो रसः ॥७३॥
नवज्वरायमाणं च त्वजीर्णाध्मानसंयुतम् ।
सन्निपातं निहन्त्याशु रसोऽयं निम्बुकाम्भसा ॥७४॥
गौरवारुचिसंसृष्टं सामं वापि निरामकम् ।
रसोऽयं निम्बुकद्रावैर्निहन्ति विषमज्वरम् ॥७५॥
पिप्पलीमधुसंयुक्तो रसोऽयं परिशीलितः ।
नवज्वरायमाणन्तु जीर्णज्वरमपोहति ॥७६॥
सोत्सेधारक्तशिश्नाग्रं सदाहं वेदनान्वितम् ।
निहन्त्यारम्भवेलायामौपसर्गिकमेहकम् ॥७७॥

हिङ्गुलेश्वरो रसः

अमृतं विमलं युगतोलमितं दरदं च कणाः सममेव समम् ।
परिपेष्य भृशं खलु सार्द्धयवप्रमिता वटिका विदधीत बुधः ॥७८॥
रसोऽयं तु समाख्यातो विबुधैर्हिङ्गुलेश्वरः ।
आमवातप्रशमनस्तथा वातज्वरापहः ॥७९॥

विषहिङ्गुलयोरार्द्रकवारिणा पेषणं नोक्तं तथापि अनुभूतचरत्वादुपयुक्ततमत्वाच्चात्र कथितमाचार्यैरिति । अस्य च आवस्थिक. प्रयोगः स्वानुभूतचरस्तन्त्रान्तरानुक्तो ऽप्याविष्कृतः ॥६७-७७॥

हिङ्गुलेश्वरः—शुद्धविष द्वितोलकम्, हिङ्गुल द्वितोलकम्, पिप्पली द्वितोल कमिता । वारिणा पेषयित्वा सार्धयवप्रमिता वटिका विधेयाः । सोऽयमामवाता

हिङ्गुलेश्वरस्य आमयिकः प्रयोगः ।

तीव्रज्वरं साङ्गमर्दं सन्धिशूलसमन्वितम् ।
आमवातं निहन्त्याशु शीलितो हिङ्गुलेश्वरः ॥८०॥
शीतकम्पाङ्गमर्दाढ्यं शिरोवेदनयान्वितम् ।
रसोऽयं शीलितो हन्ति वातिकज्वरमुल्वणम् ॥८१॥
नवज्वरायमाणन्तु जीर्णज्वरमथापि वा ।
सविरामज्वरं हन्ति रसोऽयं परिशीलितः ॥८२॥

पञ्चामृतरसः ।

अमृतं तोलकमितं रसं गन्धञ्च तन्मितम् ।
मरिचं टङ्कणञ्चैव तोलकत्रितयोन्मितम् ॥८३॥
समादाय ततो वारा वटिका रक्तिकोन्मिताः ।
निर्मापयेद्भिषग्वर्यो रसः पञ्चामृताभिधः ॥८४॥
विविधोत्थानसंस्थानं विविधस्थानसंस्थितम् ।
ज्वरातिसारयुक्तञ्च शोथं हन्त्यविलम्बितम् ॥८५॥
जलोदरं शिरःशूलं पीनसञ्च गलग्रहम् ।
नासारोगं कण्ठरोगं हन्ति च श्लैष्मिकामयम् ॥८६॥

अस्य आमयिकः प्रयोगः ।

पुनर्नवाकषायेण रसोऽयं वार्द्रकद्रवैः ।
विविधोत्थानसंस्थानं शोथं हन्त्याशु सर्वगम् ॥८७॥
आर्द्रकद्रवयोगेन रसोऽयं परिशीलितः ।
शिरःशूलं निहन्त्याशु वृक्षं शक्राशनिर्यथा ॥८८॥

शिवताण्डवरसः ।

विषं तु तोलकमितं रससिन्दूरकं तथा ।
तालकं विमलं सूतं बलिं च समभागिकम् ॥८९॥
चूर्णीकृतं च मरिचं चतुस्तोलकसंमितम् ।
समादाय भिषग्वर्यः पेषयेदार्द्रकद्रवैः ॥९०॥
निर्मापयेद्विधानज्ञो वटिका रक्तिकोन्मिताः ।
रसोऽयं तु समाख्यातः शिवताण्डवसंज्ञकः ॥९१॥

दिशमनः । सविरामज्वरमिति विरम्य पुनर्वेगोदये जनिशीलम् ॥७८-८२॥

पञ्चामृतरसः—वारा जलेन । निगदव्याख्यातमन्यत् ॥८३-८८॥

शिवताण्डवरसः—विषादिगन्धकान्तानां प्रत्येकमेकतोलकम्, मरिचस्य च

दृढदन्तं लिप्तदेहं भ्रान्ततारकलोचनम् ।
विषयाशङ्ककरणं सन्निपातं निपातयेत् ॥९२॥

आनन्दभैरवो रसः ।

अमृतं गव्यमूत्रेण यत्नतो विमलीकृतम् ।
मागधीं मरिचं चैव सौभाग्यं दरदं तथा ॥९३॥
समं समं समादाय वारिणा परिपेषयेत् ।
रक्तिकार्द्धमिताश्चैव वटिकाः कारयेत्ततः ॥९४॥
प्रवाहिकाप्रशमनः पूयमेहप्रणुत्परम् ।
ज्वरातीसारजिन्नाम्ना रसो ह्यानन्दभैरवः ॥९५॥

आनन्दभैरवस्य आमयिकः प्रयोगः ।

सशोथरक्तशिश्नाग्रं दाहकण्डूयनान्वितम् ।
पूयमेहं निहन्त्याशु रसो ह्यानन्दभैरवः ॥९६॥
अतीसारं ज्वरोद्भूतं ज्वरं चाप्यतिसारजम् ।
बहुतापं वातिवेगं हन्त्ययं तु रसोत्तमः ॥९७॥

अजीर्णशूलप्रबलज्वरायां प्रवाहिकायां कफवातजायाम् ॥
ज्वरोपशान्त्यै विनियोजनीयः फलेन्द्रपत्रस्वरसादियोगात् ॥९८॥

जयावटी ।

विषं निशा कटुत्रिकं कृमिघ्ननिम्बमुस्तकम् ।
समं समं समोन्मितं जयन्तिकाशिफारजः ॥९९॥
समाहरेद्द्विपग्वरो वटीं द्विगुञ्जसंमिताम् ।
प्रणाययेत्तु नामतो बुधैर्मता जयावटी ॥१००॥
जयावटी विशेषतः प्रमेहकासपाण्डुजित् ।
नवज्वरापहा परं तथैव रक्तपित्तनुत् ॥१०१॥

जयावटिकाया आमयिकः प्रयोगः ।

चन्दनस्य कषायेण शीलिता तु जयावटी ।
रक्तपित्तं निहन्त्याशु सज्वरं त्वविलम्बितम् ॥१०२॥

चतुस्तोलकं गृहीत्वा आर्द्रकरसैः पेषयेत् । व्याख्यासमानमन्यत् ॥८६-९२॥

आनन्दभैरवः—यत्नतो विमलीकरणं प्रागुक्तम् । दरद हिङ्गुलम् । सर्वं समानमानम् । पूयमेहः "Gonorrhæa" इत्याङ्गलभाषायाम् । सशोथरक्तशिश्नाग्रमिति प्रयोगयोग्यरोगावस्थानिर्देशः । फलेन्द्रपत्रं राजजम्बुवृक्षपत्रम् ॥९३-९८॥

जयावटी—निशा हरिद्रा, कृमिघ्नं विडङ्गम् । रोगप्रयोगस्तु यद्यप्यनुपा

बलामूलकषायेण शीलिता तु जयावटी ।
जत्रूर्ध्वपञ्चमीनाडीगतं शूलं व्यपोहति ॥१०३॥
मुस्तेन्द्रयवविश्वानां क्वाथेन तु जयावटी ।
शीलिता ग्रहणीं हन्ति सज्वरामतिदारुणाम् ॥१०४॥
पर्पटस्य कषायेण जया तु परिशीलिता ।
विनाशयति पित्तोत्थं ज्वरं खल्वतिदारुणम् ॥१०५॥

कफकेतू रसः ।

अमृतं तोलकमितं गोमूत्रपरिशोधितम् ।
पिप्पली शङ्खभसितं टङ्कणं चैव तन्मितम् ॥१०६॥
शृङ्गवेररसेनैव पेषयेत्तु दिनत्रयम् ।
गुञ्जार्धमात्रा वटिकाः कर्तव्याः खलु यत्नतः ॥१०७॥
रसोऽयं भाषितो नाम्ना कफकेतुसमाह्वयः ।
प्रतिश्यायं तथा कासं कण्ठरोगञ्च नाशयेत् ॥१०८॥
गलग्रहं कर्णरोगं श्वासं प्रतमकाभिधम् ।
विनिहन्ति विशेषेण रसोऽयमविलम्बितम् ॥१०९॥

अस्य आमयिकः प्रयोगः ।

क्षौद्रार्द्रकरसोपेतो रसोऽयं परिशीलितः ।
तीव्रशीर्षव्यथोपेतं स्तब्धाङ्गं काससंयुतम् ॥११०॥
सज्वरं वातजं वापि खलु वातबलासजम् ।
प्रतिश्यायं निहन्त्याशु दिवसत्रयमात्रतः ॥१११॥
सन्निपातसमुद्भूतं तथैव तु गलग्रहम् ।
कर्णक्षतादिजनितं ज्वरं हन्ति च दारुणम् ॥११२॥
नवज्वरायमाणञ्च प्रतिश्यायसमन्वितम् ।
श्वासं प्रतमकाभिख्यं नाशयत्यविलम्बितम् ॥११३॥

विषरसायनम् ।

अमृतं तोलकमितं गोमूत्रविमलीकृतम् ।
तत्समं रससिन्दूरं हिङ्गुलं विमलं तथा ॥११४॥

नभेदेन तन्त्रान्तरेषु विस्तरेणोक्तः तथापि विषप्रयोगमधिकृत्य विशेषतो येषु येषु रोगेषु प्रयुज्यते तेषामेवात्र परिसंख्यानम् ॥९९-१०५॥

कफकेतूरसः—शृङ्गवेररसेन आर्द्रकरसेन। अनुपानानि आवस्थिकः प्रयोग कालश्चानुभूतचरः विशदीकृतः। दिवसत्रयमात्रत इति अनुभवविषयीभूतकाल निवेदनं प्रायिकम् ॥१०६-११३॥

विषरसायनम्—गोमूत्रविमलीकृतमिति विशेषः। तारं रजतम्। रसगन्धक

तथैव तारं ताम्रं च रसगन्धकजारितम् ।
व्योषं पलार्द्धप्रमितं चतुर्जातं च चित्रकम् ॥११५॥
समादाय भिषग्वर्यो वारिणा परिपेषयेत् ।
वटिकाः कारयेद्युक्त्या रक्तिद्वितयसंमिताः ॥११६॥
प्राणाचार्यैः समाख्यातं नाम्ना विषरसायनम् ।
बल्यं वर्ण्यं परं वृष्यं नानारोगनिषूदनम् ॥११७॥
मासद्वयप्रयोगेण रसस्यास्य निरन्तरम् ।
दिव्यदृष्टिर्दीर्घकायो भवत्येवाविलम्बितम् ॥११८॥
अग्निसंदीपनमिदं यकृत्प्लीहनिषूदनम् ।
अजीर्णानाहशमनं परं शूलनिबर्हणम् ॥११९॥
कर्तुं जीवनसाफल्यं विहर्तुं ललनाकुले ।
यौवनानन्दमाहर्तुमिदं सेव्यं रसायनम् ॥१२०॥

अमृतरसायनम् ।

विषं द्वितोलकमितं सुरभीमूत्रभावितम् ।
धात्रीहतं कान्तलोहं गगनं स्वर्णमाक्षिकम् ॥१२१॥
स्वर्णसिन्दूरकञ्चैव तारं वङ्गञ्च तन्मितम् ।
खादिरं नागरं चैव त्रितोलकमितं पृथक् ॥१२२॥
समादाय भिषग्वर्यः कन्यानीरेण मर्दयेत् ।
निर्मापयेत्तु वटिका रक्तिद्वितयसंमिताः ॥१२३॥
समाख्यातं भिषग्वर्यैर्नाम्नामृतरसायनम् ।
नानातङ्कप्रशमनं रसायनमनुत्तमम् ॥१२४॥
रसायनमिदं रम्यं दीपनं बृंहणं परम् ।
बलसञ्जननञ्चैव रतिशक्तिविवर्द्धनम् ॥१२५॥
कासश्वासप्रशमनं क्षयक्षयकरं परम् ।
क्लैब्यापहं विशेषेण शुक्रतारल्यनाशनम् ॥१२६॥
अतीसारग्रहणिकावह्निमान्द्यनिषूदनम् ।
परं त्वग्दोषशमनं तथा कुष्ठविनाशनम् ॥१२७॥

जारितमिति ताम्रविशेषणं प्रकारान्तरमृतनिषेधाय । युक्त्या सावधानतया । कर्तुं जीवनसाफल्यमिति वृष्यत्वादस्य योगस्य ॥११४-१२०॥

अथामृतरसायनमपरम्—सुरभीमूत्रं गोमूत्रम् । धात्री आमलकी तत्स्वरसेन शतधा पुटितं कान्त म्रियत इति पूर्वमुक्तम् । गगनं अभ्रकम् । खादिरं खदिरसारः ।

अपत्यकरमत्यन्तं परमोजोविवर्द्धनम् ।
धृतिस्मृतिप्रदञ्चैव नानामेहनिषूदनम् ॥१२८॥
यौवनोपवने नित्यं रतिपुष्पचिचीषया ।
विहरद्भिः कामिभिस्तु सेव्यमेतद्रसायनम् ॥१२९॥
एतद्दिव्यरसायनं घृतसिताक्षौद्रेण संयोजितं
वर्षैकं परिशीलितं ह्यविरतं कामं द्विगुञ्जोन्मितम् ।
वार्द्धक्यं विनिहन्त्यलं शमयति श्लेष्माणमत्युल्बणं
कामं कामकलाविलासचतुरप्रौढाङ्गनारञ्जनम् ॥१३०॥

अथ विषस्य प्रयोगाः ।

व्योषताम्रसमायुक्तं विषं तु परिशीलितम् ।
वातशूलं तथा गुल्मं विनिहन्ति सुदारुणम् ॥१३१॥
मधुयष्टीपद्मकन्दलाक्षोशीरयुतं विषम् ।
शीलितं तण्डुलाम्भोभी रक्तपित्तहरं परम् ॥१३२॥
वचाचन्दनलोध्राढ्यं विषं क्षौद्रेण शीलितम् ।
समाख्यातं विशेषेण जीर्णज्वरविनाशनम् ॥१३३॥
वरीविदारिकाद्राक्षाकपिकच्छूसमन्वितम् ।
विषं तु मधुना लीढं शुक्रसञ्जननं परम् ॥१३४॥
रजनीगोक्षुरद्राक्षायुतं युक्तं विषं द्रुतम् ।
गोक्षुरस्य कषायेण मूत्रकृच्छ्रप्रणाशनम् ॥१३५॥
त्रायन्तीवायसीमूलगायत्रीराजपादपैः ।
शृतैर्विषं शीलितं तु ख्यातं कुष्ठनिषूदनम् ॥१३६॥
पाषाणभेदाश्मजतुयवक्षारसमन्वितम् ।
अमृतं शीलितं हन्ति त्वश्मरीमतिदारुणाम् ॥१३७॥
सर्जिकाक्षारसंयुक्तं सव्योषं परिशीलितम् ।
विषं खलु समाख्यातं परं गुल्मप्रणाशनम् ॥१३८॥
जन्तुघ्नदाडिमशिफाशतपुष्पायुतं विषम् ।
शीलितं नाशयत्याशु कृमिरोगं सुदारुणम् ॥१३९॥

रतिरेव पुष्पं तस्य चिचीषा चयनेच्छा । कामं अत्यर्थम् ॥१२१-१३०॥

अथ विषस्य प्रयोगाः—व्योषं त्रिकटु । पद्मकन्दः शालूकं बिसम्वा । त्रायन्ती त्रायमाणा । वायसीमूलं काकमाचीमूलम् । "काकाह्वा चैव वायसी" इति निघण्टुः । गायत्री खदिरः । राजपादपः आरग्वधः। अश्मजतु शिलाजतु । दाडिम-

त्रिक्षारशरपुङ्खाढ्यं कणामूलयुतं विषम् ।
शीलितं मात्रया नित्यं मतं प्लीहानिषूदनम् ॥१४०॥

अथास्य वाह्यप्रयोगाः ।

बीजपूरद्रवैः पिष्टं विषं समसितायुतम् ।
अञ्जनान्नाशयत्याशु काचं नातिचिरोत्थितम् ॥१४१॥
निशाद्वयकणायुक्तं विषं कृष्णाञ्जनान्वितम् ।
अञ्जितं नाशयत्येव काचं नातिचिरोत्थितम् ॥१४२॥
त्रिसप्तवारं त्वमृतं भावितं धात्रिकारसैः ।
अञ्जितं शुद्धशङ्खाढ्यं तिमिरं हन्ति दारुणम् ॥१४३॥
सुरभीमूत्रयोगेन सप्तधा भावितं विषम् ।
सकणं त्वञ्जितं यत्नान्मतं काचजिदञ्जनम् ॥१४४॥
सुश्लक्ष्णपिष्टहीराढ्यं विषं गोमूत्रभावितम् ।
नारीस्तन्येन संघृष्टं मतं काचजिदञ्जनम् ॥१४५॥
करवीरकरञ्जार्कनिम्बपत्रनिशायुतम् ।
रक्तचन्दनमञ्जिष्ठासप्तपर्णवचान्वितम् ॥१४६॥
मालतीपत्रसंयुक्तं विषं तालशिलायुतम् ।
प्रलेपेन निहन्तीह व्रणान् कुष्ठसमुद्भवान् ॥१४७॥
घृष्टमार्द्रकतोयेन विषमत्यल्पमात्रया ।
सद्यःपूरणयोगेन कर्णशूलहरं मतम् ॥१४८॥
कदलीकन्दतोयेन विषं भृङ्गाम्बुभावितम् ।
पूरणाद्धि निहन्तीह पुष्पं नातिचिरोत्थितम् ॥१४९॥
भृङ्गराजरसेनैव पूरणाच्च निशान्धताम् ।
विषाञ्जिते च नयने सिञ्चेद्धारा मुहुर्मुहुः ॥१५०॥

विषप्रभा वर्तिका ।

विषं तु तोलकमितं निशास्वरसपेषितम् ।
विशोधिता रोगशिला भृङ्गराजद्रवेण तु ॥१५१॥

शिफा दाडिमीमूलम् ॥१३१-१४०॥

समा विषतुल्या या सिता खण्डं तद्युतम् । काचः नेत्ररोगविशेषः । तिमिरमेव विकृतं सत् काचतां याति। सकणं पिप्पलीसहितम् ।करवीरो हयमारः, निशा हरिद्रा, तालं हरितालम्, शिला मनःशिला । विषाञ्जिते चेत्युपक्रमः विषतीक्ष्णताप्रतिषेधाय सर्वत्र ज्ञेयः ॥१४१-१५०॥

विषप्रभा वर्तिका—अक्षस्य विभीतकस्य बीजम् । बीजस्य मज्जा ग्राह्या ।

श्लक्ष्णचूर्णीकृतं शङ्खं त्वहिफेनं च सैन्धवम् ।
कणाभया लोध्रनिशे बीजमल्लकरञ्जयोः ॥१५२॥
वृक्षाम्लं मरिचं चैव मञ्जिष्ठा रक्तचन्दनम् ।
समं समं समादाय त्वजाक्षीरेण पेषयेत् ॥१५३॥
निर्मापयेद्भिषग्वर्यो वर्तिकाः खलु शोभनाः ।
नामतस्तु समाख्याता भिषग्भिस्तु विषप्रभाः ॥१५४॥
सङ्घृष्टा वर्तिका वारा नेत्रयोर्विनियोजिता ।
शुक्रार्ममांसपिल्लादीन् रोगान् नाशयति द्रुतम् ॥१५५॥
शिरीषदलपुष्पाढ्यं विषं तु परिशीलितम् ।
समाख्यातं विशेषेण भृशमाखुविषापहम् ॥१५६॥
कदलीकन्दतोयेन विषं साज्यं प्रयोजितम् ।
अशनाल्लेपनाच्चैव हन्ति सर्पविषं भृशम् ॥१५७॥
गोतक्रेण समायुक्तं विषमत्यल्पमात्रया ।
निपीतं शमयत्येव विषमाखुकुलोद्भवम् ॥१५८॥
विषं तु तिलतैलेन घृष्टं लेपप्रयोगतः ।
विनिहन्त्यचिरादेव वृश्चिकार्तिं सुदारुणाम् ॥१५९॥
अर्कक्षीरेण लिप्तं तु विषमत्यल्पमात्रया ।
सर्वासामेव लूतानां विषं जयति दारुणम् ॥१६०॥
कुष्ठैलावाकुचीमांसीदेवदारुनतान्वितम् ।
विषं पानप्रलेपाभ्यां मतं सर्वविषापहम् ॥१६१॥
विषगर्भाभिधं तैलं नित्यमभ्यङ्गयोजितम् ।
मन्यास्तम्भं हनुस्तम्भं पक्षाघातं परिग्रहम् ॥१६२॥
सर्वाङ्गग्रहणं पृष्ठत्रिककम्पादिकं तथा ।
निहन्ति हि विशेषेण निखिलानिलवेदनाः ॥१६३॥

अथ उपविषाणां नामानि ।

विषतिन्दुकबीजं च त्वहिफेनश्च रेचकम् ।
धत्तूरबीजं विजया गुञ्जा भल्लातकाह्वयः ॥१६४॥

तथा करञ्जस्य च बीजमज्जा ॥१५१-१५५॥

शिरीषस्य पत्रपुष्पाभ्यां संयुक्तं विषं विशेषतो मूषिकविषापहम् । साज्यं सघृतम् । लेपनात् दशदेशे । नतं तगरम् । विषगर्भाभिधं तैलं विषगर्भतैलम्, तद्यथा—धत्तूरस्य रसस्य पञ्चकुडवं तैलं तथा काञ्जिकं प्रस्थानाञ्च चतुष्टयं गदवचा त्रिंशत्परं शाणकाः । हरिद्रात्रीमरिचात्पृथङ् नव विषात् पट् स्वर्णबीजात्पटोः स्युः सप्ताधिकविंशतिः परिमितं तीव्रानिलध्वंसनम् ॥१५६-१६३॥

अथ क्रमप्राप्तोपविषनिरूपणे प्रथमत उपविषाणां नामतः कीर्तनम्—

अर्कक्षीरं स्नुहीक्षीरं लाङ्गली करवीरकम् ।
समाख्यातो गणोऽयं तु बुधैरुपविषाभिधः १६५॥

अथ विषतिन्दुकस्य नामानि ।

कुचेलकं कुचेलश्च कुचिला कुचिलं तथा ।
विषतिन्दुस्तथा तिन्दुस्तिन्दुकं विषतिन्दुकम् ॥१६६॥
कारस्करो रम्यफलः कुपाको विषमुष्टिका ।
विषमुष्टिः कालकूटस्तदेव विनिगद्यते ॥१६७॥

विषतिन्दुकस्य परिचयः ।

कारस्करः समाख्यातः शिखिजातीयकस्तरुः ।
काण्डोऽस्य वक्रः स्थूलश्च काण्डत्वक् भसितप्रभा १६८॥
पत्रं तु वर्तुलं प्रायो मसृणं खल्वखण्डितम् ।
हरिद्वर्णं स्पष्टशिरं ह्रस्वकं पत्रवृन्तकम् ॥१६९॥
कुसुमं लघु शुक्लञ्च हरिदाभञ्च कोमलम् ।
नारङ्गरङ्गं मसृणं फलं रम्यं सुवर्तुलम् ॥१७०॥
मज्जा शुभ्रा कोमला च वीजं वृत्तश्च रोमशम् ।
वीजमेव चिकित्सायां विबुधैर्विनियुज्यते ॥१७१॥
कोङ्कणे च तथा वङ्गे दक्षिणे च विशेषतः ।
देशेष्वन्येषु च तथा जायते विषतिन्दुकम् ॥१७२॥

विषतिन्दुकस्य प्रथम शोधनप्रकारः ।

विषतिन्दुकवीजानि विन्यसेद् गृहवारिणि ।
दिनत्रयं प्रयत्नेन त्यपनीय वहिस्त्वचम् ॥१७३॥
निदाघे चाथ संशोष्य चूर्णयेद्भिषजां वरः ।
एवं विशुद्धिमायाति सर्वथा विषतिन्दुकम् ॥१७४॥

द्वितीयः शोधनप्रकारः ।

कारस्करस्य वीजानि त्वतिमन्दाग्नियोगतः ।
निधाय पिष्टपचने तावदाज्येन भर्जयेत् ॥१७५॥

विषतिन्दुकवीजमित्यादि। रेचक जयपालः ॥१६४-१६५॥

तत्रादौ विषतिन्दुककीर्तन कुचेलकमित्यादि—भसितप्रभा भस्मसदृश· प्रभायुक्ता। स्पष्टाः शिरा. यत्र तादृशम्। पत्रवृन्तकञ्च ह्रस्वकम् इत्यन्वयः। हरिदाभ ईषद्धरिद्वर्णम्। मज्जा फलमज्जा ॥१६६-१७२॥

प्रथमोऽस्य शोधनप्रकारः—गृहवारिणि काञ्जिके ॥१७३-१७४॥

द्वितीयः प्रकारः—पिष्टपचन 'तवा' इति हिन्दीभाषायाम् । कपिशप्रभा

याचद् बहिस्त्वचा किञ्चिज्जायते कांपेशप्रभा ।
कुचेलमेवं त्वरितं शुद्धिमायात्यनुत्तमाम् ॥१७६॥

तृतीयः शोधनप्रकारः ।

विषतिन्दुकबीजानि पोट्टल्यां विन्यसेद्भिषक् ।
स्वेदयेद् गव्यपयसा दोलिकायन्त्रमार्गतः ॥१७७॥
एवं यामैकमात्रेण शुद्धिमायान्त्यनुत्तमाम् ।
शोधितं तिन्दुकं त्वेवं वीतशङ्कः प्रयोजयेत् ॥१७८॥

विषतिन्दुकस्य गुणाः ।

विषतिन्दुकमाग्नेयं कटुकं दीपनं परम् ।
उग्रवीर्यं तीक्ष्णसारं कामोद्दीपनमुत्तमम् ॥१७९॥
अम्लपित्तप्रशमनं मूत्रलं क्षुत्प्रदीपनम् ।
पाचनं श्लेष्महरणं बलसञ्जननं परम् ॥१८०॥
मेदोहरं रुचिकरं सारमेयाविषापहम् ।
ग्रहणीहरमत्यन्तं तथोन्मादविनाशनम् ॥१८१॥
आध्मानापहमत्यन्तं तथाजीर्णविनाशनम् ।
आमाशयोत्थशूलघ्नं हृद्दौर्बल्यहरं परम् ॥१८२॥
श्वासप्रशमनञ्चैव तथा फुप्फुसशोथनुत् ।
अर्धाङ्गार्दितवातघ्नं नाडीबलविवर्धनम् ॥१८३॥
दुष्टनागाशनोद्भूतं वा मदात्ययसम्भवम् ।
अर्धाङ्गवातं हन्तीह भृशमङ्गविशेषगम् ॥१८४॥
मांसपेशीशोषयुते नवे कठिनपेशिके ।
पक्षाघाते न युञ्जीत स्पर्शानुभववर्जिते ॥१८५॥
मदात्ययात्ययकरं नाडीशूलनिबर्हणम् ।
अनिद्रापहमत्यन्तं गुदजामयनाशनम् ॥१८६॥

किञ्चिद्रक्तपीता ॥ उक्तञ्चान्यत्र—"किञ्चिदाज्येन संभृष्टो विषमुष्टिर्विशुध्यति" इति ॥१७५-१७८॥

विषतिन्दुकगुणाः—आग्नेय उष्णवीर्यम्, सारमेयः कुक्कुरः तस्य विषं हरतीति तथा । दुष्टमशुद्धं यत् नागं सीसकं तस्य अशनात् भक्षणात् उद्भूतं जातं अर्धाङ्गवातमित्यन्वयः । मांसपेशीशोषादिलक्षणयुते पक्षाघातेऽस्य प्रयोगो निषिद्धः । मदात्ययस्य अत्ययो विनाशस्तत्करम् । गुदजामयः अर्शांसि । मानसश्रम-जातो योऽवसादः खेदः तस्य नाशनम् । अर्धावभेदकः शिरोरोगविशेषः । श्रम-निःश्वासरोधाज्जातः कासः श्रमकासः तस्य निबर्हणम् । अथवा श्रमं कासं च नाशयतीति बोध्यम् । निम्ननिर्दिष्टाः अनुपदमेव वक्ष्यमाणाः । अत्यल्पा मात्रा

राजयक्ष्मसमुद्भूतनिशास्वेदनिवारणम् ।
मानसश्रमसम्भूतावसादविनिषूदनम् ॥१८७॥
अनिद्राजनिताजीर्णनाशनं दुग्धपाचनम् ।
अर्द्धावभेदकहरं श्रमकासनिबर्हणम् ॥१८८॥
निम्ननिर्दिष्टरोगाणां तत्तल्लक्षणसम्भवे ।
कारस्करं प्रयुञ्जीत भृशमत्यल्पमात्रया ॥१८९॥
निर्जनाप्रियतां चैव परां क्रोधालुतां तथा ।
विनिहन्ति हि रुग्णानां तत्तद्धेतुविशेषजाम् ॥१९०॥
अम्लतिक्तरसोन्मिश्रानुद्गारान् नाशयत्यलम् ।
श्रमोत्थां चित्तदौर्बल्यसमेतां मलबद्धताम् ॥१९१॥
अत्यम्लवदनास्वादं नवं वा चिरकालजम् ।
आध्मानं नाशयत्याशु भोजनोत्तरकालिकम् ॥१९२॥
चित्तावसादसंयुक्तं दारुणाध्मानसंगतम् ।
अम्लपित्तसमुद्भूतमन्त्रशूलं व्यपोहति ॥१९३॥
मलत्यागसमीहाढ्यां मुहुर्वेदनयान्विताम् ।
कष्टप्रवृत्ताल्पमलां नाशयेन्मलबद्धताम् ॥१९४॥
अत्यल्पमूत्रस्रवणं सदाहं वेदनान्वितम् ।
मूत्रेच्छापरिगतं मूत्ररोधं निवारयेत् ॥१९५॥
रक्तातिस्रावसंयुक्तं दीर्घकालानुबन्धिनम् ।
रजःस्रावं निहन्त्याशु समयात्पौर्वकालिकम् ॥१९६॥
सवेदनां तथा पीतदुर्गन्धास्रावसंयुताम् ।
विनिहन्ति विशेषेण श्वेतप्रदरजां रुजम् ॥१९७॥
रात्रौ निद्रायमाणस्य विवृद्धां पृष्ठदेशजाम् ।
वेदनां शमयत्याशु तथैव कटिवेदनाम् ॥१९८॥
दिने तु स्रवदास्रावं निशि स्रावविवर्जितम् ।
व्यपोहति विशेषेण प्रतिश्यायं नवोत्थितम् ॥१९९॥
भक्षणोत्तरजं श्वासं हन्ति पित्तसमुत्थितम् ।
अनारतं जायमानं वर्त्मस्पन्दनकं तथा ॥२००॥

गुञ्जापादांशदप्यत्यन्तं हीना। तत्र गुञ्जायाः षोडशांशश्चतुर्विंशत्तमो वांशः योज्यः। तेषु तेषु रोगेषु तेषु तेष्वभिहितेषु लक्षणेषु सत्सु प्रयुक्तोऽनया मात्रया सिद्धिकरः कारस्करः। समयात्पौर्वकालिकमिति रजःस्रावसमयात् मासात् पूर्वकाले भवम्।

रात्रिजागरणोद्भूतं तथा बह्वशनोत्थितम् ।
विवर्द्धमानं प्रत्यूषे सशब्दं तृष्णयान्वितम् ॥२०१॥
आलोहितं घनञ्चैव कामं सलिलसन्निभम् ।
समुत्बणं विशेषेण विनिहन्त्युदरामयम् ॥२०२॥
मुहुर्मुहुर्मलत्यागवाञ्छयातिनिपीडितम् ।
कष्टप्रवृत्ताल्पमलं विनिहन्ति गुदामयम् ॥२०३॥

विषतिन्दुकस्य मात्रा ।

आरभ्य गुञ्जापादांशाद् गुञ्जकप्रमितं परम् ।
मात्राविद्धिनियुञ्जीतं विमलं विषतिन्दुकम् ॥२०४॥

विषतिन्दुकस्य आमयिकः प्रयोगः ।

नवजीवनरसः ।

कुचेलकं सुविमलं तोलकद्वयसंमितम् ।
लोहं द्वितोलकमितं रससिन्दूरकं तथा ॥२०५॥
पलार्द्धं त्र्यूषणञ्चैव समादायार्द्रकद्रवैः ।
विमर्द्य कारयेद्वैद्यो वटिका रक्तिकोन्मिताः ॥२०६॥
रसोऽयं तु समाख्यातो नवजीवनसंज्ञकः ।
नवजीवनमेतद्धि ददाति नवजीवनम् ॥२०७॥
दीपनं पाचनञ्चैव बलसञ्जननं परम् ।
नाडीबलप्रजननं रतिशक्तिविवर्द्धनम् ॥२०८॥
अन्त्रशूलहरं कामं त्वाध्मानविनिवारणम् ।
मलबन्धहरं चैव तथातीसारनाशनम् ॥२०९॥
अर्द्धावभेदकहरं रक्तसञ्जननं परम् ।
शूलापहं मानसिकश्रमोद्भूतावसादनुत् ॥२१०॥

अग्नितुण्डीरसः ।

अमृतं तोलकमितं जीरकञ्च फलत्रिकम् ।
रसेश्वरं सुविमलं बलिञ्चैव विडङ्गकम् ॥२११॥
सौवर्चलं च सामुद्रं सौभाग्यं सैन्धवं तथा ।
सर्जिक्षारं यवक्षारं चित्रकं त्वजमोदिकाम् ॥२१२॥

अनारतं निरन्तरम् । उदरामयोऽतीसारः ॥१७९-२०४॥

नवजीवनरसः—रससिन्दूरकं तथेति लोहसमानं द्वितोलकमित्यर्थः । नाड्यः ज्ञानवहाः चेष्टावहाश्च तेषां बलं शक्तिं जनयतीति तथा ॥२०५-२१०॥

कुचेलकं सुविमलं सर्वेषां समभागिकम्।
समादाय भिषग्वर्यो जम्बीराम्लेन मर्दयेत् ॥२१३॥
निर्मापयेत्ततो यत्नाद्वटिका रक्तिकोन्मिताः।
नामतस्तु समाख्यातास्त्वग्नितुण्डीरसाख्यया ॥२१४॥
अग्नितुण्डीरसो ह्येषः दीपनः पाचनः परम्।
अग्निमान्द्यप्रशमनो नाडीबलविवर्द्धनः ॥२१५॥
गुदामयप्रशमनस्तथातीसारनाशनः।
कटिपृष्ठसमुद्भूतां नाशयेद्वातवेदनाम् ॥२१६॥

लक्ष्मीविलासो रसः।

कुचेलकं सुविमलं रसतोलकसम्मितम्।
सुपुष्पितं च सौभाग्यं मरिचं चैव तन्मितम् ॥२१७॥
लोहं द्विकर्षप्रमितं गन्धेशौ द्व्येकभागिकौ।
सर्वं सम्मेल्य यत्नेन भावयेदार्द्रकद्रवैः ॥२१८॥
वरीभूधात्रिकाभृङ्गस्वरसेन च भावयेत्।
निर्मापयेत्प्रयत्नेन वटिका रक्तिकोन्मिताः ॥२१९॥
समाख्यातो रसो लक्ष्मीविलास इति नामतः।
तारुण्यलक्ष्मीमतुलां प्रददाति रसो ह्ययम् ॥२२०॥
रोगदुर्बलदेहानां कृशानां क्षीणरेतसाम्।
देहपुष्टिकरः कामं तथा वीर्यविवर्द्धनः ॥२२१॥
बलवर्णकरो वृष्यो वह्निमान्द्यविनाशनः।
रक्तसञ्जननश्चैव तथा लावण्यवर्द्धनः ॥२२२॥

शूलनिर्मूलनरसः।

त्र्यूषणं गन्धपाषाणं मरिचं शङ्खभस्मकम्।
सैन्धवं रससिन्दूरं जीरकं चाम्लवेतसम् ॥२२३॥
सर्वार्द्धभागिकञ्चैव विमलं विषतिन्दुकम्।
आदाय भिषजां वर्यः शृङ्गवेरस्य वारिणा ॥२२४॥
विभाव्य कारयेद्यत्नाद्वटिका रक्तिकोन्मिताः।
रसोऽयं तु समाख्यातः शूलनिर्मूलनाभिधः ॥२२५॥

अग्नितुण्डीरसः—अमृत वत्सनाभ। रसेश्वरं पारदः। बलिर्गन्धक.॥२११-२१६॥
लक्ष्मीविलास.—रसतोलकं षट् तोलकम्। लौह ४ तो०, गन्धकः २ तो०, पारदः १ तो०। भूधात्रिका ताभलकी ॥२१७-२२०॥
शूलनिर्मूलनरसे—गन्धपाषाणं गन्धकम्। दृष्टप्रत्ययः निश्चितमनुभूत

दीपनः पाचनश्चायं वह्निमान्द्यप्रणाशनः ।
अतीसारग्रहणिकाविषूचीविनिवारणः ॥२२६॥
बलवर्णकरो वृष्यो गुल्मामयनिषूदनः ।
रसोऽयं शूलदलने बहुशो दृष्टप्रत्ययः ॥२२७॥

सुप्तिवातारिरसः ।

कर्षैकप्रमितं शुद्धं विषतिन्दुकबीजकम् ।
समा कज्जलिका चैव समगन्धेशसाधिता ॥२२८॥
त्र्यूषणं च पलार्द्धं स्यान्निर्गुण्डीद्रवयोगतः ।
ब्रह्मबीजद्रवेणापि भावयेत्सप्तवारकम् ॥२२९॥
निर्मापयेत्प्रयत्नेन वटी गुञ्जद्वयोन्मिताः ।
रसोऽयं सुप्तिवातारिः सुप्तिवातनिषूदनः ॥२३०॥

सारमेयविषापहो योगः ।

विषतिन्दुकबीजं तु प्रत्यहं परिशीलितम् ।
निहन्ति कुक्कुरविषं खलु मासैकमात्रतः ॥२३१॥

विषतिन्दुकस्य बाह्यप्रयोगः ।

विषतिन्दुकतैलम् ।

विषतिन्दुकबीजं तु तोलकैकामितं शुभम् ।
तिलतैले तु विमले तोलकाष्टकसंमिते ॥२३२॥
मन्दाग्निना पचेत्तावद्यावदायाति रक्तताम् ।
एतत्सञ्जायते रम्यं विषतिन्दुकतैलकम् ॥२३३॥
विषतिन्दुकतैलन्तु भृशमभ्यङ्गयोजितम् ।
पक्षाघातादिकान् रोगान् विनिहन्त्यविकल्पतः ॥२३४॥

इत्यर्थः ॥ २२३-२२७ ॥

सुप्तिवातारिः—समगन्धकपारदाभ्यां साधिता कज्जली च विषतिन्दुकबीजसमाना ग्राह्या । ब्रह्मबीजद्रवेण पलाशबीजकषायेण । सुप्तिवातः वातकृतः स्वाप इवाङ्गानाम् ॥२२८-२३०॥

सारमेयविषापहो योगः—मासमात्रं नियमेन सेवितं कुचेलकं कुक्कुरविषं नाशयति ॥ तन्त्रान्तरदर्शनात् क्रमवृद्धमात्रया सेवनीयम् । उक्तं हि—"कारस्करफलं सेव्यं क्रमवृद्धं दिने दिने । सारमेयविषं हन्ति मासेन नहि संशयः ।" इति ॥२३१॥

विषतिन्दुकतैलम् निगदव्याख्यातम् ॥२३२-२३४॥

### अथ अहिफेनस्य नामानि ।

अहिफेनमफेनञ्च निफेनमहिफेनकम् ।
अफूकं फणिफेनञ्च नागफेनञ्च तन्मतम् ॥२३५॥

अहिफेनस्य परिचयः ।

खस्तिलस्य फलानां तु चीरणात्खलु दुग्धवत् ।
निर्यासो योऽभिनिर्याति स एवाफेनासंज्ञितः ॥२३६॥

खस्तिलनिर्यासस्य निर्मलीकरणम् ।

खस्तिलस्य तु निर्यासं सलिले तु सुनिर्मले ।
सन्द्राव्य खलु यत्नेन वस्त्रपूतन्तु कारयेत् ॥२३७॥
निर्मलीकृतमेतत्तु खस्तिलद्रवतोयकम् ।
गव्यदुग्धसमायुक्तं पचेन्मन्दाग्नियोगतः ॥२३८॥
पाककालं सुविज्ञाय पाकविद्भिषजां वरः ।
समाहरेत्प्रयत्नेन त्वफेनं निर्मलीकृतम् ॥२३९॥

खस्तिलनिर्यासनिर्मलीकरणस्य प्रयोजनम् ।

विक्रीयते विपण्यां यत्त्वफेनं खलु साम्प्रतम् ।
द्रव्यान्ययोगाद्धूर्तादिभावितत्वाच्च गर्हितम् ॥२४०॥
खस्तिलस्य तु निर्यासमादायातो भिषग्वरः ।
स्वयं सुनिर्मलीकृत्य शोधयेच्च प्रयोजयेत् ॥२४१॥

अथ अहिफेनस्योपक्रम—तत्र अहिफेननामानि शास्त्रव्यवहृतानि ॥२३५॥

अहिफेनपरिचय—खस्तिलस्येत्यादिना। यद्यपि केचित्—"समुद्रे चैव जायन्ते विषमत्स्याश्चतुर्विधाः। तेभ्यः फेनं समुत्पन्नमाहिफेनं चतुर्विधम् ॥ केचिद्वदन्ति सर्पाणां फेनं स्यादहिफेनकम्। धारणं श्वेतवर्णञ्च रक्तवर्णञ्च जारकम् ॥ सारणं पीतवर्णञ्च कृष्णवर्णञ्च मारणम्। विषवद्युत्तमं फेनं युज्यते रसकर्मणि" इत्याहुः। तदनर्गलं वचनमेव तादृशपदार्थानुपलम्भात्। निघण्टुवर्णितगुणयोगाच्च खाखसजातो निर्यास एव अहिफेन सर्वसम्मतमिति निर्विवादम्। तदेतदाह खस्तिलस्य तदाख्यक्षुपविशेषस्य फलानां क्षुपलग्नानां हरितानामेव चीरणात् लेखनादिति यावत्, "चीरं रेखाभेदो लेखनभेद" इति मेदिनी। चीरणं च लेखनयन्त्रविशेषेण सम्पाद्यते। लेखनयन्त्रं हि पञ्चषैस्तीक्ष्णाग्रैर्लौहफलकैरेकत्र ईषदन्तरेण संयोजितैः सम्पन्नं भवति। सायं खस्तिलफलानि लिख्यन्ते प्रातश्च निर्यासः शुष्कः विलिख्यैकत्रीक्रियते। दुग्धवत् दुग्धसदृशो यो निर्यासः अभिनिर्याति बहिःस्रवति तस्यैव नाम अहिफेनमिति ॥२३६॥

खस्तिलनिर्यासनिर्मलीकरणप्रकारो निगदव्याख्यातः। अन्यद्रव्ययोगाद्धेतोः धत्तूरादिरसैर्भावितत्वाच्च विपणिषु उपलभ्यमानं नाभिलषितसिद्धिकरमिति अपक्वमेव तदादाय तत्साध्यव्याधिषु प्रयोगार्थं निर्मलीकृत्य शोधयितव्यमिति भावः ॥२३७-२४१॥

अहिफेनस्य शोधनम्।

निर्मलं त्वहिफेनं तु शृङ्गवेरस्य वारिणा ।
विभावितं सप्तवारं शुद्धिमायात्यनुत्तमाम् ॥२४२॥

अहिफेनस्य गुणाः।

अहिफेनं सुतिक्तं तु निद्राजनकमुत्तमम् ।
ग्राहि चैव विशेषेण वेदनाविनिवारणम् ॥२४३॥
सन्निपातप्रशमनं तथा वमिनिषूदनम् ।
पुरातनं नवं वापि विनिहन्त्यतिसारकम् ॥२४४॥
निहन्त्यामाशयोद्भूतक्षतमांसार्बुदव्यथाम् ।
मद्यपानोत्थशोथस्य व्यथाञ्चामाशयाश्रयाम् ॥२४५॥
अपानवायोर्भुक्तान्नबहिर्निःसारणात्मिकाम् ।
क्रियां विवृद्धां चपलां ह्रासयत्यविकल्पतः ॥२४६॥
प्रथमायामवस्थायामतीसारैकलक्षणाम् ।
विनिहन्ति विशेषेण विषूचीमतिदारुणाम् ॥२४७॥
सातिसारं सप्रलापं पर्याकुलमनिद्रया ।
निपातयेत्सन्निपातमान्त्रिकज्वरसंज्ञकम् ॥२४८॥
प्रवाहिकाप्रशमनं त्वन्त्रशूलविनाशनम् ।
मदात्ययहरं चैव तथोन्मादनिवर्हणम् ॥२४९॥
रजःशूलप्रशमनमस्थिभंगव्यथापहम् ।
नवामवातशमनं हितमस्थिच्युतौ तथा ॥२५०॥
शुष्ककासप्रशमनं गर्भस्रावनिषूदनम् ।
राजयक्ष्मसमुद्भूतनिशास्वेदनिवारणम् ॥२५१॥
हृद्धमन्योर्गतेः कामं मन्दीकरणकारणात् ।
अन्त्रोत्थं फुप्फुसोत्थं वा रक्तस्रावं व्यपोहति ॥२५२॥
वाताधिक्याद् बृहद्वेगं कफनिर्गमवर्जितम् ।
कण्ठकण्डूसमुत्थं वा कासं नाशयति द्रुतम् ॥२५३॥
नाडीनां धमनीनां च यस्मात्तु हृदयस्य च ।
नैसर्गिकीं प्रवृद्धां वा गतिं मन्दयति द्रुतम् ॥२५४॥

शोधनप्रकारः—अहिफेनञ्च आर्द्रकजलेन सप्तधा भावितं शुध्यति इति । "अहिफेनं शृङ्गवेररसैर्भाव्यं त्रिसप्तधा । शुध्यत्युक्तेषु योगेषु योजयेत् तद्विधानतः" इति प्राञ्चः ॥२४२॥

अथाहिफेनस्य गुणाः—अहिफेनं सुतिक्तं अतितिक्तरसम्, उत्तमं निद्राजनकम्, विशेषेण ग्राहि, वेदना पीडा व्यथेति यावत् तस्या विनिवारणम्,

तस्माद्धृदयरोगेषु रसतन्त्रविचक्षणः ।
अहिफेनं प्रयुञ्जीत सावधानतया सदा ॥२५५॥

अहिफेनस्य निषेधः ।

न बालेषु न वृद्धेषु मधुमेहप्रपीडिते ।
शीतपादकरायाञ्च विपूच्यां खलु नैव च ॥२५६॥
न श्लैष्मिके तथा कासे प्रचुरश्लेष्मनिर्गमे ।
अहिफेनं वृक्कशोथे प्रयुञ्जीत न कर्हिचित् ॥२५७॥

बाह्यप्रयोगे अहिफेनस्य गुणाः ।

अहिफेनं विशेषेण खलु बाह्यप्रयोगतः ।
फुफ्फुसच्छदशोथघ्नं त्वन्त्रावरणशोथनुत् ॥२५८॥
विविधोत्थानसम्भूतां विविधस्थानसंश्रयाम् ।
तथा विविधसंस्थानां वेदनां विनिहन्त्यलम् ॥२५९॥
अभिष्यन्दप्रशमनं कर्णशूलनिबर्हणम् ।
कृमिदन्तोत्थशूलघ्नं त्वामवातापहं तथा ॥२६०॥
गुदामयहरञ्चैव पायुस्थविदरापहम् ।
व्रणपीडाप्रशमनं नाडीनामवसादनम् ॥२६१॥

अहिफेनस्य मात्रा ।

आरभ्य गुञ्जापादांशाद् गुञ्जैकप्रमितं शुभम् ।
अहिफेनं प्रयुञ्जीत बलकालाद्यपेक्षया ॥२६२॥

अहिफेनस्य आमयिकः प्रयोगः ।

पिण्डखर्जूरसंयुक्तं फणिफेनं तु शीलितम् ।
नाशयत्यचिरादेव गर्भस्रावमसंशयम् ॥२६३॥

नवः नवीनो य आमवातः तस्य शमनम् ॥२४२-२५५॥

अहिफेनसेवननिषेध. न बालेष्विति । हृदयगत्यवसादकत्वादिगुणयोगात् विषप्रभावत्वाच्च बालादिष्वस्य सेवननिषेधः । श्लैष्मिककासे तु शोषकत्वात् । वृक्कशोथे च मूत्रग्राहित्वात् इत्यवधेयम् ॥२५६-२५७॥

बहिःप्रयोगे अहिफेनगुणाः—फुफ्फुसच्छदः फुफ्फुसावरणी श्लैष्मिकी कला, तत्र जात शोथ हन्ति, तथा आन्त्राणामावरककलाशोथञ्च हरतीति । विविधं नानाप्रकार यत् उत्थानं निदानं तस्माज्जाताम्, शरीरे विविधस्थानेषु अङ्गप्रत्यङ्गेषु समाश्रिताम्, विविधसंस्थानां बहुविधरूपाम्, वेदनां पीडा व्यथामिति यावत् । अभिष्यन्दः अक्षिरोगविशेषः । पायुस्थो विदरश्चीरः तस्य विनाशकम् । नाडीनां अवसादनं दौर्बल्यकरम् ॥२५८-२६१॥

मात्रास्य निगदव्याख्याता ॥२६२॥

अहिफेनस्य रोगयोग्यः प्रयोगः—सुगमः ॥२६३॥

अर्कमूलत्वचाचूर्णसंयुक्तं त्वहिफेनकम् ।
शीलितं त्वचिरादेव विनिहन्ति प्रवाहिकाम् ॥२६४॥
एलालाक्षारजोयुक्तं फणिफेनं तु शीलितम् ।
रक्तस्रावं निहन्त्याशु फुप्फुसोत्थं सुदारुणम् ॥२६५॥
रसाञ्जनसमायुक्तं शिलाघृष्टं त्वफेनकम् ।
योजितं विनिहन्त्याशु त्वभिष्यन्दभवां रुजम् ॥२६६॥

वेदनान्तकरसः ।

अहिफेनं सुविमलं माषकत्रयसंमितम् ।
घनसारं समं तुल्यां पारसीकयवानिकाम् ॥२६७॥
रससिन्दूरकञ्चैव रसमाषकसंमितम् ।
आदाय पेषयेद्यत्नाद् विजयाद्रवयोगतः ॥२६८॥
निर्मापयेत्तु वटिका रक्तिकाद्वयसंमिताः ।
रसोऽयं तु समाख्यातो वेदनान्तकसंज्ञकः ॥२६९॥
रसोऽयमम्भसा युक्तो विनिहन्ति विशेषतः ।
विविधोत्थानसंस्थानां वेदनां विविधाश्रयाम् ॥२७०॥

निद्रोदयरसः ।

अहिफेनं सुविमलं रसमाषकसंमितम् ।
तन्मितां च तुगाक्षीरीं रससिन्दूरकं तथा ॥२७१॥
धात्रीचूर्णं तोलकैकं समादाय भिषग्वरः ।
विभावयेत्प्रयत्नेन विजयावारिणा त्रिधा ॥२७२॥
निर्मापयेत्तु वटिका रक्तिद्वितयसंमिताः ।
रसोऽयं तु समाख्यातो निद्रोदयसमाह्वयः ॥२७३॥
तत्तद्गदैर्वेदनयार्दितानां पुंसां सुखस्वापकरोऽतिवेलम् ।
यथार्थनामा समुदीरितोऽयं रसस्तु निद्रोदयनामधेयः ॥२७४॥

सिन्दूरभूषणरसः ।

अहिफेनं सुविमलं रसमाषकसंमितम् ।
तत्समं सुमृतं स्वर्णं घनसारञ्च तन्मितम् ॥२७५॥
रुचिरं रससिन्दूरं तोलकद्वयसंमितम् ।
एलाबीजं तुगाक्षीरीं पृथक् तोलकसंमिताम् ॥२७६॥

वेदनान्तकरसः—सर्वविधव्यथानाशाय प्रशस्ततमः । घनसारं कर्पूरम् । रससिन्दूरं रसममाषकं षण्माषकम् ॥२६७-२७०॥

समादाय ततो मुस्तक्काथेन परिपेष्य तु ।
निर्मापयेत्तु वटिका रक्तिकाद्वयसंमिताः ॥२७७॥
रसोऽयं तु समाख्यातो नाम्ना सिन्दूरभूषणः ।
महौषधमिदं ख्यातमतीसारप्रशुत्तये ॥२७८॥

हर्षोदया वटी ।

फणिफेनं सुविमलं तोलकैकमितं शुभम् ।
कस्तूरिकाञ्च कर्पूरं पृथक् माषत्रयोन्मितम् ॥२७९॥
मरिचं रससिन्दूरं पृथक् तोलकसंमितम् ।
जातीफलं जातिपत्रीं कुङ्कुमं शुद्धमिङ्गुलम् ॥२८०॥
समाहरेत्पृथग्वैद्यो रसमाषकसंमितम् ।
विजयास्वरसेनेह त्रिवारं खलु भावयेत् ॥२८१॥
कारयेद्वटिका यत्नाद् गुञ्जाद्वितयसंमिताः ।
वटिकेयं समाख्याता बुधैर्हर्षोदयाभिधा ॥२८२॥
बलवर्णाग्निजननी प्रमदामदमर्दिनी ।
वीर्यसंस्तम्भनी ह्येषा विशेषेण प्रकीर्तिता ॥२८३॥
ताम्बूलवीटिकोपेता वटीयं परिशीलिता ।
मासमात्रप्रयोगेण ददाति विपुलं बलम् ॥२८४॥
पृथुसन्तानिकोपेतं प्रतप्तं माहिषं पयः
तथा माषान्नपिष्टानि सेवयेत्प्रत्यहं पुमान् ॥२८५॥
स्मरस्मयस्मेरविलोचनाभिर्विलासिनीभिः परितर्जितानाम् ।
यतः प्रहर्षं प्रकरोति यूनां हर्षोदया सार्थकनामिकातः ॥२८६॥

अहिफेनासवः ।

अहिफेनं सुविमलं तोलकत्रयसंमितम् ।
पञ्चाशत्तोलकमितां मृतसञ्जीवनीं सुराम् ॥२८७॥
समादाय भिषग्वर्यः काचकुप्यां तु विन्यसेत् ।
ततः काचपिधानेन रोधयेत् कूपिकामुखम् ॥२८८॥
ततः कूपीं सुनिभृते स्थापयेत् सप्तवासरम् ।
अहिफेनासवो नाम्ना समाख्यातो भिषग्वरैः ॥२८९॥

निद्रोदयसिन्दूरभूषणरसौ निगदव्याख्यातौ ॥२७१-२७८॥
हर्षोदया वटी—जातीफलादिहिङ्गुलान्तानां पृथक् षण्माषकाः । पृथुसन्तानिका स्थूलं क्षीरसरम् ॥२७९-२८६॥
अहिफेनासवः—मृतसञ्जीवनी सुरा तन्त्रान्तरेषु ख्यातनिर्माणा । मात्रा

अस्य गुणाः ।

विविधोत्थानसम्भूतातीसारविनिषूदनः ।
कर्णशूलप्रशमनो दन्तशूलनिबर्हणः ॥२९०॥
अस्थिभग्नादिसम्भूतां तथास्थिच्युतिसम्भवाम् ।
वेदनां बहुहेतूत्थां विनिहन्त्यतिसत्वरम् ॥२९१॥
विविधोत्थानजातानां वेदनानां निवृत्तये ।
महौषधमिदं ख्यातं रसतन्त्रविचक्षणैः ॥२९२॥

अस्य मात्रा ।

आरभ्य शरबिन्दुभ्यस्तिथिबिन्दुमितं परम् ।
अहिफेनासवं युञ्ज्याद् बलकालाद्यपेक्षया ॥२९३॥

अहिफेनासवस्य आमयिकः प्रयोगः ।

अहिफेनासवोऽयं तु मात्रया परिशीलितः ।
विविधोत्थानसम्भूतं नूतनं वा पुरातनम् ॥२९४॥
सुदारुणमतीसारमतीसारैकलक्षणाम् ।
विषूचीं च निहन्त्याशु यथा सूर्यस्तमस्ततिम् ॥२९५॥
बिन्दुक्षेपकयन्त्रेण निक्षिप्तः कर्णयोरयम् ।
अत्यल्पमात्रयैवेह कर्णशूलं व्यपोहति ॥२९६॥
अहिफेनासवे सिक्तं तूलं तु कृमिदन्तके ।
न्यस्तं नातिचिरादेव वेदनां हन्ति तद्भवाम् ॥२९७॥

मङ्गलोदया वटी ।

फणिफेनं सुविमलं माषकैकमितं शुभम् ।
उत्तमं घनसारं च सप्तमाषकसंमितम् ॥२९८॥
सम्पेष्य वारिणा यत्नाद्वटिका रक्तिकोन्मिताः ।
कारयेद्भिषजां वर्यो रसतन्त्रविचक्षणः ॥२९९॥
नामतस्तु समाख्याता वटिका मङ्गलोदया ।
प्रलापादिप्रशुत्त्यर्थं मता हिततमा परम् ॥३००॥

प्रमाणं चास्य ५ बिन्दुभ्यः १५ बिन्दुपर्यन्तम् ॥२८७-२९३॥

अस्य च रोगयोग्यः प्रयोगः—अतीसारैकलक्षणामिति विषूचीविशेषणं प्रयोगयोग्यतानिर्देशार्थम् ॥ निगदव्याख्यातमन्यत् ॥२९४-२९७॥

मङ्गलोदया वटी—अहिफेनं शुद्धं १ मा०, घनसारं कर्पूरम् ७ मा०, स्पष्टमन्यत् ॥२९८-३००॥

वेदनान्तकमलहर ।

सिक्थतैलं सुविमलं ग्रहतोलकसंमितम् ।
फणिफेनञ्च विमलं ग्रहमाषकसंमितम् ॥२०१॥
फणिफेनमितञ्चैव खलु हेरम्बभूषणम् ।
समादाय भिषग्वर्यः खल्वे सम्मेलयेत्ततः ॥२०२॥
काचकुप्यां निधायाथ पिधानेन निरोधयेत् ।
मतो मलहरोऽयं तु वेदनान्तकसंज्ञकः ॥२०३॥
वेदनां शमयत्याशु गुदाङ्कुरसमाश्रयाम् ।
पायुस्थविदरोद्भूतां वेदनाञ्चातिदारुणाम् ॥२०४॥
गुदाङ्कुरप्रशमनः पायुस्थविदरान्तकः ।
मतो मलहरोऽयं तु वेदनान्तकसंज्ञकः ॥२०५॥

## अथ जयपालस्य नामानि

जयपालश्च जेपालो रेचकः सारकस्तथा ।
विभेदनो मलद्रावी स एव परिकीर्तितः ॥२०६॥

जयपालस्य परिचयः ।

नात्युच्छ्रितो नातिह्रस्वो दन्तीजातीयकस्तरुः ।
अधुना तु विशेषेण देशे पञ्चनदाह्वये ॥२०७॥
तथैव सिंहलद्वीपे द्वीपेष्वन्येषु जायते ।
बीजं तस्य भिषग्वर्यैर्जयपाल इति स्मृतः ॥२०८॥
दन्तीबीजात् क्षुद्रतरं बीजमस्य तु यद्यपि ।
परं तीव्रतरा शक्तिर्दृश्यते मलभेदने ॥२०९॥

वेदनान्तकमलहरः—सिक्थतैलं पूर्वोक्तपरिभाषं नवतोलकम्, शुद्धमहिफेनञ्च ६ मा०, हेरम्बभूषणं सिन्दूरम् ६ मा० । विदरश्चीरः ॥२०१-२०५॥

अथ क्रमप्राप्तो जयपालः—परिकीर्तित इति एभिर्नामभिस्तन्त्रे व्यवहृतः ॥२०६॥

जयपालपरिचय "जयपालो दन्तीबीजम्" इति भावप्रकाशीयनिघण्टुव्यवहारभ्रान्तिनिरासाय । तदेतदाह "दन्तीजातीयकस्तरु" इति । अपि च "दन्तीबीजात् क्षुद्रतर बीजमस्य" इत्यपि भेदकं लक्षणमस्य दन्तीबीजात् ॥ केचित्तु बृहद्दन्तीबीजं जयपालमामनन्तुः । वस्तुतस्तु जयपालो दन्तीबीजात् भिन्न एवेति जयपालनाम्नैव प्रसिद्ध्यति वर्तमाने जगति ॥२०७-२०९॥

जयपालस्य प्रथमः शोधनप्रकारः।

जयपालस्य बीजानि नवानि तु समाहरेत्।
बाह्यत्वचमपाकृत्य द्विधा खलु विभेदयेत् ॥३१०॥
हरिद्वर्णां नातिदीर्घां रसनां तु परित्यजेत्।
पोट्टल्यामथ विन्यस्य दोलायन्त्रे विधानतः ॥३११॥
गव्यदुग्धे प्रयत्नेन यामैकं स्वेदयेत्ततः।
एवं त्रिवारं सुस्विन्नो जयपालो विशुद्ध्यति ॥३१२॥

द्वितीयः शोधनप्रकारः।

त्वग्रसज्ञाविरहितं जयपालस्य बीजकम्।
वस्वंशटङ्कणोपेतं पोट्टल्यां रोधयेद् दृढम् ॥३१३॥
स्वेदयेद् दोलिकायन्त्रे द्वियामं गव्यदुग्धतः।
इत्थं स्विन्नस्तु जेपालः शुद्धिमायात्यनुत्तमाम् ॥३१४॥

तृतीयः शोधनप्रकारः।

जयपालं त्वग्रसज्ञारहितं पोट्टलीगतम्।
दोलायन्त्रे तु यामैकं स्वेदयेद् गव्यदुग्धतः ॥३१५॥
सम्पेष्य खल्वे नूलेषु खर्परेषु प्रलेपयेत्।
विज्ञाय विगतस्नेहं जयपालं समाहरेत् ॥३१६॥
न्यसेद्वा यत्नतो मध्ये मषीशोषकपत्रयोः।
एवं तु विगतस्नेहो रेचकः शुद्धिमाप्नुयात् ॥३१७॥

जयपालस्य गुणाः।

जयपालो मतस्तिक्तो विरेचनकरः परम्।
जलोदरप्रशमनो नवज्वरनिबर्हणः ॥३१८॥

अस्य प्रथमे शोधनप्रकारे—त्रिवारं स्वेदनविधानं स्नेहाधिक्यनिवृत्तये ॥३१०-३१२॥

द्वितीयः प्रकारः अष्टमांशटङ्कणाक्षेपयुक्तः। टङ्कणं हि रूक्षत्वात् स्नेहाधिक्यमपाकरोति। रसज्ञेति बीजदलमध्यस्थितः हरिद्वर्णोऽङ्कुरः जिह्वाकृतिमत्त्वात् तदर्थाभिधायकैः शब्दैरभिधीयते ॥३१३-३१४॥

तृतीयः प्रकारः—नूतनखर्परेषु लेपाद् विगतस्नेहम्। स्नेहापनयनञ्च विरेकातियोगदाहोत्क्लेशादिराहित्याय। मषीशोषकपत्रं "Blotting Paper" इत्याङ्ग्लभाषाप्रसिद्धं मषीशोषणायोपयुज्यमानं कागदम्। रेचकः जयपालः ॥३१५-३१७॥

कृमिहारी कुष्ठहरो वातश्लेष्मनिषूदनः ।
वान्तिकृत्पित्तजननो वृश्चिकादिविषप्रणुत् ॥३१९॥

जयपालस्य मात्रा ।

अष्टमांशाद्रक्तिकाया रक्तिकाचरणांशिकम् ।
जयपालं प्रयुञ्जीत भेषजैः सह योजितम् ॥३२०॥

जयपालस्य आमयिक प्रयोग ।

इच्छाभेदी रसः ।

टङ्कणं मरिचं सूतं गन्धकं विश्वभेपजम् ।
समाहरेद्भिषग्वर्यस्तोलकैकमितं पृथक् ॥३२१॥
विशुद्धं जयपालं च तोलकत्रयसंमितम् ।
समादाय सुसम्पेष्य सार्द्धगुञ्जैकसंमिताः ॥३२२॥
वटिकाः कारयेद्वैद्यो द्विगुञ्जप्रमितास्तथा ।
इच्छाभेदीरसोऽयं तु नामतः परिकीर्तितः ॥३२३॥
शीततोयेन वटिकां सार्द्धगुञ्जैकसंमिताम् ।
मृदुकोष्ठे नागरिके सितया विनियोजयेत् ॥३२४॥
क्रूरकोष्ठेषु शूरेषु ग्रामीणेषु तु कोविदः ।
प्रयुञ्जीत सितोपेतां वटीं गुञ्जद्वयोन्मिताम् ॥३२५॥
वटीं भुक्त्वा जलं शीतं यावद्वारं तु पीयते ।
तावद्वारं विरिच्यन्ते मनुजा नात्र संशयः ॥३२६॥
विरेचननिवृत्त्यर्थं काममुष्णोदकं पिबेत् ।
विरेकान्ते प्रयोक्तव्यं पथ्यं तक्रौदनं खलु ॥३२७॥
प्रशान्तरेचनः पुमान् प्रयत्नतस्तु यामकम् ।
पिबेन्न शीतलं जलं विरिच्यते पुनर्यतः ॥३२८॥

जलोदरारिरस ।

सुसूतं रविलोहञ्च पिप्पली रसगन्धकम् ।
मरिचं रजनीचूर्णं पृथक् तोलकसंमितम् ॥३२९॥

जयपालगुणाः—निगदव्याख्याताः ॥३१८-३१९॥

जयपालमात्रा—रक्तिकाया अष्टमांशात् चतुर्थांशपर्यन्तम् । जयपालो हि प्रायशो न केवलमुपयुज्यते दाहशूलादिव्यापत्तिकरत्वात् । अतस्तदुत्थविकारानुत्पत्त्यर्थं टङ्कणशुण्ठ्यादिभिर्भेषजैः सहोपयोज्यः अतएवोक्तं भैषजैः सह योजितमिति ॥३२०॥

इच्छाभेदीरसः—विश्वभेषजं शुण्ठी । नागरिके नगरनिवासिनि । यावद्वारं तु शीतं जल पीयते तावद्वार विरेकः प्रभावात् । कामं यथेष्टम् ॥३२१-३२८॥

नवं विशुद्धं जैपालं युगतोलकसंमितम् ।
आदाय वारत्रितयं त्रिवृत्क्वाथेन भावयेत् ॥३३०॥
निर्मापयेत्प्रयत्नेन वटिका रक्तिकोन्मिताः ।
जलोदरारिर्नाम्नायं रसः ख्यातो भिषग्वरैः ॥३३१॥
रसोऽयं रेचनकरो जलोदरहरस्तथा ।
विरेकस्तम्भनार्थञ्च हितं दध्योदनं मतम् ॥३३२॥

ज्वरारिरसः ।

हिङ्गुलं पिप्पली शुण्ठी मरिचं विश्वभेषजम् ।
सौभाग्यममृतं धात्री पृथक् तोलकसंमितम् ॥३३३॥
जयपालं पलमितं नवं सुविमलीकृतम् ।
सम्पेष्यार्द्रकतोयेन वटीं गुञ्जैकसंमिताम् ॥३३४॥
निर्मापयेत्प्रयत्नेन, ज्वरारिर्नामतो मतः ।
समाख्यातो विशेषेण नवज्वरनिबर्हणः ॥३३५॥

अञ्जनभैरवरसः ।

सूतगन्धकणाटङ्कं पृथगेकैकभागिकम् ।
जयपालं सुविमलं सर्वेषामर्द्धभागिकम् ॥३३६॥
आदाय निम्बुकद्रावैः पेषयेदतियत्नतः ।
छायायामथ संशोष्य काचकुप्यान्तु विन्यसेत् ॥३३७॥
रसोऽयं तु समाख्यातो नाम्ना ह्यञ्जनभैरवः ।
अञ्जनाद्धि निहन्त्याशु सन्निपातं सुदारुणम् ॥३३८॥

वृश्चिकविषहरः प्रलेपः ।

जलपिष्टस्तु जैपालो यत्नतः परिलेपितः ।
विषं वृश्चिकदंशोत्थं विनिहन्ति विशेषतः ॥३३९॥

अथ जलोदरारिः—रविलोहं ताम्रम् । जयपालं युगतोलकसम्मितमिति द्वितोलकम् ॥३२९-३३२॥

ज्वरारी रसः—सौभाग्यं टङ्कणम्, अमृतं वत्सनाभः, धात्री आमलकी । नवं जयपालमिति पुरातनं हि न तथा गुणकरम् ॥३३३-३३५॥

अञ्जनभैरवः—कणा पिप्पली, टङ्कं टङ्कणम् ॥३३६-३३८॥

वृश्चिकविषहरः प्रलेप.—यत्नतः परिलेपित इति यावत् दंशस्थानं तावदेव प्रदेशमभिव्याप्येत्यर्थः ॥३३९॥

जयपालयुक्तयोगानां निषेधः।

बाले वृद्धे कृशे क्षीणे गर्भिण्याञ्च गुदामये।
प्रवाहिकायां, शोथे च त्वामपक्वाशयाश्रिते ॥३४०॥
गुदभ्रंशे चान्त्रशोथयुते बद्धगुदोदरे।
तथान्त्रच्छदशोथे च जयपालं न योजयेत् ॥३४१॥

## अथ धत्तूरस्य नामानि।

धत्तूरः कितवोन्मत्तौ धूर्तश्च कनकाभिधः।
शठश्च कण्टकफलः कीर्तितः शिवशेखरः ॥३४२॥

धत्तूरस्य परिचयः।

धत्तूरः क्षुपजातीयः सकण्टकफलस्तथा।
सुलभो, भिद्यते चायं पुष्पवर्णविभेदतः ॥३४३॥
धत्तूराः सर्व एवैते मताः समगुणान्विताः।
विशेषतस्तु सर्वेषु कृष्णपुष्पो गुणाधिकः ॥३४४॥
पत्रं मूलं फलं बीजं तथा मृदुदलद्रवः।
प्रयुज्यते विशेषेण धत्तूरस्य भिषग्वरैः ॥३४५॥

धत्तूरबीजानां प्रथमः शोधनप्रकारः।

धत्तूरबीजान्यादाय पोट्टल्यां रोधयेत्ततः।
स्वेदयेद्दोलिकायन्त्रे गव्यदुग्धेन यामकम् ॥३४६॥
संस्वेद्य क्षालयेदुष्णतोयेन तु ततो भिषक्।
इत्थं शुद्धानि बीजानि वीतशङ्कः प्रयोजयेत् ॥३४७॥

द्वितीयः शोधनप्रकार।

नवानि धूर्तबीजानि दोलिकायन्त्रयोगतः।
स्वेदयेद्गव्यमूत्रेण यामैकं पोट्टलीगतम् ॥३४८॥

जयपालयुक्तयोगानां विशेषतो निषेधः प्राचीनानुक्तोऽपि अज्ञमतिमलमोषाय मान्यैराम्नातः, माभूद् बालादिषु जयपालयोगात् व्यापद्भयमिति ॥३४०-३४१॥

अथ धत्तूरोपक्रम'—कनकाभिधः सुवर्णनामा। शिवशेखरः शिवपूजासु तद्दृगवहारात् ॥३४२-३४५॥

गोदुग्धे गोमूत्रे वा यामैकं दोलया स्वेदनाच्छुध्यन्ति धत्तूरबीजानि। "धत्तूरबीजं गोमूत्रं चतुर्यामोषितं पुनः। क्वथितं निस्तुषं कृत्वा शुद्धं योगेषु योजयेत्"

खल्वेऽथ खलु सम्पेष्य वस्त्रपूतं तु कारयेत् ।
इत्थं शुद्धानि बीजानि वीतशङ्कः प्रयोजयेत् ॥३४९॥

धत्तूरस्य गुणाः ।

धत्तूरः कटुकश्चोष्णस्तथा शोथनिषूदनः ।
कृमिघ्नः कुष्ठशमनो विशेषाज्ज्वरनाशनः ॥३५०॥
परं त्वग्दोषशमनस्तथा कण्डूतिकापहः ।
भ्रमकृन्मोहजननः समाख्यातो भिषग्वरैः ॥३५१॥

धत्तूरस्य विशिष्टा गुणाः ।

धत्तूरः श्वासशमनः कफसंशोषणः परम् ।
आक्षेपोन्मादहरणः स्तम्भनो हर्षवर्द्धनः ॥३५२॥
अभिष्यन्दप्रशमनः कर्णशूलनिवर्हणः ।
सवेदनार्बुदहरो लसीकाग्रन्थिशोथहृत् ॥३५३॥
कृमिदन्तव्यथाहारी त्वामवातव्यथाहरः ।
स्तनशोथप्रशमनः प्रलापपरिकृन्तनः ॥३५४॥
भूतापहस्तथोन्मत्तसारमेयविषापहः ।
कटिव्यथाहरः कान्ताकामोन्मादविनाशनः ॥३५५॥
निम्ननिर्दिष्टरोगेषु धत्तूरोऽत्यल्पमात्रया ।
विशेषेण प्रयोक्तव्य इति सद्भिषजां मतम् ॥३५६॥
विविधस्थानसम्भूतां खलु शोथसमुत्थिताम् ।
वेदनां विविधाकारां विनिहन्ति विशेषतः ॥३५७॥
प्रासूतिकज्वरोत्थं वा सन्निपातसमुत्थितम् ।
भृशदुर्गन्धपीताभकृष्णवर्णमलान्वितम् ॥३५८॥
सलिलाभं विशेषेण विनिहन्त्यतिसारकम् ।
कण्ठशुण्डीश्च हन्त्याशु भृशदारुणवेदनाम् ॥३५९॥
मसूरिकादौ स्फोटानामस्फुटोद्गमहेतुजम् ।
आक्षेपं च प्रलापं च शमयत्यविकल्पतः ॥३६०॥

इति हि स्मरन्ति प्राज्ञाः ॥३४६-३४९॥

धत्तूरगुणाः—मोहजनकः मोहो वैचित्यं तज्जनकः। स्पष्टमन्यत् ॥३५०-३५१॥

अथैतस्य गुणविशेषाः तन्त्रान्तरानिर्दिष्टाः अनुभूतचराः प्रकटीक्रियन्ते जगतो हिताय श्वासशमन इत्यादिना। आक्षेपो वातव्याधिविशेषः। अत्यल्पमात्रयेति गुञ्जापादांशादप्यत्यन्तं हीनया। कण्ठशुण्डी गलरोगविशेषः। तारालापयुतामिति तारः सुदीर्घोच्चो य आलापः तद्युतम्। जत्रूर्ध्वसमाश्रितानिति जत्रु

विसर्पोत्थं ज्वरोत्थं वा सन्निपातसमुत्थितम् ।
विनिहन्ति विशेषेण प्रलापादीनुपद्रवान् ॥३६१॥
सन्निपातसमुद्भूतां शय्यातः खलु रोगिणाम् ।
पलायनात्मिकां चेष्टां विनिवारयति द्रुतम् ॥३६२॥
प्रसवोत्तरकाले वा सन्निपातज्वरे खलु ।
मूत्रानुत्पत्तिहेतूत्थं मूत्ररोधं व्यपोहति ॥३६३॥
नाडीदौर्बल्यजनितं वक्षस्याकुञ्चनान्वितम् ।
तारालापयुतं हन्ति श्वासं तु तमकाभिधम् ॥३६४॥
कफजान् कफपित्तोत्थान् रोगान् वा कफवातजान् ।
विनिहन्ति विशेषेण ह्यूर्ध्वजत्रुसमाश्रितान् ॥३६५॥
ग्रन्थिकज्वरसम्भूतं कक्षावङ्क्षणकण्ठजम् ।
ग्रन्थीनां श्वयथुं हन्ति ज्वरञ्चैव तदाश्रितम् ॥३६६॥

धत्तूरस्य मात्रा ।

आरभ्य गुञ्जापादांशाद्गुञ्जार्धं तु विशोधितम् ।
धत्तूरबीजचूर्णन्तु प्रयुञ्जीत विधानवित् ॥३६७॥
गुञ्जार्द्धतः समारभ्य सार्द्धगुञ्जैकसंमितम् ।
चूर्णं धत्तूरपत्राणां प्राणाचार्यः प्रयोजयेत् ॥३६८॥

धत्तूरस्य आमयिक प्रयोग. ।

धत्तूरमूलं पत्रं वा सम्पेष्य विमलाम्भसा ।
कवोष्णस्तूपनाहेन ब्रध्नशोथं व्यपोहति ॥३६९॥
धूर्तपत्रद्रवे पिष्टं निफेनं सरसाञ्जनम् ।
विनिहन्ति विशेषेण नेत्राभिष्यन्दमुल्बणम् ॥३७०॥
धत्तूरपत्रस्वरसः कवोष्णः स्वल्पमात्रया ।
निक्षिप्तो नाशयत्याशु कर्णशूलमसंशयम् ॥३७१॥

ग्रीवासन्धिः तदूर्ध्वदेशाश्रितान् । ग्रन्थिकज्वरः 'Plague' इतिख्यातः॥३५२-३६६॥

धत्तूरबीजमात्रा गुञ्जाचतुर्थांशात् गुञ्जार्धं यावत् । पत्रमात्रा तु गुञ्जार्धतः सार्धगुञ्जम् ॥३६७-३६८॥

धत्तूरस्य रोगयोग्य. प्रयोग.—ब्रध्नशोथं वङ्क्षणसन्धिग्रन्थिशोथम् । तन्निदानादि यथा—"अत्यभिष्यन्दिगुर्वन्नसेवनान्निचयङ्गतः । करोति ग्रन्थिवच्छोथं दोषो वङ्क्षणसन्धिषु । ज्वरशूलाङ्गसादाढ्यं तं ब्रध्नमिति निर्दिशेत्" ॥ चरके

धूर्तबीजानि सम्पेष्य वटिका खलु निर्मिता ।
क्रिमिदन्तस्थरन्ध्रस्था वेदनां हन्ति दारुणाम् ॥३७२॥
धूर्तपत्रं निशाफेनयुतं पिष्टामलाम्भसा ।
प्रलेपान्नाशयत्याशु स्तनश्वयथुवेदनाम् ॥३७३॥
धत्तूरदलकल्केन तैलपाकविधानतः ।
साधितं सार्षपं तैलं हन्ति पेशीगतानिलम् ॥३७४॥
कटिवातव्यथां चैव सन्धिवातभवां व्यथाम् ।
यूकालिक्षादिकं चैव हन्ति केशेषु मर्दनात् ॥३७५॥
धत्तूरफलचूर्णं तु काकोदुम्बरिकान्वितम् ।
शीलितं तण्डुलाम्भोभिः सारमेयविषं हरेत् ॥३७६॥
सगुडः सार्कदुग्धश्च कृष्णधूर्तदलद्रवः ।
शीलितो विनिहन्त्येव सारमेयविषं द्रुतम् ॥३७७॥
धूर्तपत्रं साहिफेनं जलेन परिपेषितम् ।
लेपनान्नाशयत्याशु सर्वश्वयथुवेदनाम् ॥३७८॥

प्रलापान्तकरसः ।

धत्तूरबीजं विमलं नवमाषकसंमितम् ।
रसेश्वरं गन्धकं च पृथक् षण्माषकोन्मितम् ॥३७९॥
कटुत्रिकं च सौभाग्यं पृथक् तोलकसंमितम् ।
आदाय पेषयेद्यत्नात् कामं निम्बूकवारिणा ॥३८०॥
निर्मापयेत्ततो युक्त्या वटिका रक्तिकोन्मिताः ।
रसोऽयं तु समाख्यातः प्रलापान्तकसंज्ञकः ॥३८१॥
विशेषतो मतोऽयं तु प्रलापपरिकृन्तनः ।
दीपनः पाचनश्चैव वह्निमान्द्यप्रणाशनः ॥३८२॥

उन्मादगजाङ्कुशः ।

धूर्तबीजं रसं गन्धं वङ्गं रौप्यं च मारितम् ।
समाहरेद्भिषग्वर्यः सर्वं तु समभागिकम् ॥३८३॥
कन्याम्भसा विमर्द्याथ वटिका रक्तिकोन्मिताः ।

तूक्तं "यस्य वायुः प्रकुपितः शोफशूलकरश्चरन् । वङ्क्षणाद्वृषणौ याति ब्रध्नस्तस्योपजयते" । निफेनं अहिफेनम्, निशाफेनयुतमिति निशा हरिद्रा अफेनम् अहिफेनम्, इतिच्छेदः । निगदव्याख्यातमन्यत् ॥३६९-३७८॥

प्रलापान्तकरसः—सुगमः ॥३७९-३८२॥

उन्मादगजाङ्कुशरसे—रौप्यं रजतम्, कन्याम्भसा कुमारीरसेन ।

निर्मापयेत्प्रयत्नेन रसतन्त्रविशारदः ॥३८४॥
रसोऽयं तु समाख्यातो ह्युन्मादद्विरदाङ्कुशः ।
हन्त्युन्मादं विशेषेण तथा ज्वरनिवर्हणः ॥३८५॥

ग्रन्थिशोथनिवारिका वर्तिका ।

धत्तूरस्य फलं त्वेकं तथैव विषतिन्दुकम् ।
तोलकप्रमितञ्चैव चूर्णितं कृष्णजीरकम् ॥३८६॥
सहासारं मोचरसं कृष्णजीरकभागिकम् ।
समादाय स्नुहीपत्ररसेन परिमर्दयेत् ॥३८७॥
वर्तिकाः कारयेद्वैद्यो माषकत्रयसंमिताः ।
ग्रन्थिकज्वरसम्भूतग्रन्थिशोथनिवारिकाः ॥३८८॥
वर्तिकैका शिलायां तु सङ्घृष्य विमलाम्भसा ।
प्रलिप्ता शमयत्याशु ग्रन्थिशोथं सुदारुणम् ॥३८९॥
दिने वारद्वयं वापि वारत्रयमथापि वा ।
सङ्घृष्य वर्तिकामेकां लेपयेद्भिषजां वरः ॥३९०॥

## अथ भङ्गाया नामानि ।

भङ्गा भङ्गी मातुलानी मादिनी मादिका तथा ।
मातुली विजया तन्द्राकारिणी बहुवादिनी ॥३९१॥

भङ्गायाः परिचयः ।

भङ्गा तु क्षुपजातीया सर्वत्र सुलभा मता ।
अतः परिचयस्तस्या विस्तरान्न प्रदर्शितः ॥३९२॥
दलद्रवो दलं बीजं मातुलान्या विशेषतः ।
प्रयुज्यते भेषजेषु कामं रसचिकित्सकैः ॥३९३॥

भङ्गायाः प्रथमः शोधनप्रकारः ।

मातुलानीं शुष्कपत्रां सलिले तु निमज्जयेत् ।
निष्पीड्य शुष्कां गव्याज्ये भर्जयेन्मन्दवह्निना ॥३९४॥
सुभृष्टामथ विज्ञाय सत्वरं तु समाहरेत् ।

उन्मादद्विरदाङ्कुश इति उन्माद एव द्विरदो हस्ती तस्य वशीकरणाय अङ्कुश इवेति भावः ॥३८३-३८५॥

ग्रन्थिशोथनिवारिका वर्ति —तथैवेत्येकसङ्ख्याकमेव । सहासारः कुमारीसार. "मुसब्बर" इति ख्यातः ॥३८६-३९०॥

अथ भङ्गापरिचयः—दलद्रवः पत्ररसः ॥३९१-३९३॥

इत्थं विशोधितां भङ्गां सर्वत्र विनियोजयेत् ॥३९५॥

द्वितीयः शोधनप्रकारः

भङ्गां विशुष्कामादाय बब्बूलत्वक्कषायतः ।
स्वेदयेद् घटिकार्द्धं तु मध्यमानलयोगतः ॥३९६॥
विज्ञाय विजयां स्विन्नां घर्मे खलु विशोषयेत् ।
एवं संस्वेदिता भङ्गा शुद्धिमायात्यनुत्तमाम् ॥३९७॥
एवं विशोधितां भङ्गां पिष्ट्वा गोदुग्धयोगतः ।
कामोद्दीपनयोगेषु विशेषेण नियोजयेत् ॥३९८॥

भङ्गाया गुणाः

भङ्गा तिक्ता लघुस्तीक्ष्णा ग्राहिणी कफहारिणी ।
दीपनी पाचनी चैव पित्तला मदकारिणी ॥३९९॥

भङ्गाया विशिष्टा गुणाः

भङ्गा क्षुद्दीपनी चैव ध्वजभङ्गहरा परम् ।
स्वप्नमेहहरा चैव शुक्रस्तम्भनकारिणी ॥४००॥
निद्राप्रदायिनी कामं कामोद्दीपनकारिणी ।
प्रलापनाशिका चैव धनुःस्तम्भहरा तथा ॥४०१॥
अन्त्रशूलहरा चैव वृक्कशूलप्रणाशिनी ।
पित्तशोषजशूलघ्नी त्वामाशयबलप्रदा ॥४०२॥
अजीर्णजातिसारघ्नी तथाजीर्णनिवारिणी ।
उन्मादनाशिनी चैव वृक्कशोथव्यथाहरा ॥४०३॥
मूत्रला रक्तसंयुक्तमूत्रस्रावनिवारिका ।
विचित्रानन्दजननस्वप्नसन्तानकारिका ॥४०४॥
अर्शोव्यथाहरा चैव किञ्चिज्ज्वरनिवारिका ।
व्रणमेहसमुद्भूतशिश्नोत्थानव्यथाहरा ॥४०५॥
नाडीदौर्बल्यसम्भूतं तथाक्षेपसमुत्थितम् ।
रजःशूलं निहन्त्याशु भास्करस्तिमिरं यथा ॥४०६॥

भङ्गाशोधनप्रकारौ—सुगमपाठौ ॥३९४-३९८॥

भङ्गायाः गुणाः—क्षुद्दीपनी क्षुधावृद्धिकरी, पित्तशोषजशूललक्षणं नारिकेललवणस्य गुणव्याख्याने द्रष्टव्यम्। अजीर्णजातिसारघ्नीति अजीर्णजातमतीसारं हन्ति। विचित्रानन्दजननेत्यादि—अस्या. प्रयोगात् निद्राविष्टः पुरुषः स्वप्ने विचित्राण्यानन्दजननानि रूपाणि पश्यति। शिश्नोत्थानं ध्वजहर्षः।

आमाशयोत्थशूलघ्नी यक्ष्मकासहरा परम् ।
वस्त्याक्षेपहरा चैव साक्षेपतमकापहा ॥४०७॥
दारुणाक्षेपसंयुक्तमतिकष्टप्रदायिनम् ।
परं सङ्क्रामकं कासं विनिहन्ति विशेषतः ॥४०८॥
रजोनिवृत्तिकालोत्थां प्रौढावस्थाश्रये तथा ।
शीर्षव्यथां तु नारीणां विनिहन्ति सुदारुणाम् ॥४०६॥
गर्भस्रावसमुद्भूतां मासिकस्रावकालजाम् ।
रक्तप्रदरजां वापि वृद्धां रक्तस्रुतिं जयेत् ॥४१०॥
आलपन् विस्मरेद् यत्र स्वकीयं पूर्वभाषितम् ।
दौर्बल्यं मानसोद्भूतं विनाशयति सत्वरम् ॥४११॥
अन्नजातं तु निखिलं भुक्तं यत्र न जीर्यति ।
अजीर्णं नाशयत्याशु सारुचिं क्षुद्विवर्जितम् ॥४१२॥
अर्द्धावभेदकोपेतकाचरोगनिवारिका ।
सङ्कोचनी तथा श्रोत्रदृष्टिशक्तिविवर्द्धिनी ॥४१३॥

भङ्गाया मात्रा ।

द्विगुञ्जतः समारभ्य चतुर्गुञ्जमितां परम् ।
भङ्गां खलु प्रयुञ्जीत वलकालाद्यपेक्षया ॥४१४॥

भङ्गाया आमयिकः प्रयोगः ।

आर्द्रा विशुष्का वा भङ्गा त्वजादुग्धेन पेषिता ।
प्रलिप्ता पादतलयोः निद्रां जनयति द्रुतम् ॥४१५॥
भङ्गा सुश्लक्ष्णसंपिष्टा शिलायां विमलाम्भसा ।
कोष्णोपनाहयोगेन कथिताशोंव्यथाहरा ॥४१६॥
धूम्रपानविधानेन भङ्गा युक्ताथवाशिता ।
साक्षेपं तमकश्वासं कासं संक्रामकं हरेत् ॥४१७॥

मदनोदयमोदकः ।

जातीपत्रीफले मांसी लवङ्गं चन्द्रकुङ्कुमम् ।
एला दारुसिता व्योषं वङ्गं जीरकमभ्रकम् ॥४१८॥

वस्त्याक्षेपः मूत्राशये जायमानः आक्षेपः ॥३६६-४१४॥

आमयिकप्रयोगे—धूम्रपानविधानेन प्रयुक्ता अथवा अशिता भक्षिता साक्षेपं तमकश्वासं तथा सङ्क्रामक कासं "Whooping Cough" इति ख्यात हरति ॥

मदनोदयमोदकः—जातिपत्रीफले इति जातिपत्री जातिफलञ्चेति । मांसी

लोहं च रससिन्दूरं पृथक् तोलकसंमितम् ।
शतावरी गोक्षुरको द्राक्षा कर्कटश्रृङ्गिका ॥४१९॥
बलात्मगुप्ता कुष्ठं च वृद्धदारकबीजकम् ।
चूर्णीकृतं सर्वमेतत् पृथक् कर्षद्वयोन्मितम् ॥४२०॥
भङ्गा विशोधिता चैव पूर्वचूर्णार्द्धसंमिता ।
सितां सर्वद्विगुणितां दत्त्वा रसविशारदः ॥४२१॥
आरभ्य माषत्रितयाद्रसमाषकसंमितान् ।
निर्मापयेन्मोदकांस्तु खलु मोदकपाकवित् ॥४२२॥
नामतोऽयं समाख्यातो मदनोदयमोदकः ।
मदनोद्दीपनकरो विशेषात्परिकीर्तितः ॥४२३॥
शृतं परं घनीभूतं सितैलासंयुतं पयः ।
अनुपाने प्रयोक्तव्यं तदतीव हि बृंहणम् ॥४२४॥
मोदकस्यास्य सततं मासत्रयनिषेवणात् ।
कामरूपो भवेन्मर्त्यस्तथा भीमपराक्रमः ॥४२५॥
स्मरस्मयस्मेरदृशो नवयौवनघूर्णिताः ।
प्रमदास्तोषयत्यस्य सेवकोऽपतितध्वजः ॥४२६॥

त्रैलोक्यविजया वटी ।

भङ्गासत्त्वं भागिकं तु पूर्वोक्तविधिसाधितम् ।
तुगाक्षीरीरजश्चैव भागत्रितयसंमितम् ॥४२७॥
संमर्द्य वारिणा खल्वे वटिका रक्तिकोन्मिताः ।
निर्मापयेत्प्रयत्नेन रसतन्त्रविचक्षणः ॥४२८॥
वटिकेयं समाख्याता त्रैलोक्यविजयाभिधा ।
प्रलापोन्मादशमनी वृक्कशूलप्रणाशिनी ॥४२९॥
रजःशूलहरा चैव यक्ष्मकासनिवारिका ।
अतीसारप्रशमनी स्वप्नमेहनिषूदनी ॥४३०॥

जटामांसी, चन्द्रः कर्पूरम्, दारुसिता गुडत्वक् । विशोधिता भङ्गा जातिपत्र्यादीनां चूर्णादर्द्धपरिमाणा ग्राह्या । रसमापकसंमितानिति षण्मापकप्रमितान् ॥४१८-४२६॥

त्रैलोक्यविजया वटी—भङ्गासत्त्वं पूर्वोक्तेन विधिनेति वन्यौषधिसत्त्व निर्माणसाधनेन यन्त्रविज्ञानीयोक्तेन बाष्पस्वेदनयन्त्रेण साधनीयः ॥ स्पष्ट मन्यत् ॥४२७-४३०॥

त्रैलोक्यसंमोहनरसः ।

त्रैलोक्यविजयां शुद्धां भानुतोलकसंमिताम् ।
हिङ्गुलं रससिन्दूरं घनसारं लवङ्गकम् ॥४३१॥
अभ्रकं शङ्खभसितं पृथक् तोलकसंमितम् ।
गोक्षुरो वानरीवीजं तथा कर्कटश्टङ्गिका ॥४३२॥
चूर्णीकृतं पृथक् चैतत्तोलकद्वयसंमितम् ।
समादाय भिषग्वर्यः सप्तधा सुविधानतः ॥४३३॥
भङ्गायाः शतपुत्र्याश्च स्वरसेन विभावयेत् ।
निर्मापयेत्तु वटिका रक्तित्रितयसंमिताः ॥४३४॥
यतः स्मरस्यापि कटाक्षपातैः स्त्रीणां तु संमोहनकारिणीनाम् ।
सम्मोहनं वै विदधाति तस्मात् त्रैलोक्यसंमोहनसंज्ञकोऽयम् ॥४३५॥
वामावश्यकरः परं रुचिकरः क्लैव्यापहारी परं
हर्षोत्साहकरो धृतिस्मृतिकरः शुक्रातिसंस्तम्भनः ।
पुत्रापत्यकरो रतिप्रियकरः सर्वत्र सौख्याकरः
सेव्योऽयं खलु कामिभी रसवरस्त्रैलोक्यसंमोहनः ॥४३६॥

## अथ गुञ्जाया नामानि ।

गुञ्जा रक्ता रक्तिका च ताम्रिका कृष्णचूडिका ।
उच्चटा शीतपाकी च भिल्लभूषणिकारुणा ॥४३७॥
चूडामणिस्ताम्रिका च शिखण्डी कृष्णला तथा ।
काकणन्ती च काम्भोजी सैवेह परिकीर्तिता ॥४३८॥

गुञ्जायाः परिचयः ।

भिष्टमूलदला रम्या लता तु शीतपाकिनी ।
कृष्णचूडफला गुञ्जा सर्वेषां विदिता मता ॥४३९॥
पत्रं पत्ररसो मूलं वीजं चास्याः प्रयुज्यते ।
वीजमेव भिषग्वर्यैर्मतं तूपविपाह्वयम् ॥४४०॥

त्रैलोक्यसंमोहन.—भङ्गा शुद्धा १२ तोलकप्रमिता । वानरीवीज आत्म-गुप्तावीजम् । शतपुत्री शतावरी ॥४३१-४३६॥

अथ गुञ्जानामानि तन्त्रव्यवहृतानि । भिल्लभूषणिका अरुणा इति च्छेदः । गुञ्जापरिचय.—भिष्टमूलदलेति भिष्टं मूलं दलञ्च यस्याः सा तथा, रम्या सुन्दर-दर्शना मनोहरेति यावत् । कृष्णवर्णा चूडा येषां तथा भूतानि फलानि यस्याः सा कृष्णचूडफला । स्पष्टमन्यत् ॥४३७-४४०॥

गुञ्जाबीजानां शोधनप्रयोजनम्।

गुञ्जाबीजं वान्तिकरं तीव्ररेचनकृत्तथा।
शीलितं त्वतिमात्रं तु गुञ्जाबीजमशोधितम् ॥४४१॥
विषूचीलक्षणाकारां करोति हि विषक्रियाम्।
अतो दोषनिवृत्त्यर्थं गुञ्जाबीजानि शोधयेत् ॥४४२॥

गुञ्जाबीजानां प्रथमः शोधनप्रकारः।

नवानि गुञ्जाबीजानि चूर्णीकृत्य प्रयत्नतः।
द्विगुणीकृतवस्त्रान्तः पोट्टल्यां रोधयेत्ततः ॥४४३॥
स्वेदयेद्दोलिकायन्त्रे द्वियामं गव्यदुग्धतः।
इत्थं तु गुञ्जाबीजानि शुद्धिमायान्त्यनुत्तमाम् ॥४४४॥

द्वितीय. शोधनप्रकारः।

गुञ्जाबीजं पोट्टलीस्थं दोलायन्त्रे सकाञ्जिकम्।
यामैकं स्वेदनादेव शुद्धिमायात्यनुत्तमाम् ॥४४५॥

गुञ्जाया गुणाः।

गुञ्जाबीजं सुविमलं कामोद्दीपनमुत्तमम्।
ऊरुस्तम्भहरं चैव बलसम्वर्द्धनं परम् ॥४४६॥
गुञ्जापत्रं शोथहरं त्वामवातप्रणाशनम्।
तथैव च समाख्यातं वेदनाहरमुत्तमम् ॥४४७॥
गुञ्जापलाशनिर्यासो मधुरः कटुकस्तथा।
स्वरभेदप्रशमनः शोथघ्नो वेदनाहरः ॥४४८॥
गुञ्जामूलं सुमधुरं कफनिःसारकं परम्।
वातपित्तहरं चैव तृष्णाशोथनिवारणम् ॥४४९॥
स्वरभेदप्रशमनं तथा वान्तिविनाशनम्।
मूत्रकृच्छ्रप्रशमनं बलवर्णकरं परम् ॥४५०॥
कासघ्नं शुक्रजननं रुच्यं विषविनाशनम्।
वृष्यं व्रणापहं चैव विशेषात्परिकीर्तितम् ॥४५१॥
गुञ्जामूलं विशेषेण मधुयष्टिगुणोपमम्।
अत एवाधुना तत्तु तदभावे प्रयुज्यते ॥४५२॥

गुञ्जाबीजानां शोधनप्रयोजनम्—वान्तिकरत्वात् तीव्ररेचकत्वात् विषूची-सदृशविपक्रियाहेतुत्वाच्च ॥४४१-४४२॥

गुञ्जाबीजशोधनप्रकारः—द्विगुणीकृतवस्त्रान्तः प्रक्षिप्य शोधनं गुञ्जा-बीजचूर्णनिष्क्रमणरक्षार्थम्। काञ्जिके स्वेदनादपि शुद्धिः गुञ्जाबीजानाम् ॥

शुद्धगुञ्जाबीजस्य मात्रा।

गुञ्जार्द्धतः समारभ्य सार्द्धगुञ्जैकसंमितम्।
गुञ्जाबीजं सुविमलं प्रयुञ्जीत विधानवित् ॥४५३॥

गुञ्जाया आमयिक प्रयोगः।

गुञ्जाबीजं शिलापिष्टं वारिणा परिलेपितम्।
निहन्त्युत्पिष्टसन्धिस्थां दारुणां शोथवेदनाम् ॥४५४॥
इन्द्रलुप्तं पक्षवधं तत्तदङ्गसमाश्रितम्।
गृध्रसीं दारुणां चैव सुघोरमवबाहुकम् ॥४५५॥
गुञ्जाबीजं शिलापिष्टं वारिणा चित्रकान्वितम्।
प्रलिप्तं शमयत्येव श्वित्रकुष्ठं विशेषतः ॥४५६॥

प्रथम गुञ्जाद्यतैलम्।

गुञ्जाबीजं शिलापिष्टं कल्कीकृतमनुत्तमम्।
तिलतैलं भृङ्गराजपत्रनिर्यासकं तथा ॥४५७॥
चतुर्गुणोत्तरं चैव मानमेषां प्रकल्पयेत्।
तैलपाकविधानेन तैलमेभिस्तु साधितम् ॥४५८॥
निहन्त्यभ्यङ्गयोगेन कण्डूकुष्ठादिकामयान्।
तथा दारुणकं हन्ति विविधा वातवेदनाः ॥४५९॥

द्वितीय गुञ्जाद्यतैलम्।

गुञ्जाबीजशिफाभिस्तु तैलं द्विगुणवारिणा।
विपाचितं गण्डमालां निहन्त्यभ्यङ्गयोगतः ॥४६०॥

गुञ्जायाः गुणनिर्देशो मात्रानिर्देशश्च व्याख्यासम ॥४४६-४५३॥

गुञ्जाया रोगयोग्यः प्रयोग—प्रसारणाकुञ्चनविवर्तनाक्षेपणाशक्त्युग्ररुजत्व-स्पर्शासहत्वादिसन्धियुक्तलक्षणं सह समन्तात् श्वयथुमान् विशेषतो रात्रिरुजा-करश्चोत्पिष्टसन्धिर्भवति। इन्द्रलुप्तं केशभूमिजः क्षुद्ररोगविशेषः, "रोमकूपानुगं पित्तं वातेन सह मूर्च्छितम्। प्रच्यावयति रोमाणि तत श्लेष्मा सशोणितः। रुणद्धि रोमकूपांस्तु ततोऽन्येषामसम्भव। तन्द्रिलुप्तं खालित्यं रुह्येति च विभाव्यते" इत्युक्तलक्षणः। अवबाहुकः अंसदेशगतः सिराकुञ्चनजो वातव्याधि-विशेषः ॥४५४-४५६॥

गुञ्जाद्यं तैलमाद्यम्—गुञ्जाबीजानि शिलापिष्टानि पलैकमितानि, तिल तैलस्य चत्वारि पलानि, भृङ्गपत्ररसस्य षोडशपलानि। यथाविधि पाचितं कण्डू-कुष्ठादिहारि। दारुणकं केशभूमिरोगविशेषः "दारुणा कण्डुरा रूक्षा केशभूमि-प्रपाट्यते। कफमारुतकोपेन विद्याद्दारुणकं तु तम्" इत्युक्तलक्षणः ॥४५७-४५९॥

द्वितीयं तैलम्—गुञ्जाबीजं गुञ्जाशिफा च कल्कः पलद्वयमितः, तैलस्याष्टौ

एरण्डतैलसंयुक्तं गुञ्जापत्रं सुपेषितम् ।
कोष्णोपनाहयोगेन वेदनाहरमुत्तमम् ॥४६१॥
गुञ्जापत्ररसे पक्कं तैलमभ्यङ्गयोजितम् ।
शोथप्रशमनं चैव वेदनाहरमीरितम् ॥४६२॥
गुञ्जापत्रं नवं वापि विशुष्कं चूर्णितं भृशम् ।
नाशयत्यचिरादेव स्वरभेदमसंशयम् ॥४६३॥

गुञ्जाजीवनरसः ।

गुञ्जाबीजं सुविमलं सार्द्धतोलकसंमितम् ।
तन्मितं रससिन्दूरं तयोश्च द्विगुणीकृताम् ॥४६४॥
विशोधितां तु विजयां समादाय भिषग्वरः ।
सम्पेष्य वटिकाः कार्या गुञ्जाद्वितयसंमिताः ॥४६५॥
रसोऽयं तु समाख्यातो गुञ्जाजीवनसंज्ञकः ।
बलसञ्जननश्चैव मदनोद्दीपनः परम् ॥४६६॥

गुञ्जाभद्ररसः ।

गुञ्जाबीजं सुविमलं रसतोलकसंमितम् ।
जयन्ती निम्बबीजं च रसतोलकसंमितम् ॥४६७॥
तोलकत्रितयं सूतं गन्धं द्वादशतोलकम् ।
समादाय ततः खल्वे पेषयेदतियत्नतः ॥४६८॥
काकमाचीजयाधूर्तनिम्बूकद्रवयोगतः ।
वटिकाः कारयेद्यत्नाद्गुञ्जाद्वितयसंमिताः ॥४६९॥
रसोऽयं तु समाख्यातो गुञ्जाभद्रसमाह्वयः ।
ऊरुस्तम्भं महाघोरं विनिहन्ति विशेषतः ॥४७०॥

## अथ भल्लातकस्य नामानि ।

भल्लातकस्तु भल्लातस्तपनोऽरुष्करोऽग्निकः ।
कृमिघ्नश्चैव वातारिः स एव परिकीर्तितः ॥४७१॥

भल्लातकस्य परिचयः ।

भल्लातकः समाख्यातः शाखिजातीयकस्तरुः ।
जायतेऽद्रिषु बाहुल्याद् फलं तस्य प्रयुज्यते ॥४७२॥

पलानि, जलस्य षोडश पलानि, पक्कं गण्डमालाहरम् ॥४६०-४६३॥

गुञ्जाजीवनरसः—गुञ्जाबीजं १॥ तो०, रससिन्दूरं १॥ तो०, बब्बूल-कषायेण शोधितायाः भङ्गायाः षट्तोलकानि । स्पष्टमन्यत् ॥४६४-४६६॥

गुञ्जाभद्ररसे—रसतोलकसम्मितामति षट्तोलकप्रमितम् । धूर्तः धत्तूरः ॥

ग्राह्यभल्लातकस्य स्वरूपम् ।

भल्लातकानि पक्वानि नीराञ्चितानि यानि तु ।
निमज्जन्ति हि तान्येव ग्राह्याणीह विशुद्धये ॥४७३॥

भल्लातकस्य शोधनप्रयोजनम् ।

भल्लातकस्य तु रसः स्वल्पोऽपि पतितस्त्वचि ।
करोति दारुणं दाहं व्रणं चैवातिदारुणम् ॥४७४॥
शोथं सञ्जनयत्याशु तीव्रदाहसमन्वितम् ।
मुखे निपतितो घोरं वीसर्पं प्रकरोति वै ॥४७५॥
उक्तोपद्रवशान्त्यर्थं फलं भल्लातकोद्भवम् ।
शोधयेद्भिषजां वर्यः सावधानतया सदा ॥४७६॥

भल्लातकस्य प्रथमः शोधनप्रकारः ।

इष्टकाचूर्णसंयुक्तं फलं भल्लातकोद्भवम् ।
पोट्टलीमध्यनिहितं घर्षयेन्नातिवेगतः ॥४७७॥
ततः प्रतप्ततोयेन क्षालयेदतियत्नतः ।
इत्थं तैलत्वचाहीनं भल्लातं शुद्धिमाप्नुयात् ॥४७८॥

द्वितीयः शोधनप्रकारः ।

भल्लातकफलानीह नारिकेलाम्बुयोगतः ।
स्विन्नानि दोलिकायन्त्रे शुद्धिमायान्त्यनुत्तमाम् ॥४७९॥

भल्लातकस्य गुणाः ।

भल्लातकः कटुस्तिक्त अत्युष्णः कृमिनाशनः ।
रसायनो बलकरो गुल्मार्शोग्रहणीहरः ॥४८०॥

भल्लातकपरिचयः—ग्रन्थिष्विति पर्वतेषु । भल्लातकशोधनप्रयोजनं निगदव्याख्यातम् ॥४७३-४७६॥

भल्लातकशोधनप्रकार आद्यः—त्रिचतुर्गुणवस्त्रकृतपोट्टलिकायां इष्टिकाचूर्णं भल्लातकफलानि च निक्षिप्य औषधनिर्माणकुशलः घर्षयेत् । घर्षणेन तैलाधारत्वचापसारः । निर्यातं तैलं च विशुष्यतीष्टकाचूर्णेषु । तत उष्णैर्जलैः प्रक्षाल्य भेषजेषु योजयेत् । तैलमेवास्य दाहव्रणशोथादिकरम् । शोधनात्प्राक् नारिकेलतैलं हस्तयोर्म्रक्षणीयम् ॥४७७-४७८॥

द्वितीयः शोधनप्रकारः—नारिकेलजलद्वारा स्वेदनात् साध्यः । स्वेदनञ्च खण्डशः कृतभल्लातकफलानां विधेयम् । तथासति स्विन्नानि उपभोगयोग्यानि भवन्ति भल्लातकानि ॥४७९॥

कुष्ठामयप्रशमनः कफवातोदरापहः ।
विबन्धाध्मानशूलघ्नः श्वासादिगदनाशनः ॥४८१॥

भल्लातकस्य मात्रा ।

गुञ्जैकतः समारभ्य गुञ्जात्रितयसंमितम् ।
भल्लातकं प्रयुञ्जीत बलकालाद्यपेक्षया ॥४८२॥

भल्लातकस्य आमयिकः प्रयोगः ।

हरीतकीतिलगुडयुतं भल्लातकं समम् ।
निषेवितं प्लीहपाण्डुज्वरघ्नं श्वासकासनुत् ॥४८३॥

भल्लातकरसायनम् ।

शुण्ठीविडङ्गलोहाढ्यं भल्लातं विमलीकृतम् ।
मध्वाज्यसंयुतं युक्तं मासत्रितयसेवनात् ॥४८४॥
रक्तवृद्धिं करोत्येतद् बलं चैव विवर्द्धयेत् ।
नवयौवनलावण्यं जनयत्यविकल्पतः ॥४८५॥
समाख्यातमिदं नाम्ना भल्लातकरसायनम् ।
सेवितव्यं सदा यत्नाद्रक्ताल्पत्वनिवृत्तये ॥४८६॥

## अथ करवीरस्य नामानि ।

करवीरो हयारिश्च हयमारोऽश्वमारकः ।
अश्वान्तकोऽश्वहाश्वघ्नो मतश्चण्डातकस्तथा ॥४८७॥
करवीरः श्वेतपीतरक्तपुष्पविभेदतः ।
त्रिविधस्तु समाख्यातो वैद्यविद्याविशारदैः ॥४८८॥

करवीरस्य परिचयः ।

करवीरः समाख्यातः सर्वत्र सुलभस्तरुः ।
भिषग्वरैरस्य मूलं मतं तूपविषाह्वयम् ॥४८९॥
करवीरस्य मूलत्वक् तद्रसो वा निषेवितः ।
करोति हि विशेषेण मोहदाहभ्रमादिकान् ॥४९०॥

भल्लातकगुणपाठो व्याख्यासमः ॥४८०-४८२॥

भल्लातकस्य रोगयोग्यः प्रयोगः—सममिति हरीतकीतिलगुडभल्लातकाः समाः परिग्राह्याः ॥४८३॥

भल्लातकरसायनम्—व्याख्यासमपाठम्। यद्यपि तन्त्रान्तरेषु भल्लातकरसायनप्रयोगो नैकविधः श्रूयते तथापि स्वल्पव्ययं बहुफलं निरापदमावश्यकगुणयोगि प्रकारममुमेव समामनुराचार्याः इत्यवधेयम्। यत्नात् पथ्यरक्षाद्वारेतिभावः ॥४८४-४८६॥

करवीरपरिचयः—निगदव्याख्यातः। प्रायश्चौषधेषु श्वेतकरवीरस्यैव प्रयोग

करवीरकमूलन्तु बाह्ययोगे प्रयुज्यते ।
आभ्यन्तरः प्रयोगोऽस्य न कुत्रापि प्रकीर्तितः ॥४११॥

करवीरस्य बाह्यप्रयोगः ।

करवीरकमूलं तु वारिणा परिपेषितम् ।
समाख्यातं प्रलेपन ह्युपदंशव्रणापहम् ॥४१२॥
करवीरदलद्रावो नेत्रयोर्विनियोजितः ।
अभिष्यन्दं जलस्रावं व्यपोहति विशेषतः ॥४१३॥

करवीराद्यतैलम् ।

करवीरशिफाक्वाथविपक्वं तिलतैलकम् ।
कल्कीकृतविडङ्गाग्नियोगतो गोजलान्वितम् ॥४१४॥
करवीराद्यतैलं तु समाख्यातं भिषग्वरैः ।
अभ्यङ्गाद्विनिहन्त्याशु त्वग्गतान् विविधान् गदान् ॥४१५॥

## अथ लाङ्गलिकाया नामानि ।

लाङ्गली हलिनी सीरी विशल्या कलिकारिका ।
अग्निजिह्वा स्वर्णपुष्पा दीप्ता नक्तेन्दुपुष्पिका ॥४१६॥
विद्युज्ज्वाला वह्निशिखा लाङ्गल्या गर्भपातिनी ।
हली लाङ्गलिनी चैव समाख्याता भिषग्वरैः ॥४१७॥

लाङ्गलिकायाः परिचयः ।

लाङ्गली स्वर्णकुसुमा लता तु सुमनोहरा ।
सीरमूला विशेषेण मता नक्तेन्दुपुष्पिका ॥४१८॥
लाङ्गल्या मूलमेवेह मतं तूपविषाह्वयम् ।
तदेव च विशेषेण योगेषु विनियुज्यते ॥४१९॥

इति सम्प्रदायः ॥४८७-४६१॥

करवीरस्य बाह्यः प्रयोगः—उपदंशव्रणहरः नेत्राभिष्यन्दनाशनश्च । अपि च—करवीरमूलत्वक् १ तो०, करवीरपुष्पाणि १ तो०, आफूकम् ३ मा०, अश्वगन्धा १ तो०, धत्तूरबीजानि १ तो०, जले पिष्ट्वा वटिकाः कारयेत् । सेयं करवीरादिवटी प्रलेपतो ध्वजभङ्गहरी ख्याता इति ॥४६२-४६३॥

करवीराद्यं तैलम्—गोजलं गोमूत्रम् । तैलसाधनाय करवीरमूलक्वाथः ४ प्रस्थमितः, विडङ्गं चित्रकश्च उभयोर्मानं मिलित्वा १ कुडवम्, गोमूत्रं ४ प्रस्थमितम्, तिलतैलं १ प्रस्थमितम् ॥४६४-४६५॥

लाङ्गलिकापरिचयः—लता इति प्रायिकम् । क्वचित् दीर्घसरलोर्ध्वकाण्डक्षुपरूपेणापि दर्शनात् । एतस्या आभ्यन्तरप्रयोगो न कार्यः । अत्र यद्यपि लाङ्ग

लाङ्गलिकायाः आभ्यन्तरप्रयोगे दोषाः ।

शुष्का वार्द्रा लाङ्गलिनी स्वल्पापि परिशीलिता ।
करोति दारुणं दाहं मोहातीसारविभ्रमम् ॥५००॥

लाङ्गलिकाया गुणाः ।

लाङ्गली कटुका चोष्णा कफवातापहा सरा ।
अपरापातनी चैव सद्यःप्रसवकारिका ॥५०१॥
शोथापहा विशेषेण मता व्रणनिवारिणी ।
कुष्ठकृमिप्रशमनी विशेषात्परिकीर्तिता ॥५०२॥
आभ्यन्तरप्रयोगार्थं लाङ्गलीं न प्रयोजयेत् ।
बाह्यप्रयोगे युञ्जीत तत्तद्रोगापनुत्तये ॥५०३॥

लाङ्गलिकाया बाह्यप्रयोगः ।

सुधौतं लाङ्गलीमूलं वारिणा परिपेषितम् ।
नाभौ योनौ प्रलिप्तं वा सद्यःप्रसवकृन्मतम् ॥५०४॥
लाङ्गली वारिणा पिष्टा करपादप्रलेपिता ।
अपरां पातयत्याशु न सन्देहोऽत्र कश्चन ॥५०५॥
लाङ्गलीमूलतोयं तु पूरितं कृमिकर्णके ।
निहन्त्यन्तःप्रविष्टांस्तु शतपद्यादिकान् कृमीन् ॥५०६॥
सूर्यभक्ताद्रवोपेतः सव्योषो लाङ्गलीद्रवः ।
विधाय वस्त्रपूतं तु योजयेत् कृमिकर्णके ॥५०७॥
पातयत्यचिरादेव कृमिकीटपिपीलिकाः ।
तथा कर्णजलौकाश्च तथैवान्यान् कृमीनपि ॥५०८॥
कङ्कगोधावसोपेतं तुलसीलाङ्गलीद्रवैः ।
साधितं तैलमभ्यङ्गाद् हन्त्युन्मन्थं विशेषतः ॥५०९॥

## अथ अर्कक्षीरस्य नामानि ।

अर्कक्षीरं रविक्षीरं सूर्यक्षीरं तथैव च ।
अर्कदुग्धं सूर्यदुग्धं रविदुग्धं च तन्मतम् ॥५१०॥

लीशोधनमुपेक्षितं बाह्यप्रयोगैकयोग्यत्वात् तथापि "लाङ्गली शुद्धिमायाति दिनं गोमूत्रशोधिता" इति प्राचीनोक्तमनुसन्धेयम् ॥४९९-५०३॥

लाङ्गल्याः बाह्यप्रयोगः—सूर्यभक्ता "हुरहुर" इति ख्याता । कङ्कः पक्षिविशेषः । गोधा प्रसिद्धप्राया । उभयोर्वसया युक्तम् । उन्मन्थः "कर्णं बलाद् वर्धयतः पाल्यां वायुः प्रकुप्यति । कफं सगृह्य कुरुते शोथं स्तब्धमवेदनम् । उन्मन्थकः सकण्डूको विकारः कफवातजः" इत्युक्तलक्षणः कर्णपालीरोगः ॥५०४-५०९॥

अर्कक्षीरस्य गुणाः।

अर्कक्षीरं मतं स्निग्धं तिक्तोष्णं कुष्ठगुल्मनुत्।
उदरापहमत्यन्तं रेचनं वान्तिकारकम् ॥५११॥
गुदाङ्कुरप्रशमनं कृमिदन्तव्यथापहम्।
क्षारकर्मकरं चैव त्वचि लिप्तं विशेषतः ॥५१२॥

अर्कक्षीरस्य बाह्यप्रयोगः।

सक्षौद्रे रविदुग्धे तु तूलमल्पं निषेचितम्।
कृमिदन्तस्थरन्ध्रस्थं कृमिदन्तव्यथापहम् ॥५१३॥
त्रिगुणक्षौद्रसंयुक्तं रविदुग्धं प्रलेपितम्।
मुखक्षतं शमयति द्रुतं नास्तीह संशयः ॥५१४॥
निशाशिरीषबीजाढ्यं सूर्यदुग्धं विलेपितम्।
गुदाङ्कुरान् पातयति चिरोत्थानप्यसंशयम् ॥५१५॥

## अथ स्नुहीक्षीरस्य नामानि।

स्नुहीक्षीरं सुधाक्षीरं सेहुण्डक्षीरकं तथा।
स्नुहीदुग्धं सुधादुग्धं स्नुग्दुग्धं च मतन्तु तत् ॥५१६॥

स्नुहीक्षीरस्य शोधनम्।

पलद्वयं सुधादुग्धं तोलकद्वयसंमिते।
चिञ्चादलद्रवे वस्त्रपूते घर्मे विशोषयेत् ॥५१७॥
द्रवं विशुष्कं विज्ञाय सुधादुग्धं समाहरेत्।
ततः सर्वत्र योगेषु प्रयुञ्जीत भिषग्वरः ॥५१८॥

स्नुहीक्षीरस्य गुणाः।

सुधादुग्धं वातहरं गुल्मोदरविनाशनम्।
विषाध्मानहरं चैव गुदाङ्कुरहरं परम् ॥५१९॥
परं विरेचनकरं पुष्पकृत्त्वाक्षिमध्यगम्।
समाख्यातं विशेषेण क्षारकर्मकरं परम् ॥५२०॥

अथार्कक्षीरोपक्रमस्तत्र बाह्ये प्रयोगे—तूलं कार्पासखण्डम्। त्रिगुणेत्यादि-लेपनोत्तरं मुखनिष्ठ्यूतं नान्तर्गिलनीयम् इत्यवधेयम्। निशा हरिद्रा। स्पष्टमन्यत् ॥५१०-५१५॥

अथ स्नुहीक्षीरम्—तत्र शोधनप्रकारे चिञ्चा अम्लिका, तस्याः पत्ररसो ग्राह्यः। केचित्तु "अर्कसेहुण्डयोर्दुग्धं तत्स्वयं शुद्धमुच्यते" इत्यप्याहुः ॥५१६-५१८॥

गुणपाठे—पुष्पकृत्त्वाक्षिमध्यगमिति अक्षिमध्यपतितं पुष्पाख्य "फोला" इतिख्यातं रोगं करोति ॥५१९-५२०॥

अस्य आमयिकः प्रयोगः ।

सुधादुग्धं निशाकोषातकीसैन्धवसंयुतम् ।
गोमूत्रेण प्रलिप्तं तु पातयेद्गुदजाङ्कुरान् ॥५२१॥

क्षारवर्तिका ।

चूर्णं दारुहरिद्रायास्तोलकैकमितं हरेत् ।
मासार्द्धं पेषयेद्धारा निदाघे खलु शोषयेत् ॥५२२॥
समांशिके सुधादुग्धे रविदुग्धे च तन्मिते ।
निक्षिप्य खलु खल्वेऽथ पेषयेदतियत्नतः ॥५२३॥
विज्ञाय वर्तिकायोग्यं रसतन्त्रविशारदः ।
दीर्घा एषणिकाकारा वर्तिकाः कारयेत्ततः ॥५२४॥
समाख्याता भिषग्वर्यैर्नामतः क्षारवर्तिका ।
भगन्दरमहाघोरनाडीव्रणविशोधिका ॥५२५॥
वर्तिकेयं सुविन्यस्ता प्रयत्नेन भगन्दरे ।
नाडीव्रणान्तराले च खलु शोधयति द्रुतम् ॥५२६॥

क्षारसूत्रम् ।

सुधादुग्धे वस्त्रपूतहरिद्राचूर्णसंयुते ।
निषिक्तेन तु तूलेन स्वल्पेन खलु यत्नतः ॥५२७॥
प्रलिप्तं सुदृढं सूत्रं छायायामथ शोषयेत् ।
विलिप्य सप्तधा ह्येवं शोषयेद्भिषजां वरः ॥५२८॥
सूत्रमेतत्समाख्यातं क्षारसूत्रं तु नामतः ।
गुदाङ्कुरच्छेदनार्थममोघास्त्रमिदं मतम् ॥५२९॥
भगन्दरच्छेदनार्थमप्येतद्विनियुज्यते ।
प्रयोक्तव्यं क्षारसूत्रं सावधानतया सदा ॥५३०॥

## अथ कृष्णसर्पविषस्य नामानि ।

कृष्णसर्पविषं चैव गरलं दारदं तथा ।
तदेव जङ्गमविषं समाख्यातं भिषग्वरैः ॥५३१॥

रोगयोग्यप्रयोगे क्षारवर्तिका—मासार्धं पञ्चदशदिनानि । एतावत्कालं पेषणञ्च सुश्लक्ष्णतासम्पादनाय । निगदव्याख्यातमन्यत् ॥५२१-५२६॥

क्षारसूत्रम्—वस्त्रपूतहरिद्राचूर्णयुक्ते सेहुण्डदुग्धे सिक्तेन स्वल्पेन तूलकेन सुदृढं तनु वर्तितं सूत्रमादाय लेपयेत् । एवं सप्तधा लिप्तमथ शुष्कं तत् छेदनसमर्थं भवति । प्रयोगकाले सावधानता न्यूनाधिकच्छेदभयात् । क्षारसूत्रबन्धनं च यावच्छेदो न स्यात् तावत् प्रतितृतीयमहः ईषद्गाढतरीक्रियते ॥५२७-५३०॥

कृष्णसर्पविषस्य आहरणविधिः।

शुक्तिकां तालपत्रेण खर्जूरस्य दलेन वा।
आच्छाद्य सर्वतो दीर्घयष्टिकायां तु बन्धयेत् ॥५३२॥
कृष्णसर्पो यथा रोषात् तालपत्रे दशेत्तथा।
निदध्यात् कृष्णसर्पस्य सम्मुखं यष्टिकामिमाम् ॥५३३॥
निदध्यात्तावदेवं तु बहुवारं दशेद्यथा।
शुक्तिकासञ्चितं सर्पविषं त्वथ समाहरेत् ॥५३४॥
पुनः पुनः कृष्णसर्पं रोपयन् भिषजां वरः।
समाहरेद्विषं त्वेवं सावधानतया सदा ॥५३५॥

कृष्णसर्पविषस्य शोधनम्।

तैलाक्तशुक्तिकामध्यसञ्चिते जङ्गमे विषे।
पादांशं सार्षपं तैलं न्यस्य घर्मे विशोषयेत् ॥५३६॥
जायते पीतवर्णं तन्निदाघे परिशोषितम्।
कृष्णसर्पविषं त्वेवं शुद्धिमायात्यनुत्तमाम् ॥५३७॥

कृष्णसर्पविषस्य गुणाः।

कृष्णसर्पविषं तीक्ष्णं मह्योष्णमतिदारुणम्।
पित्तप्रकोपणकरं तथा दाहकरं परम् ॥५३८॥
आसन्नमृत्युकालोत्थसंज्ञालोपप्रणाशनम्।
श्वासकृच्छ्रप्रशमनं तथा श्लेष्मविशोषणम् ॥५३९॥
हृद्दौर्बल्यसमुद्भूतं महात्ययिकलक्षणम्।
अवसादं निहन्त्याशु निश्चितं करणाश्रितम् ॥५४०॥
प्रणश्यन्नाडिकां घोरां शीतपादकरान्विताम्।
श्वासकृच्छ्रादिसंयुक्तां विनिहन्ति विषूचिकाम् ॥५४१॥
निरुक्तलक्षणोपेतं सन्निपातं व्यपोहति।
शीताङ्गसन्निपातघ्नं हृदुत्तेजनकृत्परम् ॥५४२॥

कृष्णसर्पविषम्—विषाहरणप्रकारः शिष्यबुद्धिवैशद्याय। वाग्भटस्तु प्रकारान्तरमामनौ। तत्तु बहुलमनुपयुक्तत्वात् उपेक्षितः, नवीनोद्भावितश्च बहुगुणसुलभः प्रकटित इति ॥५३१-५३५॥

कृष्णसर्पविषशोधनम्—निगदव्याख्यातम् ॥५३६-५३७॥

कृष्णसर्पविषगुणा—आसन्ने मृत्युकाले समुत्थो यः संज्ञालोपः तस्य प्रणाशनम्। करणाश्रितम् इन्द्रियाश्रयम्, निरुक्तलक्षणमिति संज्ञालोपश्वास-

शीतगात्रश्वासकृच्छ्रप्रणश्यन्नाडिकादिषु ।
सन्निपातसमाकारलक्षणेषु भवत्सु तु ॥५४३॥
अन्येष्वपि च रोगेषु नूत्नेष्वात्ययिकेषु च ।
कारस्करसमायुक्तैः प्रयोगैर्विविधैस्तथा ॥५४४॥
कस्तूरीभैरवाद्यैश्च न सिद्ध्यन्ति गदा यदा ।
निष्फला स्याद् यदा चैव मृतसञ्जीवनी सुरा ॥५४५॥
तदैव कृष्णसर्पस्य विषं योगेषु योजितम् ।
प्रयुञ्जीत भिषग्वर्यः सावधानतया सदा ॥५४६॥

कृष्णसर्पविषस्य निषेधः ।

न बालेषु न वृद्धेषु न तथा राजयक्ष्मिषु ।
न संन्यासे न मूर्च्छाये न जीर्णज्वरजर्जरे ॥५४७॥
जीर्णामयप्रजीर्णेषु रक्तपित्तिषु नैव च ।
न क्षीणेषु प्रयुञ्जीत कृष्णसर्पविषं भिषक् ॥५४८॥

कृष्णसर्पविषस्य आमयिकः प्रयोगः ।
सूचिकाभरणरसः ।

कृष्णसर्पविषं शुद्धं माषकद्वयसंमितम् ।
रसाहिगन्धकविषं पृथक् माषद्वयोन्मितम् ॥५४९॥
छागमायूरवाराहमात्स्यपित्तैस्तु पेषयेत् ।
सम्मर्द्यार्द्रकतोयेन यामैकमतियत्नतः ॥५५०॥
कारयेद्वटिका वैद्यः क्षुद्रसर्षपसंमिताः ।
समाख्यातो रसोऽयं तु सूचिकाभरणाह्वयः ॥५५१॥
सन्निपातसमाक्रान्तलोकानुग्रहकाम्यया ।
आविष्कृतो रसोऽयं तु भैरवेण महात्मना ॥५५२॥
क्षतादिवर्जितकरस्तथा नीचनखः पटुः ।
वटीनिर्मापकश्चास्य कर्तव्यः परिचारकः ॥५५३॥

कृच्छ्रेन्द्रियावसादप्रणश्यन्नाडिकादिकम् । कस्तूरीभैरवस्तन्त्रान्तरेषु प्रसिद्धः । तदैवेति नियमः प्रयोगयोग्यकालनियमज्ञापनाय । शिष्टं निगदव्याख्यातम् ॥

सर्पविषप्रयोगनिषेधे—जीर्णामयप्रजीर्णेष्विति जीर्णव्याधिभिः क्षीणबलमांसादिषु ॥५४७-५४८॥

सूचिकाभरणरसः—रसः पारदः, अहिः नागः, विषं अमृतम् । भैरवेण तदाख्येन रससिद्धेन । क्षतादिवर्जितकर इति विषसंचारो यथा न स्यात् शरीरे ।

रसं नखान्तसंलग्नमपनीय शलाकया ।
प्रक्षालयेत्करौ कामं भूयो भूयो मलारिणा ॥५५४॥

अस्य गुणाः ।

सूचिकाभरणो ह्येष सन्निपातविनाशनः ।
विषूचिकाहरः कामं श्वासकृच्छ्रापहः परम् ॥५५५॥
कृष्णस्याहेर्विषगुणनिर्दिष्टेषु तु लक्ष्मसु ।
प्रयुञ्जीत विशेषेण रसतन्त्रविचक्षणः ॥५५६॥
रसोऽयं खलु दातव्यः शृङ्गवेरस्य वारिणा ।
आरक्तास्यश्च रक्ताक्षस्तीव्रतापयुतो यदि ॥५५७॥
न स्याद्रोगी तु होरार्द्धं वटीं दद्यात्ततोऽपराम् ।
दध्योदनं च दातव्यं पथ्यमत्र विजानता ॥५५८॥
आरक्ताक्षं रक्तवक्त्रं तीव्रतापसमन्वितम् ।
विज्ञाय रोगिणं वैद्यः स्नपयेच्छीतलाम्बुना ॥५५९॥
शीताम्बुसिक्तवस्त्रेण भूयोभूयः प्रयत्नतः ।
आच्छादयेन्मस्तकं तु व्यथादाहप्रशान्तये ॥५६०॥
कृष्णसर्पविषस्यात्र तीव्रतापादिकेषु तु ।
समुत्पन्नेषु चिन्हेषु न युञ्जीत पुना रसम् ॥५६१॥
कृष्णसर्पविषोपेतरसेषु तु विशेषतः ।
एष एव विधिः कार्यो रसतन्त्रविशारदैः ॥५६२॥

द्वितीयः सूचिकाभरणरसः ।

विषं सर्पविषं शङ्खविषं माषमितं पृथक् ।
विशोधितं हिङ्गुलञ्च माषकत्रयसंमितम् ॥५६३॥
सम्पेष्य पञ्चपित्तेन वटिकाः सर्षपोन्मिताः ।
निर्माय विनियुञ्जीत सावधानतया भिषक् ॥५६४॥
रसोऽयं तु समाख्यातः सूचिकाभरणाह्वयः ।
तत्तन्निर्दिष्टरोगेषु पूर्ववद्गुणकारकः ॥५६५॥

मलारिणा फेनकेन 'Soap' इत्याङ्गलभाषाप्रसिद्धेन ॥५४६-५५४॥

अस्य गुणाः प्रयोगप्रकारश्च सुगमपाठः ॥५५५-५६२॥

अथापरः सूचिकाभरणः—विष वत्सनाभः, शङ्खविषं श्वेतमल्लविषम् । पञ्चपित्तेनेति—पञ्चपित्तं यथा—"वराहच्छागमहिषमत्स्यमायूरपित्तकम् । पञ्चपित्तमिति ख्यातं सर्वेष्वेव हि कर्मसु" ॥५६३-५६५॥

विसूचीध्वंसनरसः।

कृष्णसर्पविषं शुद्धं विषं पारदगन्धकम्।
सौभाग्यं नागरं ताप्यं मृतं माषमितं पृथक् ॥५६६॥
विशोधितं च दरदं सर्वेषां समभागिकम्।
समादाय ततः खल्वे मर्दयेन्निम्बुकाम्भसा ॥५६७॥
वटिकाः कारयेद्वैद्यः श्वेतसर्षपसंमिताः।
रसोऽयं तु समाख्यातो विषूचीध्वंसनाह्वयः ॥५६८॥
विषूचीध्वंसनरसो विषूचीविनिषूदनः।
शीतपादकराद्युग्रलक्षणेषु सुखावहः ॥५६९॥
सूचिकाभरणोद्दिष्टविधानेन भिषग्वरः।
विषूचीध्वंसनरसं प्रयुञ्जीत प्रयत्नतः ॥५७०॥

मृतसञ्जीवनरसः।

कृष्णसर्पविषं शुद्धं विषं ताप्यं च टङ्कणम्।
दरदं रसगन्धं च तालं माषमितं पृथक् ॥५७१॥
छागमायूरवाराहमत्स्यपित्तेन भावयेत्।
निर्मापयेत्तु वटिकाः क्षुद्रसर्षपसंमिताः ॥५७२॥
आसन्नमरणान् मर्त्यान् यतः सञ्जीवयत्यलम्।
अतो रसोऽयमाख्यातो मृतसञ्जीवनाह्वयः ॥५७३॥
श्वासं प्रलापं बाधिर्यं मूकतां हिमगात्रताम्।
रसोऽयं नाशयेत्तूर्णमासन्नमरणाश्रयाम् ॥५७४॥

## रक्तचित्रकशोधनम्।

रक्तचित्रकमूलं तु चूर्णतोये निमज्जयेत्।
ततो निदाघसंशुष्कं शुद्धिमायात्यनुत्तमाम् ॥५७५॥

## वृद्धदारकशोधनम्।

वृद्धदारकबीजानि दोलायन्त्रे तु यामकम्।
स्विन्नानि गव्यपयसा विशुद्ध्यन्ति न संशयः ॥५७६॥

विषूचीध्वंसनरसः—ताप्यं माक्षिकम्, दरदं हिङ्गुलम्। स्पष्टमन्यत् ॥

मृतसंजीवनरसः—विषं वत्सनाभः, तालं हरितालम् ॥५७१-५७४॥

रक्तचित्रकमूलादिशोधनपाठाः—स्पष्टार्थाः। केचित्तु एरण्डबीजमरिचापिप्प-
लीनामपि शुद्धिं स्मरन्ति—तत्र च एरण्डबीजं नारिकेलोदकेन स्विन्नं, मरिचञ्चा-

## निम्बूकबीजशोधनम् ।

अपामार्गकषायेण दोलायन्त्रे तु यामकम् ।
स्विन्नानि निम्बूबीजानि विशुद्ध्यन्ति विशेषतः ॥५७७॥

## हिङ्गुशोधनम् ।

रामठं समशुद्धाज्यसंयुतं दर्विकागतम् ।
विपक्वमग्नितापेन शुद्धिमायात्यनुत्तमाम् ॥५७८॥

## गुग्गुलुशोधनम् ।

चतुर्गुणे गव्यदुग्धे गुग्गुलुं स्वेदयेद् भृशम् ।
वस्त्रपूतं विधायाथ मलं वस्त्रस्थमुत्सृजेत् ॥५७९॥
दुग्धं शीतं तु विज्ञाय दुग्धपात्रतलस्थितम् ।
समाहरेद् गुग्गुलुं तु सर्वदोषसमुज्झितम् ॥५८०॥

### ग्रन्थसमाप्तिकालः ।

खेभग्रहेन्दुप्रमिते श्रीमद्विक्रमवत्सरे ।
चैत्रे कृष्णत्रयोदश्यां ग्रन्थ एष समग्रथि ॥५८१॥
विभासयति मेदिनीं दिनमणिस्तु यावत्परं
तथा गगनमण्डले तुहिनदीधितिर्यावते ।
भिषग्वरमहोदयाः खलु रसागमाध्यायिन-
स्तथा रसतरङ्गिणीमिह पठन्तु तावत्परम् ॥५८२॥

इति गढपालमण्डलान्तर्गतश्रीनगरनिकटवर्ति-सोला-ग्रामनिवासिना सदानन्दशर्म्मणा
विरचितायां रसतरङ्गिण्यां विषोपविषादिविज्ञानीयो नाम चतुर्विंशस्तरङ्गः ।

॥ समाप्ता चेयं रसतरङ्गिणी ॥

मल्लकेन भावितं, पिप्पली च चित्रकरसैः भाविता शुद्ध्यति इति ॥५७५-५७८॥

गुग्गुलुशोधनं मन्दाग्निना विधेयम् । स्पष्टपाठमन्यत् ॥५७९-५८०॥

ग्रन्थसमाप्तिकालः—खं व्योम शून्यवाचकम्, इभा दिग्गजा अष्टौ, ग्रहा नव, इन्दुश्चन्द्रः एकत्वसंख्यावाचकः, अङ्कानां वामतो गतिरिति न्यायात् १९८० वैक्रमवत्सरे चैत्रे कृष्णत्रयोदश्यामेष रसतरङ्गिणीनामको ग्रन्थ आचार्यैः समग्रथि रचित इत्याशयः ॥५८१॥

विभासयतीत्याशीः प्रार्थनम् । दिनमणिः सूर्यः । तुहिनदीधितिः चन्द्रः । रसागमाध्यायिनः रसतन्त्रपाठकाः ॥५८१-५८२॥

इति स्फुटतरागमप्रथितसम्प्रदायाध्वना यथामति चलन्निह गुरुकृपावलम्बकृताम् ।
तरङ्गिणिप्रसादनीमुपनयामि श्रद्धाधनः प्रसीदतु निरन्तरं मयि [illegible] : स नारायणः ॥

इति जालन्धरमण्डलान्तर्गतजाटलानगरवासिना आयुर्वेदाचार्य श्रीहरिदत्त
शास्त्रिणा निर्मिता रसतरङ्गिणीप्रसादनी ॥

# अनुक्रमणिका

---